# श्रीगोविन्दालोकः

**Published by**
Prasaranga,
Karnataka Samskrit University
Benglore.



**First Impression-** 2023

**Pages -** 335+22=357

**Copies-100**

**Price- 750/-**

**Cover design-** Kartika joshi

**Page layout-** Dr. Susheelendracharya Goggi

**ISBN NO - 978-81-958208-2-5**

**Printed by**- Ananya Printers, Benglore

**Publication coordinators-**

Dr.Govinda B, Deputy Director

Dr.Mallana Gowda, Asst. Director

# कुलपतिवचांसि

विद्वत्कुलतिलकभूताः भारतसर्वकारेण 'पद्मश्रीः' इति बिरुदेण पुरस्कृताः बन्नञ्जे गोविन्दाचार्याः न केवलं माध्ववेदान्ते प्रसिद्धाः विद्वांसः, अपि तु षडङ्गसहिते वैदिकसाहित्ये, इतिहासपुराणेषु, भारतीयदर्शनेषु, तन्त्रविद्यासु, आधुनिकसाहित्ये, कलासु, कन्नडसाहित्ये, पाश्चात्य दर्शनेषु च पारङ्गताः विरला एव एतादृशाः विद्वांसः। एतेषां शास्त्रज्ञानं विशिष्टं विचारजनितं निष्कृष्टञ्च।

बन्नञ्जे गोविन्दपण्डिताचार्याः यथा ग्रन्थनिर्माणे असदृशाः तथा प्रवचन-कर्मणि अपि सुप्रसिद्धाः। जिज्ञासुजनचित्तहारिणी प्रवचनशैली तेषाम्। देश-विदेशेषु विद्यमानास्तदनुयायिनः तत्वशास्त्रबुभुत्सवः अन्तर्जालमाध्यमेन, आचार्याणां प्रवचनं श्रुत्वा इदानीमपि भक्तिमार्गगाः दृश्यन्ते। नास्तिकानपि आस्तिकमार्गे प्रवर्तयन्ती तदीयवाग्धोरणी आसीत्।तदीयवाचां श्रवणमात्रेण भक्तिभावः श्रोतृमनस्सु जागर्ति स्म इत्यत्र नास्तिसंशयलेशः।

एतादृशानां महतां विद्वद्वराणां बन्नञ्जे गोविन्दपण्डिताचार्याणां संस्कृत-कृतयः बह्व्यः विराजन्ते। तासां कृतीनां वैशिष्ट्यम् आचार्याणां वैदुष्यञ्च अवश्यमेव विद्वल्लोके प्रकाशनीयमिति अयं गोविन्दालोकः कर्णाटकसंस्कृत विश्वविद्यालयेन प्रकाश्यते इतीदमस्माकं भागधेयम्। ग्रन्थोऽयं राष्ट्रिय-अन्ताराष्ट्रियस्तरे विख्यातानां विदुषां लेखैः समलङ्कृतः। सम्पादकान् प्रो. मल्लेपुरम्.जि. वेङ्कटेशमहाभागान् आचार्य वीरनारायण पाण्डुरङ्गीमहाभागान् तथा आचार्य नारायणमहाभागान् च अभिनन्दामि ।

**प्रो.अहल्या. एस्**
**कुलपतिः,**
**कर्नाटकसंस्कृतविश्वविद्यालयः**

## सम्पादकीयम्

आधुनिककालीनकार्नाटविद्वत्कविषु मूर्धन्यतमः बन्नञ्जे गोविन्दाचार्यः (3.8.1936-13.12.2020)। हानगल्ल विरूपाक्षशास्त्रिभ्योधितगत-न्यायशास्त्राणां रजतपीठपुरस्थमध्वसिद्धान्तप्रबोधकमहाविद्यालये न्याय-अध्यापकानाम् अष्टमठाधीश्वराणां पाठनेन प्रथितयशस्कानां पडमन्नूरु-नारायणाचार्याणां द्वितीयः पुत्रोऽयं बाल्यादेव गीर्वाणभाषां शास्त्राणि च स्वपितृचरणेभ्यः परमपूज्येभ्यः भण्डारकेरिमठाधीशेभ्यः विद्यामान्यतीर्थेभ्य श्चाधिजगाम। स्वप्रतिभया वेदपुराणनिगमागमदर्शनकाव्यशास्त्रेषु कृतभूरि-परिश्रमः अनितरसाधारणीं वाग्धोरणीमासाद्य कर्नाटेषु स्वप्रवचनविभवेन प्रसिद्धिमाप। एतस्याचार्यस्य प्रवचनरसमास्वादयितुमहमहमिकया धावन्ति स्म जनाः। भगवद्गीता-श्रीमद्भागवतादिपुराणानाम् आस्वादने जनेषु भक्ति-रसाविर्भावने च नितरां हेतुरासीदस्य प्रवचनम्। कार्नाटभाषया गीर्वाणवाण्या च सुन्दरकाव्यग्रथने प्रभुरयमासीत्। उभयभाषाकवेरस्य पद्यान्यधुनापि गायन्ति भक्त्या जनाः। श्रीमदानन्दतीर्थभगवत्पादेषु नितरां भक्तियुक्तस्यास्य समुचितैव हृषीकेशतीर्थलिखितमातृकाधारेण सर्वमूलग्रन्थसंपादनकुशलता। खण्डार्थनिर्णये जयन्तीकल्पे प्रणवकल्पे दूषणत्रये मध्वविजये उपनिषत्सु महाभारततात्पर्यनिर्णये तत्त्वप्रदीपिकायां संग्रहरामायणे चानेन विरचिताः टीकाः सहृदयविद्वन्मनांस्याह्लादयन्ति। घृत-भाग्य-कुविदङ्ग-नासत्य-अपाला-घर्म-अम्भृणी-मन्युद्वय-सपत्नघ्न-अस्यवामीय-प्राणाग्निसूक्त-तापनीयोपनिषत्-शतरुद्रियादीनां च नूत्न-व्याख्यानेन भूषितमनेन वैदिक-वाङ्मयम्। उपनिषदां च रहस्यार्थाविष्करणे असाधारणं प्रभुत्वमासीदस्य। शाकुन्तलसमीक्षा कादम्बरीरूपान्तरं मृच्छकटिककार्नाटरूपान्तरं च काव्यरसिकानां मनांस्यावर्जयन्ति। विशिष्यानेन मध्वाचार्यशास्त्राणि

सेवितानि, सर्वमूलग्रन्थेष्वनितरसाधारणी गतिरासादिता। तदीयसूक्ष्मार्थ-ग्रहणशक्तिः, तस्य प्रतिपादनसौष्ठवं चाकर्षति तत्त्वजिज्ञासून्। मध्वाचार्य-ग्रन्थाभ्यास-तत्प्रचारावेवास्य जीवनस्य लक्ष्यभूतावास्ताम्। आङ्ग्लादि भाषापरिचयोऽप्यनेनासादितः आसीत्।

माध्वमठाधिपास्तस्य मध्वाचार्यसेवया सन्तुष्टान्तरङ्गाः विद्यावाचस्पतिः इत्यादीनुपाधीन् प्रदायैतं बहुधान्वगृह्णन्। तस्यास्य प्रतिभां गीर्वाणवाणीसेवां च समभिलक्ष्य भारतशासनं पद्मश्रीः इत्युपाधिना पुरश्चकारेमम्। कर्नाटक-संस्कृतविश्वविद्यालयश्च डि.लिट् उपाधिना अमुं सममानयत्।

गोविन्दाचार्यस्य पिता पडमन्नूरुनारायणाचार्यः महान् विद्वान्, तदीयौ द्वौ पुत्रौ रामाचार्य-गोविन्दाचार्यनामानौ प्रख्यातौ आस्ताम्। तत्रापि गोविन्दाचार्यः शास्त्रेषु कृतभूरिपरिश्रमः। तथापि अग्रे तदन्ववायीयाः अनाघ्रातशास्त्रगन्धा इति विद्वत्परंपरा अत्रैव क्षीयते न वेत्यत्र काल एव प्रमाणम्। स्वकीया सन्ततिर्नैव शास्त्राणि शिक्षिता गोविन्दा-चार्येणेति स्वयं गोविन्दाचार्यस्यैवायं दोषः, नान्यस्य कस्यचित्।

तदेतस्य कर्नाटकविकुलतिलकस्य कृतीनां विषये नानादेशीयानां विदुषां विमर्शं प्रशंसां चैकीकृत्य कश्चिद्ग्रन्थः शीघ्रं प्रकाशनीय इत्यस्मत्प्राक्तन-कुलपतीनानां प्रो.मल्लेपुरं जि. वेंकटेशमहोदयानां प्रेरणया स्वीकृतोयमुद्यमः।

यद्यपि विष्ण्वर्चनाख्यं वेदव्याख्यानं प्रणेतुं कृतमनसो मम नासीदत्र कश्चित्समयः। तथापि बन्नञ्जे गोविन्दाचार्यस्य विषये आदरातिशयेन कर्नाटकदेशीयस्यास्य विदुषः सर्वविद्वज्जनसाधारणीकरणमस्मत्कर्तव्यं, तद्विषये विशेषविमर्शोऽपि विद्वत्कर्तव्यविशेषः, कर्नाटकदेशीयस्यास्य विश्व-विद्यालयस्य कर्तव्यविशेषोऽपीति मत्वा यथाकथञ्चिदस्मिन् प्रवृत्तोऽहम्।

तत्रापि कार्ये बहवो विघ्नाः। चिरादपि कैश्चिल्लेखो न प्रेषित इति महानेव विलम्बोऽपि दैवकृत आसीत्तथापि दैवेन इदानीं वा संपन्नादस्मात् कार्यात् निवृत्तो निर्वृतश्च 'क्लेशः फलेन हि पुनर्नवतां विधत्ते' इत्युक्तवन्तं कालिदासं स्मरामि।

अत्र प्रथमतः श्रुतिव्याख्यानानि, पुराणादिव्याख्यानानि, पश्चात् सर्वमूलव्याख्यानानि, ततश्च साहित्यादिशास्त्रव्याख्यानानीति क्रम आदृतः इति ध्यातव्यम्।

अनेके खलु शास्त्रेषु कृतभूरिश्रमाः ग्रन्थमिमं स्वकीयैरभिप्रायैः समभूषयन्।

केन्द्रीयसंस्कृतविश्वविद्यालयस्य कुलपतयः अस्मन्मित्रमणयः प्रो. श्रीनिवासवरखेडीमहोदयाः, व्याकरणादिशास्त्रेषु निष्णाताः देशविदेशेषु ख्याताः विद्वन्मणयः एच्.वि.नागराजरावमहोदयाः, सकलशास्त्रपारदृश्वानो शस्मद्गुरवः हरिदासभट्टाचार्याः, शतावधानिनो रा.गणेशवर्याः, द्वैतवेदान्त- पारदृश्वानः सग्रि राघवेन्द्रोपाध्यायाः, मम गुरवः विद्वद्वर्याः गुरुप्रसादाचार्याः, न्यायादिशास्त्रेषु कृतभूरिपरिश्रमाः उमाकान्तभट्टमहोदयाः, मम गुरवः विद्वद्वर्याः रामविठलाचार्याः, दर्शनशास्त्रमर्मज्ञाः प्रो.पेन्ना मधुसूदनमहाभागाः, साहित्यशास्त्रमर्मज्ञाः लक्ष्मीनारायणभट्टाः, पूर्णप्रज्ञसंशोधनमन्दिरस्य निर्देशकाः नागसंपिगे आनन्दतीर्थाचार्याः, श्रौतस्मार्तकर्मानुष्ठानदक्षाः वंशीकृष्णघनपाठिनः, गोविन्दाचार्येभ्योवाप्तविद्याः द्वैतवेदान्तविशारदाः उडुपि रामनाथाचार्याः तथा चिप्पगिरि नागेन्द्राचार्याश्च, साहित्याद्यनेकशास्त्रमर्मज्ञाः हेच्.के. सुरेशाचार्याः, श्रौतसंप्रदायविदः प्रो.सुन्दरेश्वरन् महोदयाः, पूर्णप्रज्ञविद्यापीठस्य प्राचार्याः मम सहपाठिनः सत्यनारायणाचार्याः, योगशास्त्रे कृतभूरिपरिश्रमाः डा. जयरामन् महाभागाः, राष्ट्रियसंस्कृतविश्वविद्यालये द्वैतवेदान्तप्राध्यापकाः प्रो.नारायणाचार्याः, राष्ट्रियसंस्कृतविश्वविद्यालये न्यायप्राध्यापकाः

प्रो.संपत्कुमाराचार्याः, गोविन्दाचार्यशिष्याग्रगण्याः विजयसिंहाचार्याः, बेलूरुमठस्थरामकृष्णमिशन् विवेकानन्दमानितविश्वविद्यालयीयसंस्कृतविभागाध्यक्षाः जपसिद्धानन्दस्वामिनः, गोविन्दाचार्याणाम् अत्यन्तं प्रिया वाग्मिनः कृष्णराजकुत्पाडिमहोदयाः, रूप्यपीठपुरे द्वैतवेदान्तप्राध्यापकाः डा.षण्मुख हेब्बारमहोदयाः, केन्द्रीय-संस्कृतविश्वविद्यालयस्य जम्मुपरिसरस्थाः डा. दयानाथमहोदयाः, व्यासतीर्थ-विद्यापीठस्य प्राचार्याः डा.श्रीनिधिप्याटिमहोदयाः, कविवर्याः वेंकटेशकुलकर्णिमहोदयाः, वाग्मिप्रवराः डा.श्रीहरिवाळवेकर महोदयाः, तन्त्रशास्त्रे कृतभूरिपरिश्रमाः कृष्णनूरित्तायमहोदयाः, ज्योतिष्यादि-शास्त्रमर्मज्ञाः रवीन्द्र हेर्गमहोदयाः, व्याकरणसाहित्यादिशास्त्रविद्वांसः राजकृष्णपेजत्ताय महोदयाः, वाजसनेयविद्वद्वर्याः जयपुरस्थाः डा. शम्भुकुमार-झामहोदयाः, द्वैतवेदान्तसाहित्यशास्त्रयोः कृतभूरिश्रमः मम प्रियः श्रेयःप्रसन्नाचार्यः, गोग्गि डा.सुशीलेन्द्राचार्यः गोविन्दाचार्यशिष्यपरंपराप्रविष्टा रावोपाख्या अनूषा इत्येते मयि प्रीत्या गोविन्दाचार्याणां संस्कृतकृतीः गहनमवलोक्य महता परिश्रमेण मदीयचोदनेन च स्वकीयान् अभिप्रायविशेषानत्र प्राचीकशन् ।

तेन गोविन्दाचार्याणां शास्त्रेषु गभीरं पाण्डित्यं, परिश्रमः, सूक्ष्मेक्षिका, नूतनदृष्टिः इत्यादयो विषयाः सर्वगम्या भवन्ति । गुणी खलु गुणं वेत्ति, न तु निर्गुणस्तदन्वयः । विद्वांसश्चात्र स्वतन्त्राः गुणदोषचिन्तनविधौ । विद्वांसः खलु शाणा मणिगुणनिर्णये ।

विदुषां साफल्ये खलु विद्वांसः प्रमाणम् । यथोक्तं कालिदासेन --

**‘हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा’’** इति,

**‘आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम्’’** इति च ॥

तदत्र विदुषां स्वतन्त्रेषु विचारेषु गुणदोषचिन्तनविधौ नाविद्वानधिक्रियते परिवादे परिचर्चायां च । भाव्यं च तैर्मूकैरेव । ते खलु गुणदोषचिन्तनसभायां

न शोभन्ते हंसमध्ये बका इव। तदत्र तूष्णींभावमास्थाय स्वकीयमेव स्थानमास्थातव्यमिति तेपि निवेद्यन्ते।

किंचात्र तदीयजीवनविषये एतद्वक्तव्यम्। बाल्यादारभ्य स्वतन्त्रविचार-प्रवृत्तिमानयं स्वपितृचरणेभ्यः अस्मद्गुरुभ्यो विद्यामान्यतीर्थेभ्यश्च चन्द्रिका दिग्रन्थानधिजगे। काले काले अस्मदाचार्याः विश्वेशतीर्था अप्यस्य ग्रन्थाधिगमे कारणभूता आसन्। एवं समधिगतव्युत्पत्तिः सन्नयं प्रायः अन्यान् गुरुमुखादनधीतान् तत्तच्छास्त्रीयग्रन्थान् स्वयमेवाभ्यास्यत्। सर्वमेव वाङ्मयं हृदयेकार्षीत्। वाचोविधेयमासीद्भारतीयवाङ्मयमिति नूनं विद्यावाचस्पतित्वं स्थानेस्मिन्। वैदिकवाङ्मये पुराणेषु तन्त्रेषु काव्ये काव्यशास्त्रे व्याकरणे द्वैतप्रमेयशास्त्रे चास्याप्रतिहता गतिरासीत्। आङ्ग्लादिभाषापरिचयः, पत्रकारिताक्षेत्रे कार्यानुभवः, मध्वाचार्य-रामानुजाचार्य-भगवद्गीतादिचलच्चित्रनिर्माणोपयुक्तकथा-संभाषणादि-निर्माणानुभवः, आधुनिककाव्यशास्त्रपरिचयः, आधुनिककविसंपर्कः, पाश्चात्त्यविद्वद्भिः सह संवादः, काम-संगीत-नाट्यादिशास्त्रपरिचयः इत्यादयो विशेषाः अस्य बहुप्रज्ञतायास्साक्षिभूता आसन्। ध्यानाभ्यासः योगशास्त्राभ्यासः इत्यादयः प्राणसूत्रादिप्रणयने कारणभूताः।

एतत्सर्वमेवातिरिच्य वैदिकवाङ्मयप्रचारासक्तिः, मध्वाचार्येषु भक्तिः, सर्वमूलग्रन्थानां व्याख्यानचातुर्यमिति गुणाः प्रधाना आसन्। अत एव प्रायः तदीयकृतिषु सर्वत्रैव मध्वाचार्यप्रभावः बाढं संलक्ष्यते। मध्वाचार्यान् विहाय अन्यत्किमपि तस्य नैवासीदिति नातिशयितोक्तिः। तदीया अत्यपूर्वा स्मृतिशक्तिः, निरूपणकौशलं वाक्पाटवं सर्वानेवाभिभवति स्म।

अत्रेदं विशिष्य वक्तव्यं तदीयहृषीकेशतीर्थीयपाठसंपादनविषये। पलिमारुमठे श्रीहृषीकेशतीर्थलिखितः तालपत्रग्रन्थ आसीत्। तदनुसारेण

मध्वाचार्यरचितसर्वमूलग्रन्थानां परिशोधनं करणीयमिति अखिलभारतमाध्व महामण्डलस्याभिलषितमासीत्। तत्कार्यं विहितं गोविन्दाचार्ये। स च तत्कार्यं सम्यङ्गिरुवाहेत्यत्र नास्ति संशयलेशः। परन्तु हृषीकेशतीर्थीयतालग्रन्थे न सर्वेप्याचार्यग्रन्था आसन् गीताभाष्यादयः, ते च प्रतनतरमातृकाधारेण समशोध्यन्त। तत्रोपलब्धौ तिथिनिर्णयन्यासपद्धती अपि आचार्यग्रन्थावेवेति निरचिनोत्। स एव च मध्वाचार्याभिप्रेतः मूलपाठः अन्यस्सर्वोप्यपपाठ इति प्रायः पञ्चाशद्वर्षपर्यन्तमिममेव डिण्डिममाघोषयामास गोविन्दाचार्यः। इदमेव तदीयजीवनस्य मुख्यं यशस्साधनमिति च मेने सः।

अयं च पाठः न जयतीर्थसंमतः, किन्तु पद्मनाभतीर्थादिपरसम्परया प्राप्त अन्य एव कश्चिन्मूलकोशः जयतीर्थोपयुक्त इति तद्ग्रन्थदर्शिनां स्पष्टम्, स्पष्टमेव च मया प्रतिपादितं मदीयलेखनेपि यत् हृषीकेशतीर्थीयत्वेन मुद्रितः पाठः जयतीर्थैः अपपाठत्वेन तिरस्कृत इति च।

किंच इदानीं यो मुद्रितः पाठः न स सर्वोपि जयतीर्थाभिमतः, न वा अन्येषां टिप्पण्यादिकृतां संमतः, लिपिकृत्प्रमादादिना अन्यस्यापि बहुलम् उपलम्भात्। टीकाटिप्पण्यादिविमर्शेन शुद्धः पाठः अन्योऽस्ति इति स्पष्टमेव।

किंच हृषीकेशतीर्थीयपाठः लिपिकारेषु संभावितदोषग्रस्त एव। तत्र व्याख्याभागस्यादर्शनात्। परन्तु न जयतीर्थीयपाठस्तथा व्याख्यानत्वात्।

किंच हृषीकेशतीर्थीयपाठः अनेकत्र त्रिविक्रमपण्डिताचार्यपाठादपि भिद्यते एव। कथं तर्हि आचार्यसाक्षाच्छिष्यत्रिविक्रमपण्डिताचार्यव्याख्याविरोधिनः मूलपाठत्वम्।

किंच हृषीकेशतीर्थीय-जयतीर्थीयपाठयोरयमेव भेदो दृश्यते यत् उदाहरणवाक्यानि दीर्घाण्युपलभ्यन्ते जयतीर्थीयपाठे प्रायः, न तथा हृषीकेशतीर्थीये इति। क्वचिदेव तु प्रमेयभेद इति।

किंच तत्त्वसंख्याने स्वतन्त्रमस्वतन्त्रमित्येव ग्रन्थारम्भः जयतीर्थीये। हृषीकेशतीर्थीये तु 'रमाविरिञ्चिशर्वादिशक्रादीतरसुक्रमम्। मुक्तौ चेदङ्गुणैः सर्वैर्यद्वशे नौमि तं हरिम्।।' इति ग्रन्थारम्भः। परन्तु- प्रमेयनवमालिका-व्याख्याने तत्त्वसंख्यानस्य स्वतन्त्रपदेनैव ग्रन्थारम्भमुदाहृत्य तेनैव न्यायेन प्रमेयनवमालिकायामपि पृथङ्मङ्गलाभावो न दोषायेति वदन्तः रघुवर्यतीर्था एव गोविन्दाचार्यमुद्रिते हृषीकेशतीर्थीयत्वेन विभाविते रमाविरिञ्चेत्यादि-श्लोकयुक्तपाठे स्वासंमतिं समसूचयन्। गोविन्दाचार्यः खलु हृषीकेश-तीर्थीयाभावे तदनुसृत्य लिखितं रघुवर्यतीर्थीयमेव मूलकोशमवलम्ब्य पाठनिर्णयोद्यतः। तेन न तस्य प्रामाणिकता इति ज्ञायते।

तथापि अभ्युपेत्यापि गच्छामः हृषीकेशतीर्थीय एव मूलपाठोस्तु। अस्तु वा जयतीर्थादयः पाठेषु स्खलिता अपि। ते हृषीकेशतीर्थीयमज्ञात्वा यथोपलब्धमेव पाठं मूलपाठत्वेन स्वीकृत्य व्याख्या रचयामासुरिति कल्पनं तु कथंचिन्मनसि आरोहेदपि। दोषाणां मनुष्यस्वभावत्वात्। परन्तु-

'भगवत्पादकृतानां सर्वमूलग्रन्थानां शुद्धप्रायः पाठ आचार्यगोविन्दोपज्ञ माविष्करणीय इति नियतिः। अत एव मूलपाठं स्वयं जानन्तोऽपि जयतीर्थव्यासतीर्थादयः तौळवमण्डले च वादिराजतीर्थादयः नाविश्चक्रुः। प्रत्युत प्रचलितमेव पाठमाश्रित्य व्याचक्रुः' (अस्मिन्नेव ग्रन्थे विजय-सिंहाचार्येणोल्लेखितं वचनम्) इति गोविन्दाचार्येण स्वमाहात्म्यप्रकटनोक्तिस्तु न केवलं स्वस्य, नापि केवलं जयतीर्थादीनां, अपि तु स्वतः मध्वाचार्यस्यापि विप्रलम्भकत्वं निरूपयति। तथाहि जयतीर्थादयः षड्भ्यः शतेभ्यो वत्सरेभ्यः अपपाठावलम्बनेन तज्जनितेन अशुद्धव्याख्यानेन च सज्जनान् व्यथयामासुः। ते किमर्थं तथा अकार्षुरित्युक्ते ज्ञात्वाप्यपपाठं गोविन्दाचार्ययशोर्थित्वेन सज्जनान् विप्रलम्भयामासुरित्येवोत्तरं वक्तव्यम्। मध्वाचार्येच्छां विना एतादृशं निगूहनं न संभवति। मध्वाचार्योपि केन कारणेन तथैवेयेष इति

प्रश्नस्यापि मध्वाचार्योपि गोविन्दाचार्ययशःख्यापनायैव एतावत्पर्यन्तं यस्य कस्यापि सज्जनस्य हस्ते शुद्धपाठो न गच्छेदितीयेष इत्येव वक्तव्यम्। कथं परमकारुणिकस्य मध्वाचार्यस्येदृशी निष्करुणता सप्तशतकपर्यन्तं सर्वे सज्जनाः क्लिश्येयुरिति। कथमहो विप्रलिप्सा मध्वाचार्यस्य जयतीर्थादीनां वा स्यादिति किंचिन्मात्रं वा बुद्धिमद्भिर्विचारणीयम्।

तदेवं यद्यपि हृषीकेशतीर्थीयः पाठः तैः महता श्रमेण संशोधितः, तथापि तत्र पाठे सर्वेषां न प्रामाणिकताबुद्धिरभूदिति तु निश्चप्रचम्। तत्र कारणमिदं, महानंशः हृषीकेशतीर्थीये नोपलब्ध आसीत् कालकवलितत्वेन। तद्यथा-गीताभाष्यं नोपलब्धम्, ऋग्भाष्यं कर्मनिर्णयाख्यः खण्डार्थनिर्णयश्च तथा। भागवततात्पर्यं तथा। कृष्णामृतमहार्णव-तन्त्रसारसंग्रह-यतिप्रणवकल्प-जयन्तीनिर्णय-न्यासपद्धति-तिथिनिर्णायाख्याश्चाचारग्रन्था नोपलब्धाः। तदेवं भागशोऽप्युपलब्धेषु ग्रन्थेषु लिपिकृत्प्रमादादिकमविगणय्यायमेव मूलपाठः, अन्ये सर्वेप्यपपाठा एवेति निर्णयस्सर्वथा असाधुरेव।

किंच प्राचीनकोशा इति प्रतनकोशा इति च बहुधा निर्दिष्टेष्वपि कोशेषु कस्मिन् कोशे कः पाठः इति कोशनाम्नां विशिष्य निर्देशाभावेन सर्वस्यास्य प्रामाणिकायां संदेहो जायते।

मया 2003 वर्षे एवैते विचाराः पृथगेव मुद्राप्य गोविन्दाचार्याणां सकाशे प्रेषिताः कङ्बिदरीनारायणाचार्यद्वारा। ते तु सर्वमिमं मदीयलेखं पठित्वा वीरनारायणो बुद्धिमान् इत्युक्त्वा तूष्णीं बभूवुरिति बदरीनारायणाचार्याः मामवोचन्।

पूर्वे वयसि अन्ये सर्वे बभ्रमुरिति लिखितवानाचार्यः चरमे वयसि 'तेषां सर्वेषां क्षमामभ्यर्थ्य' इति तत्त्वप्रदीपोपोद्घाते व्यलिखदिति परिणतिं सूचयति।

अस्त्वेतद्यथातथा। एकमात्रदोषस्य गुणसमुदयनिमग्नस्य नास्मदक्षि-प्रतिबन्धकता भवेदिति न्यायेन गोविन्दाचार्यस्य मध्वाचार्याणां विषये श्रद्धातिशयेन महती तदीयसेवा विहिता न त्वन्यस्य यस्य कस्यापि भाष्यकारस्येति माननीय एवायं गोविन्दाचार्योस्माकम्। बहवः खलु निष्पक्षपाताः पण्डिताः तदीयग्रन्थस्थस्य सर्वस्याङ्गीकारे अनुत्सुका अपि तदीय-ग्रन्थस्थान् कांश्चन वा विषयान् स्वीकुर्वन्त्येवेति न तिरोहितम्। अन्यैरस्पृष्टेषु बहुषु विषयेषु गोविन्दाचार्येण स्पृष्टेषु किं वा अनेन लिखितमित्येकवारं वा परामर्शं नूनं कुर्युरेव कृतधियोपि। अङ्गीकुर्युः सर्वं नाङ्गीकुर्युर्वा। सूक्ष्मेक्षिका तु तस्य सर्वैरङ्गीकार्यैव।

सर्वथा गोविन्दाचार्यस्य लेखनशैली वाग्धोरणी चेति द्वे अपि समन्ततो मध्वमतप्रसारे विशिष्य कारणभूते अभूतामिति सर्वैरङ्गीकरणीयमेव। तदीयग्रन्थोपजीविनामस्माकं तदीयमर्हणमपि कर्तव्यमेवेति कार्ये प्रवृत्तोहम्।

तद्विषये मदीयः गौरवविशेषः, तथा मद्विषये तस्याचार्यस्य स्नेहविशेषोपि अत्र कारणमेवेति न पृथग्वक्तव्यम्। यद्यपि बहोः कालाद्बहिःस्थोहमभूवम्। तस्माद्बेङ्गळूरुनगरे तेन सह मेलनं दुर्लभमेवासीत्। तथापि न मां व्यस्मरदाचार्यः। यदाकदाचिन्मां स्मरति स्मेति अनिलाचार्यः मामूचे। कदाचिदमेरिकादेशेपि कारणान्तरेण मां सस्मारेति ममाग्रजः सेतुरामोवादीत्। 2012 वर्षे तं मां चैकस्मिन्नेव मञ्चे उपवेश्य सममानयन् मल्लेपुरं वेंकटेशवर्याः तदानीन्तनकुलपतयः। बेङ्गळूरुनगरेपि पुनरागतोहं तमपश्यं मदग्रजेन पाण्डुरङ्गाचार्येण अनिलाचार्येण च सह। मध्ये तु क्वचन केनापि तत्कृतेन खिन्नोहं न तमपश्यम्। अन्ते तु तद्दर्शनं अस्माकं विश्वविद्यालये दीक्षान्तोत्सव समये तस्मै डि.लिट् उपाधिदानसंदर्भे आसीत् इति मदीयस्तेन संबन्धः। अहं च भिन्नमेव पन्थानमनुसरामि वेदव्याख्याविषये, तथापि नूनमेवानन्दिष्यन् मदीयां विष्ण्वर्चनां दृष्ट्वा यद्ययमजीविष्यत् अद्येत्यपि निश्चप्रचम्।

इदमिह विशिष्य वक्तव्यम्- स तु प्रतिभाविशेषसंपन्न आसीत्। बाल्यादेव स्वच्छन्दप्रवृत्तिरध्ययननियतिनन्यसाधारणो विपश्चिच्चासीत्। परन्तु अग्रे तेन कथं जीविका निर्व्यूढेति न विस्मर्तव्यम्। न खलु आचार्यः सर्वथा कुत्रचित् विद्यालये मठे विश्वविद्यालये वा अध्यापनवृत्तिमधिजगाम सकारणमेव। न वा केनापि तथा नियुक्त्यायासोपि विहितः। किन्तु उदयवाणि इत्याख्यदिन पत्रिकायां विशेषाङ्कसंपादकरूपेण जीविकां समपादयदाचार्यः बहुवर्षपर्यन्तम्। यद्यपि तत्कार्यालयाधिकृतैः ससंमानं सस्वातन्त्र्यं च स नियुक्तः, तथापि तत्र तत्कार्येष्वन्यतमदासीत् गासिपलेखनं नटनर्तकादीनां विषये। अहो कीदृशी पाण्डिती, कीदृशी जीविका। कीदृशी दुर्दशा पण्डितानामस्मद्देशे। न कोपि तं विश्वविद्यालयादिषु नियोक्तुमियेष। नापि गोविन्दाचार्यस्तथेयेष स्वातन्त्र्य-भङ्गभिया। तदुत्तरकाले भागवतभगवद्गीताद्युपदेशेन जीविकां जनप्रियतां च समपादयदाचार्यः। तदिदं कष्टं सुखं च। यदि कोपि तस्मै स्वतन्त्रां वृत्तिमदास्यत तर्हि तदीयं पाण्डित्यकर्म निर्विघ्नमभविष्यत्। इतोपि दीर्घाः कृतयः भागवतादिव्याख्यानानि च अकारिष्यन्त। नागराज राव्महोदयानां 'यदि तैः स्वतन्त्रं काव्यं संस्कृतभाषायां अरचयिष्यत तर्हि तत् कुमारसंभवेन नैषधीयचरितेन सहास्पर्धिष्यत' इति दुःखोद्गारस्यावकाशः नाभविष्यच्च। अहो दैवदुर्विपाकः। तदेतद्देशस्यास्य दौर्भाग्यमिदानीमप्य स्मादृशाः अपि असदृशे स्थाने नियुक्ताः मूर्खाणां सेवां विधाय स्वायुः कदर्थीकुर्म इति। नैतादृशी स्थितिरवालोकयिष्यत यद्ययममेरिकादिदेशेषु उदपत्स्यत इति चेखिद्यते चेतः। परन्तु न ते देशाः एतादृशस्य प्रगतस्य आचार्यस्योत्पत्तिस्थानतां यान्तीत्यपि निश्चप्रचमेव विदुषाम्।

तदत्र मां प्रेरितवन्तं मल्लेपुरं वेंकटेशमहोदयं अस्मत्कुलपतिमहाभागाम् अहल्यावर्यां विशिष्यास्मिन् सहकृतवन्तम् अस्मन्मित्रमणिं प्रो.नारायणाचार्यं

च स्मरामि । तथा मुद्रणकार्यनिर्वहणेन मामधमर्णीकुर्वन्तं डा.सुशीलेन्द्राचार्य-गोग्गिमहोदयं विद्वांसं आर्. सुदर्शनाचार्यं च एवमाकर्षकतया मुखपुटविन्यासं कृतवन्तं कार्तीक जोषी महाभागं भगवाननुगृह्णातु कृष्णाख्य इति संप्रार्थ्य विरमामि ।


**संपादकविद्वद्गणप्रतिनिधिः**

**आचार्यः वीरनारायणः पाण्डुरङ्गी**

**वेदान्तनिकायाध्यक्षः**

**कर्नाटकसंस्कृतविश्वविद्यालयः**

# विषयानुक्रमणिका



## गोविन्दालोकः



## मन्त्रालोकः

## उपनिषदालोकः



## सर्वमूलालोकः

## इतरग्रन्थालोकः

★★★★

# वेदवेदान्तविद्याश्रीर्गोविन्दाचार्यः

प्रो.श्रीनिवास वरखेडि

वेदवेदान्तविद्याश्रीः यं श्रिता साश्रयाऽभवत् ।
माध्वीर्गाः सम्पालयन्तं गोविन्दं तं नमाम्यहम् ॥ १ ॥

माध्वग्रन्थान् असंस्पृष्टान् मूलतालपुटीकृतान् ।
प्रकटय्य करैः स्वीयैः शोधयामास सन्मतिः ॥ २ ॥

मन्त्रेषु रुद्रविषयेषु हरेः सुगाथा
शास्त्रेषु मूढगहनेषु सुखं विहारः ।
काव्येषु कोमलगतिः सरसा च टीका
विद्यासु निश्चलमतिः विशदा च दृष्टिः ॥३ ॥

पाण्डित्ये च कवित्वे च टीकायामनुसर्जने ।
गोविन्दार्यसमो नास्ति भाषयोरुभयोरपि ॥ ४ ॥

आचार्यवचसां व्याख्या श्रद्धया युक्तिभिः कृता ।
दिवारात्रं च तपसा ह्याचार्यत्वं निरूपितम् ॥ ५ ॥

छन्दस्सु देवभारत्यां भाषायामपि विस्तृतम् ।
वाङ्मयं विरचय्याथ कृतवान् लोकसंग्रहम् ॥ ६ ॥

लिकुचान्वयसत्वांशः श्रीमध्वाध्वनि दीक्षितः ।
पुनरेव जनिं प्राप्य सर्वमूलं पपाठ ह ॥ ७ ॥

शताधिकनिबन्धैर्वा व्याख्यानानां सहस्रकैः ।
गीतानामयुतेनापि यशसा लोकविश्रुतः ॥ ८ ॥

बन्नञ्जेत्यभिधानेन स्वाचार्योपाधिना श्रुतः ।
विद्यावाचस्पतिरसौ पद्मश्रीबिरुदांकितः ॥ ९ ॥

आजीवनं तपश्चीर्णं वाङ्मयं यज्ञसंज्ञितम् ।
मध्वेशस्य प्रसादेन कृतार्थोऽभून्महायशाः ॥१० ॥

# गोविन्दाचार्यवर्यस्य त्रैविक्रम इव क्रमः

— शतावधानी डा. रा. गणेशः

मात्राशिष्टोऽहं मम पञ्चम एव वयसि 'चन्दमामा'पत्रिकां पिपठिषुरभवम्। अचिरेणैव कालेन सा पिपठिषा मां 'कस्तूरी'पत्रिकापर्यन्तमनैषीत्। मासपत्रिकैषा कर्णाटवाण्या रीडर्स् डैजेस्ट् इति प्राप्तप्रसिद्धिः। प्रायेण तस्मिन्नेव काले तत्पत्रिकायां 'महाश्वेते' इति नाम्नीं सरसकर्णाट-वाणीवेल्लितां कथामपाठिषम्। सेयं कथा वाणीपौरुषरूपस्य भट्टबाणस्य भारतीमनुधावतीति संस्कृतविदाम् अपरोक्षम्। तस्यां प्रयुक्तां वाणीं भावधोरणीं विचित्रकथनक्रमसरणिं च ध्यायतो मे नूनमेव हारितं मनः। एवमेव दशकुमारचरितस्येतिवृत्तमादृत्य विरचितां 'हत्तु हुडुगर कथे' इत्यभिधां कथां तत्रैव पठित्वा रोमाञ्चकञ्चुकितश्च। अबोधमुग्धे वयसि तस्मिन् कथे एते संस्कृतसाहित्यस्य सर्वोत्तमगद्यकाव्यद्वितयस्य सारभूते इति प्रेक्षा न मनागप्यासीत्। तथापि कथारचयित्रा केनापि बालानां सुखबोधाय सर्वमिदं स्वरसतया न्यरूपीति प्रतिबोधो मय्याविरासीत्। मूलकवेराशयं काव्यानुभावं च हृदयसात्कृतवतः कथाकर्तुरस्य विषये महानादरोऽपि मयि प्रादुरासीत्। हन्त, केनाप्यनवधानेन कथानां रचयितुरभिधानं मया न हृदि कृतम्। किन्तु तदीया भाषावैदुषी पदगुम्फनशेमुषी विलक्षणशैली-सन्दर्भणवैपश्चिती च ममान्तरङ्गे वज्रकीलायिताः। युक्तं चेदं कर्त्रपेक्षया कर्मैव ज्याय इति सनातनधर्मस्य दर्शनम्। सन्ति किल सूक्तिसङ्ग्रहेषु नैकानि हृदयङ्गमानि पद्यानि यत्कर्तॄणां नामानि वयं न जानीमहे। अथ च वृक्षज्ञानविहीनानामपि तत्फलानि रसवन्ति ननु सम्भवन्ति। तदास्ताम्। गच्छता कालेन प्रौढशालायामधीयानोऽहं कदाचिद्ग्रन्थालये कन्नडवाण्या कृतं कादम्बरीकाव्यस्य कृत्स्नं गद्यानुवादमपश्यम्। तत्र पूर्वपठिता कथाप्यासीदन्तर्गता। अनेन कथनमेतदेव मया बाल्ये व्यलोकीति प्रत्यभिज्ञानमजनि। तदास्य कर्ता पुण्यश्लोको वश्यवाग्गोविन्दाचार्य इत्यज्ञासिषम्। तदनु विदुषानेन विरचितानि मम च हस्तापचेयानि पुस्तकानि सादरं पठितानि, सोत्सुकं विमृष्टानि, सोद्विग्नं चिन्तितानि, सोल्लासम् आस्वादितानि च ॥

लोकस्तु गोविन्दाचार्यवर्यं प्रायेण वश्यवाचं वाग्मिनं विजानीते। अहं तावद्विदुषोऽस्य प्रवचनपाटवापेक्षया ग्रन्थग्रन्थनकौशलमेव जानामि। एवमस्य विषये श्रवणं मेऽल्पीयः, पठनं हि ज्यायः। तथापि कतिपयानि तत्प्रवचनानि कर्णपेयानि साक्षान्मया श्रुतानि। सर्वार्थेन सव्यसाचिरसौ धीमान्। अत एव कर्णाटसंस्कृतयोर्व्यवहारे तत्सव्यसाचिता दरीदृश्यते। शास्त्रे, काव्ये, चलच्चित्रे, रङ्गकर्मणि, पत्त्रकारितायां, पाण्डुलिपिग्रन्थ-परिशोधने, सम्प्रदाये, साम्प्रतिके, स्नेहे, साहसे, वादे, विनोदे, सारल्ये प्रौढिम्नि च सर्वदा सर्वथा च लीलायतेऽस्य भारती॥

आगर्भविद्वानसौ कुशाग्रमतिः स्वपितृचरणानां तर्ककेसरिबिरुदभाजां पडमुन्नूरुग्रामाभिजनानां नारायणाचार्याणां चरणतलशुश्रूषया लब्धविद्या-प्रकाशः पश्चात् तत्र भवतां श्रीविद्यामान्यतीर्थानां, श्रीविद्यासमुद्रतीर्थानां च सविधे निजधिषणामणिसमुत्तेजनं लेभे। तथापि धीमतोऽस्य स्वाध्ययन-स्वानुभवावेव विद्यावनसञ्चारावसरे समालम्बनयष्टितां प्रापतुः। नूनमत्रास्य सर्वपथीना स्मृतिशक्तिः साह्यभूताभूत्। श्रीमदानन्दतीर्थपादेन विरचितां तच्छिष्यवरेण श्रीहृषीकेशतीर्थेन लिखितां च सर्वमूलग्रन्थराजिं गोविन्दाचार्यः सम्पादयित्वा प्रकाशयामासेति विद्वल्लोकविश्रुतेयं वार्ता। कर्मणानेन गोविन्दाचार्यस्य ग्रन्थसम्पादनकौशलं पाठपरिष्करणपाटवं विविधलिपि-परिज्ञानं च विदुषामतिरोहितमभूत्॥

इत्थमेव तेन नैके द्वैतदर्शनसम्बन्धिनो ग्रन्थाः स्वोपज्ञटीकासमलङ्कृताः क्वचिद्भाषानुवादभूषिताश्च प्राकाश्यं नीताः। एतेषु मुकुटायमानो महाभारत-तात्पर्यनिर्णयः। अस्य वैदुष्यपूर्णं व्याख्यानमपि स स्वयं निरमासीत्। अत्र गोविन्दवर्यस्य वैयाकरणधिषणा च विद्योतत इति शाब्दिका आमनन्ति। वेदसूक्तविश्लेषणेऽपि पटुहस्तोऽयं पण्डितः। ईदृशां ग्रन्थानां निर्मितावस्य गद्यपद्यमयी गीर्वाणवाणी शास्त्ररसोचितं लास्यं ताण्डवं च तनुतेतराम्। विशिष्य गद्ये क्वचित् सूत्रसङ्क्षिप्ता क्वचिच्चूर्णिकाचटुला क्वचिदुत्कलिकाप्राया च भङ्गीभणितिः

सङ्ग्रामवडवेव नैकविधा धाराः प्रदर्शयन्ती जिज्ञासुजनं लीलया लक्ष्यं लगयति ॥

अस्मासु नैके प्रवचनेषु प्रगल्भन्ते । किन्तु लेखनकर्मणि सीदन्ति । अन्ये केचन कृतिरचनासु कृतपरिश्रमाः । किन्तु मध्येसभं वाग्धोरणीं शीलयितुं न शक्नुवन्ति । उभयकर्मनदीष्णा विद्वांसस्तावदल्पीयांस एव । अतः किल कीर्तिशेषैः पण्ढरिनाथाचार्य-नारायणाचार्यमुखैः पङ्क्तिपावनैः सह गोविन्दा-चार्यो गणनामर्हति ॥

गोविन्दार्यस्य संस्कृतभाषा विषयनिरपेक्षमप्यपूर्वां सुषमां धत्ते। नेयं समासजटिला विकटाक्षरगडुला वा। असमस्तान्येव पदानि तत्र भूरिशो भान्ति। अभिजातसंस्कृतसम्प्रदायमनुधावन्ती स्वविशिष्टां शैलीं बिभर्ति। अत्र वाचोयुक्त्यनुरक्तिः प्रतिपदं चकास्ति। आभाणकानां लोकोक्तीनां च प्रयोगाः प्रतिवाक्यं परापतन्ति। विरलप्रचुराणां धातूनां वैविध्यमयानि रूपाणि सुबहूनि लोचनपथमवतरन्ति। आत्मोपज्ञानि वाग्रूढिवैचित्र्याणि च प्रावृड्वयोदेषु विद्युतां विलसितमिव वाग्विदां हृदयानि हरन्ति । प्रायः पद्यादपि गोविन्दवर्याणां गद्यमेव व्युत्पित्सूनां पठितॄणां प्रेक्षां समाकर्षति । किं बहुना, तदीयो वाग्विलासः संस्कृतसाहित्यस्य विद्वद्रसिकवृन्दवन्दितमभिजातयुगसिद्धं व्याहारं पुनरुज्जीवयतीव भाति । मन्ये, हेतुनानेन संस्कृतचलच्चित्रसम्भाषणरचनास्वपि गोविन्दाचार्य एव प्रथमं पदमलमकार्षीत्। न केवलं शङ्कर-मध्व-रामानुज-भगवद्गीतादिषु चित्रेषु, बहुषु रङ्गप्रयोगेषु, आकाशवाणी-रूपकेषु च विपश्चितोऽस्य योगदानं दरीदृश्यते ॥

गीर्वाणवाण्यां कृतभूरिपरिश्रमा विद्वदपश्चिमाः प्रायेण देशभाषासु तामेव सरणिमनुरुन्धानाः प्रौढिमानं ढौकन्त इति प्रेक्षावतामपरोक्षमेव। परन्तु गोविन्दाचार्यो नैवं नारिकेलपाकपरायणः। स तावदक्लिष्टमनोरमां प्रतिपद-सुखबोधां नूनमन्वर्थाभिधां कर्णाटवाणीमेव प्रयुङ्क्ते । संस्कृत इवात्रापि लघूनि वाक्यानि, व्यस्तानि पदानि, हृद्यानि च गुम्फनानि। विशुद्धानां कार्णाटपदानामेवात्र पारम्यम्। अत एव 'द्वादशस्त्रोत्राणि' 'हन्नेरडु हाडु'

इति, 'नित्यानुष्ठानम्' 'मुञ्जानेयिन्द सञ्जेय तनक' इति, 'विष्णुसहस्र-नामस्तोत्रम्' 'देवर साविर हाडु' इति, 'भगवद्गीता' 'भगवन्तन नल्नुडि' इत्येवं रूपाणि विन्दन्ते। वाग्रीतिवयनमिदमाप्तैः सह भाषितमिव निरुपस्कारं प्रसादगुणगण्यं प्रबन्धगुणमान्यं च भासतेतराम्। प्रतिपादनविधानमपि तदीयं नितरामनाकुलमस्तोभमनवद्यं च। तन्न जातु शाखाचङ्क्रमणं सहते, वाग्विग्लापनं भजते वा। गोविन्दार्यस्य वाणी प्रसन्नापि गभीरा, शास्त्र-शासितापि काव्यकन्दलिता। अत एव तेन विपश्चिता संस्कृताविरोधिन्या देशभाषया शूद्रक-कालिदास-भवभूतिकृतानि कानिचन रूपकाण्यनुवादेन सभाजितानि। एतेषु मृच्छकटिकम् ('आवेय मण्णिन आटद बण्डि') अभिज्ञानशाकुन्तलम् ('मत्ते नेनपादळु शकुन्तले') उत्तररामचरितम् ('मत्ते रामन कथे') च प्रामुख्यमर्हन्ति। एतेषु भाषानुवादेषु सुकुमारमतिसौख्यं भूयोऽनुभूयते। तथापि संस्कृतमूलस्य शब्दालङ्कारसौभाग्यं- विशिष्य तत्रत्यानां पद्यानां-छन्दोनादमाधुर्यं च ह्रासतामनुयातीत्यत्र नास्ति संशीति लेशः। किन्तु मूलकृतीनां शब्दालङ्कृतिरक्षणचणाः सन्त्येव नैकेषां पूर्वसूरीणां तत्र भवतां बसवप्पशास्त्रि-कृष्णाचार्य-सीतारामशास्त्रि-अनन्तनारायण-शास्त्रि-सुब्रह्मण्यशास्त्रिकृष्ण मूर्तिसदृशानां हृद्यानवद्या अनुवादा इति विद्यत एव परिहारः॥

सङ्क्षेपेण वक्तव्यं चेत्तत्र भवता गोविन्दाचार्येण कर्णाटवाक्प्रयोगावसरे स्वीया काचिदनन्या शैली समाविष्कृता। नेदं कर्म सुलभम्। सत्यकामः, रावोपाह्वः सालग्रामाभिजनः कृष्णात्मजो रामचन्द्रः, तोळपाडिकुलजो लक्ष्मीश इति केवलम् अङ्गुलिमेया एव शैलीमीदृशीं प्रयुञ्जते। एतेषु मध्यमणिरिव महोत्तमं स्थानमध्यास्ते गोविन्दवर्यः। अस्या वाग्रीत्या उत्तराधिकारिणी प्रायेण तत्पुत्री वीणैव॥

गोविन्दाचार्यवर्यः पण्डितप्रवरो रसिकप्रवेकश्च। स हि तलवकारोपनिषत्-यज्ञियमन्त्रोपनिषत्-तन्त्रसारसङ्ग्रह-प्राणसूक्त-पञ्चसूक्तप्रभृतीनां मोक्षसाधक ग्रन्थानां देशभाषया व्याख्यातापि; कामशास्त्रस्य कन्नडगिरानुवक्तापि।

'कृष्णन उडुपि', 'प्रयोगशीलकवि बेन्द्रे', 'पुरन्दरोपनिषत्तु', कनकोपनिषत्तु', 'भीमसेन', 'वाल्मीकि कण्ड रामायण', 'आचार्य मध्वर बदुकु-बरेह', 'पराशर कण्ड परतत्त्व', 'कृष्णनेम्ब सोदेय कडलु' चेत्याद्यानां नैकासां कर्णाटवाण्युपनिबद्धानां कृतीनां कर्ता विशिष्टविचारप्रस्तोता च स एव धीमान्। आधुनिककर्णाटकविकुलकुलायकोकिलायितस्य दत्तात्रेयरामचन्द्रबेन्द्रेवर्यस्य निरतिशयोऽभिभावकोऽसौ स इव सङ्ख्यासङ्केतमुग्धो ब्रह्मोद्यसद्दक्ष रहस्य-रचनाविदग्धश्च। तदस्य विद्याविलासतौर्यत्रिकस्य सङ्ख्या-सङ्केतरहस्यवादौ श्रुतिलयाविति वक्तुमलम्। गुह्यभाषा, समाधिभाषा चेति योगिप्रत्यक्षवादिभिर्या वाक् प्रतिपादिता तामयमार्यः प्रत्यहं प्रस्तौति स्म। पण्डितः प्रवचनपटुश्च गोविन्दाचार्यः प्रपञ्चे यावती प्रसिद्धिमाश्नीत्तावतीं प्रशस्तिं कविः कथकश्च स एव नालभतेति महदिदं विषादस्थानम्। नेदमस्य सरस्वतीसूनोः कष्टाय; किन्तु सारस्वतजगतः किल नष्टाय। धीमतोऽस्य कविताकौशलंस्मारयितुंसुमतीन्द्र नाडिगवर्यविरचिते 'पञ्चभूत'सञ्ज्ञिते काव्ये विद्यमानमामुखमेकमलम्। तत्तु स्वयमेव रोचकं रोमाञ्चकं च खण्डकाव्यम्। एवमाचार्यगोविन्दस्य साहितीवरिवस्या त्यक्तयूथस्य यूथपस्येव गतिः कामपि वैचित्रीं तनुते॥

विपुलवाङ्मयनिर्माणचणोऽप्यसौ सुधीमणिः सर्वदा लेखनीलाङ्गलबद्ध इव बलीवर्दः पुस्तग्रस्तहस्तः। प्रायेण रचनाकर्मैव तमूरीकृत्य लेखयतीति वक्तव्यम्। यतो हि कृतिशिल्पनप्रवृत्तिः सर्वदा तन्मनोलहरीमनुधावति हरिणीव हारिते वने। अत एव सा नूनमवधूतनियन्त्रणा, अनन्यपरतन्त्रा च विलसति। मन्ये विद्यावनितैव गोविन्दवर्यं दुर्ललितमिव बालं लालयित्वा लेखनकर्मसु प्रेरयामास। बह्वीषु विद्याशाखास्वधीती लब्धवर्णोऽसौ निजरसनारासमण्डल एव नर्तयति वाग्विलासगोपालं स्वीयया स्मृतिशक्तिराधया समाराधितम्॥

पूर्णप्रज्ञदर्शनमिति प्रथितस्य द्वैतराद्धान्तस्य प्राग्रहरेषु विद्वदवतंसेषु गण्यः खलु गोविन्दाचार्यः बि.एन्.के. शर्मा, कृ.त. पाण्डुरङ्गी चेत्यादीनां प्रशस्तां पङ्क्तिं भजते। अन्यैरचुम्बितानि क्वचिदस्वप्नायितान्यपि स्वोपज्ञानि

शोधतत्त्वानि प्रतिनवतया प्रतिपिपादयिषुरसौ प्रावृषेण्यः पयोवाह इव प्रत्यग्र-चिन्तनचञ्चलाञ्चितः, प्रभूतचातुर्यपुरुहूतचापचित्रितश्च स्तनितं निजविजय-वैजयन्तीसनाथम् आचिख्यासति। किं बहुना, आचार्यवर्यः पूर्णप्रज्ञदर्शनस्य रूपस्तरीयां चौक्षतामहार्षीत्; तत्स्वरूपस्तरस्य चौक्षतामितोऽपि वर्धयामास। इयता प्रमाणेन श्रीमदानन्दतीर्थीयं दर्शनं बहुस्तरीयेषु लोकेषु प्रापितवान् प्रख्यापितवांश्च कश्चन धीमान् सद्यःकाले नावर्तिष्टेति नातिशयोक्तिः। पूर्वं पुरन्दर-जगन्नाथ-विजयादयो दासवर्याः कार्यमिदं चक्रुरिति वयं शुश्रुम। किञ्च गोविन्दाचार्यस्य वरिवस्या भिन्नैव। यतः किल दासकूटस्य सरणिरन्या। सा हि सङ्गीतसाहित्यधन्या। व्यासकूटपद्धतिस्तु साम्प्रदायिकवाक्यार्थवैशेषिकवैदुषीनुन्ना, लब्धवर्णैकवलयप्रपन्ना च। मुरारेरिव गोविन्दार्यस्याप्युपलब्धिः पन्थानं तृतीयं कमपि गाहते; ककुभं कामपि जिगमिषति। विपश्चिता तेन दशप्रमतिदर्शनस्य वैचारिकीं साम्प्रतिकीं च शोभां यावतीं कल्पयितुमलं तावतीमखिलामपि शीलयित्वा महदिदं कर्म साधितम्। यदि गीतवादित्रपरिभाषामाश्रित्य वक्तव्यम्, गोविन्दाचार्योपज्ञं कापि 'घराना', 'बानी' काचिच्च विद्यत इत्यौत्तराहपद्धतिम् अनुस्मरन्तो ब्रवाम। प्रस्थानकारकल्पानामेवमेव खलु चर्या। एवं स्वाभिमते शास्त्रप्रपञ्चे पर्यटतः श्रीमतो गोविन्दवर्यस्य तच्छास्त्रमेव सीमायते न तु नैजः पुरुषकारः। अतो ह्यस्य वाचि लेखे वृत्तिषु चात्मीया काचिदनन्या मुद्रा मुदं रान्ती मोहयति सतां मनांसि। 'रीतिरात्मा काव्यस्य' इतीमां वामनीयां प्रेक्षां शास्त्रेऽप्यापादयितुं प्रलोभयति भावकान् गोविन्दवाणी ॥

प्राक्तनेषु तौलवकविपण्डितेषु विश्रुतनामा किल त्रिविक्रमपण्डितः। विशुद्धविचारं विविदिषुः कृत्यसौ वादसमयानुरोधेननिजमतमेव तत्याज निर्भरतयेति श्रूयते। अस्य भक्तिरपि श्रीमत्यनुमानतीर्थे तीर्थभूते गरीयसीति ज्ञायते। अस्मिन् मनीषिणि नितमां स्निह्यति स्म गोविन्दवर्यः। तस्य वंशविद्यावंशादिष्वपि विचारेषु सुविपुलं संशोधनमतानीच्च। अतोऽस्मद्गोविन्द-वर्ये च त्रैविक्रमं क्रममिममेव पश्यामो वयम् ॥

# गोविन्दो धाम निर्ययौ

विद्वान्. उमाकान्तभट्टः

प्रकाण्डं पाण्डित्यं प्रवचनपटुत्वं स्फुटतरं
प्रसिद्धो वाग्योगः स्फुरणगुणशीलं स्मृतिबलम् ।
दृढा तत्त्वश्रद्धा व्यवहरणरीतिर्निरुपमा
गुरोर्गोविन्दस्य प्रथममभिवन्द्याः प्रमतिभिः ॥१ ॥

कियन्तः शिष्या यं त्वनवरतमध्यासत सतां
गुरुं तं गैर्वाण्यां मधुमधुरवाण्यामनुपमम् ।
विदग्धं कार्णाट्यां लिखनपरिपाटीपटुमतिं
गलाग्रस्थाङ्ग्लेयं कुसुमसहकारं त्विव पिकाः ॥२ ॥

सदा यो वेदान्ते परिषदि च विन्ते स्म कृतिनां
लसत्तत्त्वामोदे विहितबहुशोधे जितबुधः ।
ददानो माध्वीकं विमथनसमुत्थं मृदुहृदे
स यातो गोविन्दो दिवमिति तु वार्ताशनिनिभा ॥३ ॥

कियत्स्वादुर्वा वागथ कियदुदारं च हृदयं
कियन्मन्त्रं ध्यानं कियदमितमैत्रं तदुदितम् ।
कियच्छोधो बोधः कियदुपकृतिर्वा व्यवहृतिः
त्वितीमां ना नार्हो गुणगणनिकां कर्तुमधुना ॥४ ॥

मुकुन्दं माकान्तं विधृतनवनीतं मुनिनुतं
मुदा मुग्धस्त्रीभिर्वनवलनासेविततनुम् ।
हृदि ध्यायं ध्यायं रजतपुरमध्यस्थनिलयं
स गोविन्दाचार्योऽलभत हरिगोविन्दविभवम् ॥५ ॥

गोविन्दधाम बन्नञ्जे गोविन्दपदभागसौ ।
गोविन्दतत्त्वनिर्णेता गोविन्दकृपया ययौ ॥६ ॥

# चतुर्दशसूक्तेहितम्

डा.वंशीकृष्ण घनपाठी

**अनिरुद्धस्सुरानन्दो गोविन्दो गोविदां पतिः**

भगवदवताराः अंशावतारतया, ज्ञानावतारतया, पूर्णावतारतया च बहुधा प्रथन्त इति विद्वांसः वचन्ति। लोकाध्यक्षस्सन् स भगवान् हरिरेव महीपतिरूपेण लोकं पालयति, यतः 'नाविष्णुः पृथिवीपतिः' इति वचनेन ज्ञाप्यते। वेद्यं वेदयितुं ज्ञानं प्रवाहयते च वेदव्यासादिरूपेण, यतः कीर्तयामोनिशम्- 'कृष्णद्वैपायनं व्यासं सर्वभूतहिते रतम् .. वेदान्तभास्करं वन्दे' ... इत्यादिना।

तादृशाः भगवदवताराः विद्वत्तल्लजरूपेण अद्यतनेपि काले विलसन्तीति गोविन्दाचार्यपण्डितः दृष्टान्तयति। उपरितनानि नामसाहस्रगतानि नामधेयानि, विद्वद्वरेस्मिन् सार्थवन्ति भवन्तीति – श्रीमता विरचितं चतुर्दश-सूक्तभाष्यं कलयद्भिः विद्वद्भिः गम्यते।

**अनिरुद्धः**- वेदव्युत्पत्तिमारब्धवतः आचार्यस्य कश्चन निरोधो नाम-मात्रतोऽपि नासीदिति ज्ञायते। स्वकीयेन प्रकृति-प्रत्ययविभागपटिम्ना यास्क-शाकपूणि-दुर्गाचार्यादीनां निर्वचनपरम्परामवतारयतीति तदीयम् अनिरुद्धत्वं लक्ष्यते।

**सुरानन्दः** – ते ये शतं मानुषा आनन्दाः- स एको देवानामानन्दः इत्यानन्दं मीमांसन्ती तैत्तिरीयश्रुतिः, मनुष्यैरनुभूयमानादानन्दात् शत-गुणाधिक्यं वर्णयति सुराणामानन्दस्य। सारस्वतसागरे मग्नस्सन्, अन्यानपि बोद्धॄन् मज्जयतः पण्डितवरस्य सुरानन्द एवेति उत्प्रेक्षणं वरम्।

**गोविन्दः**- गां वाचं विन्दति साकल्येनेति व्युत्पत्त्या, 'वाचामाचकल-द्रहस्यमखिलम्' इति मल्लिनाथस्य प्रतिज्ञां स्मारयत्ययं दोषज्ञः।

**गोविदां पतिः** – वेदार्थव्युत्पत्तिपथमनुसरतां भाविविपश्चिन्नागानां यूथं

नयतीति गोविदां नायकत्वं च तत्र तत्पथानुयायिभिः नूनमनुमन्तव्यमेव।

भगवतः शास्त्रयोनित्वमनुमोदमानाः एव पूर्वे महान्तो विद्वांसः, तदीयप्रतिपादनरीतिं याज्ञिकभूमिकया सह, अन्यैरपि पथिभिः चिकीर्षन्तः दिशाप्रदर्शनं चक्रिरे। तामेव ककुभमवलम्बमानेन गोविन्दाचार्येण विहितं प्रतिज्ञाद्वयं लक्ष्यताम्।

त्रयोऽर्थाः सर्ववेदेषु – इति अर्थान्तरान्वेषणपराः वयम्।

वयं पुनः प्रत्यक्षरं निर्वचनलोलुपाः - इति हि प्रतिज्ञा॥

तद्यथेति किञ्चिद्विचारणेन शास्त्रार्थं रोमन्थायामहे। सगुणरूपेण विलसतो भगवतो विभूतिर्बहुधा चतुर्दशसु सूक्तेषु व्याख्याता। यद्यपि ऋग्वेदीयशाकलसंहितां, तदीयव्याख्यानभूतम् ऐतरेयञ्चाद्रियमाण एव आचार्यः, तथापि तैत्तिरीय- माध्यन्दिन- काण्व- शौनकसंहितागतानपि मन्त्रान् विविच्य, नैजं सर्ववेदादादरं सुष्ठु प्रकटयामास। एतेषां चतुर्दशानामेव सूक्तानां व्याख्यानं कुत इति चिन्तयता विमर्शकेन, रहस्यमेतद् बोध्यते। त्रीन् लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुक् इति भगवतो विश्व-व्यापित्वप्रदर्शनेन, एकैकस्मिन् उच्चावचत्वेन भाव्यमानेषु सर्वेषु वस्तुषु भगवद्दर्शनाभ्यासः अवश्यं करणीयो जनैरिति, व्याख्यात्रा आचार्येण, सर्वभूतस्थमात्मानम् इति भगवद्गीतोदितः पन्था अदर्शीति। धातूनाम् अनेकार्थत्वात् इति पूर्वाचार्यैरनुसृते पथि, बहुशः वैदिकशब्दव्युत्पादनद्वारा अर्थान्तरञ्च न्यरूपि सूक्तव्याख्यानेषु।

प्रथमं घृतसूक्तम् समुद्रादूर्मिरिति, वामदेवर्षिप्रवर्तितम्। अत्र घृतशब्दस्य लोकप्रसिद्धा आज्यरूढिः न घटत इति प्रदर्श्य, इतरेण प्रकारेण शब्दाः व्युत्पादिताः। क्षरणात्, दीपनाच्च घृतमित्युभयं लक्षणं भगवत्येव घटते इति प्रथममुक्तम्। (यद्वा यज्ञद्रव्येषु आज्यादिष्वपि भगवतो दर्शनं सम्भावयति।) तत्र सूक्ते, व्याचिख्यासूनां सम्पन्नतरा भूमिः चत्वारि शृङ्गा इत्यृक्। अत्र श्रीमतस्सत्त्वोद्रेकं पश्यामः। त्रिधा बद्धः इत्यंशे- लोकत्रये, कालत्रये,

अवस्थात्रये, मन्त्रब्राह्मणकल्पेषु, भक्तिज्ञानवैराग्येषु श्वेतद्वीप-अनन्तासन-वैकुण्ठेषु, चक्षुःकण्ठहृदयेषु वा निबद्धो भगवानिति वर्णयन्नाचार्यो सारस्वतप्रपञ्चं दर्शयते। एवञ्च जलतृणविशेषे प्रसिद्धस्य वेतसशब्दस्य अर्थान्तरं लोकयाम्बभूव - वी गतौ, वी प्रजने, वी- खादने, वी गतौ इति धातुभ्यः, (वियस्तुट् च) वियो धातोरसच् प्रत्ययो भवति, तुट् च आगमः इति सामान्यव्युत्पत्त्या न तृप्तस्सन्, वं ज्ञानम्, तेन इताः – वेताः- भागवताः, तानयं सरतिवेतसः (डः कृत्) इति वर्णयति। एवं भगवत्परतया वेतसं व्याख्याय, भगवतस्सर्वतोभावं विशिनष्टि। एवमेव शूघनासः, यह्वाः, वातप्रमियः इति शब्दाश्च शाब्दिकधुरन्धराणां कर्णपेयतया व्युत्पादिताः।

द्वितीये भाग्यसूक्ते प्रातरग्निमिति वेदत्रयप्रसिद्धे, देवतानामाध्यात्मिकवर्णनं सर्वानपि रोचयति। अग्निः- वाग्देवः, इन्द्रः- मनोदेवः, मित्रावरुणौ अहोरात्राधिदेवौ- सङ्कल्प-ध्यानाधिष्ठातारौ, अश्विनौ- उषःपती, भगः पूषा च – योगक्षेमयोः पालकौ, ब्रह्मणस्पतिः - बुद्धिमानी बृहस्पतिः वाक्पतिः प्राणो वा, रुद्रः शरीररुजां द्रावकः मनोमानी, सोमः श्रोत्रमानी चेति स्तूयन्ते। अत्रापरो विशेषः – शाङ्करमठपरम्परा च पारोक्ष्येण समर्थ्यते, यत्र शारदा-चन्द्रमौलीश्वरौ कीर्त्येते। वाग्देवी उमा, तया सहितः सोम एव रुद्रः इति वचनम् – रुद्राध्यायमूर्धन्यं नमस्सोमाय इत्यनुवाकस्वारस्यं बोधयति।

अत्रैव, अङ्गाङ्गनेता-अग्निः, परमेश्वरः – इन्द्रः, ज्ञानाज्ञानप्रदौ - मित्रावरुणौ (अन्तर्यामी मित्रः, बहिर्व्यापी वरुणः) मितिं प्रमितिं राति मित्रः- सर्वमावृणोति वरुणः, भजनीयः - भगः, पूर्णः - पूषा, सा हि श्रीरमृता सतामिति कीर्तितस्य शब्दब्रह्मणः पतिः (ब्रह्मणस्पतिः)- श्रियः पतिः पुरुषोत्तमः इति च निर्वक्ता आचार्यः धन्यतामाप्नोति।

अथ तृतीये कुविदङ्गसूक्ते, इन्द्रवायू हि सयुजौ इति वेदे कथ्यमानयोः वर्णनं प्रशंसति- इन्द्रः- उपेन्द्रः परमेश्वरः, वायुः- सङ्कर्षणः जीवोत्तमः। तत्रैव सूक्ते बाधितशब्दनिर्वचनं विदुषां गमनमर्हति। बाधा संसारपीडा। तेन पीडिताः - बाधिनः, तैः बाधिभिः इतः बाधीतः। स एव बाधितः। (ह्रस्वत्वं

छान्दसम्) अतः बाधितशब्देनापि परमेश्वरस्यैव कीर्तनञ्च बुद्धिं विकासयति ।

नासत्यसूक्ते चतुर्थे, माध्वसम्प्रदायस्वारस्यवेत्त्रा अनेन, देवौ अश्विनौ-रामकृष्णौ, आञ्जनेयभीमसेनौ, वेदव्यास-मध्वाचार्यौ – इत्युत्प्रेक्षणम् भासते । तथा च त्रिरूपो भगवान्, त्रिरूपो गुरुः इति गुरुभक्तिश्च प्रकटिता ।

पञ्चमे अपालासूक्ते, मध्वाचार्यकालिका आख्यायिका अपाला-शब्दव्युत्पत्तिविशेषवती श्राविता । अपाला- अतितरुणी युवतिरिति कथयन्, अप- अल्यते अपवार्यते स्वाच्छन्द्यात् अतृप्तकामा इति सोपपत्तिकमूचे ।यद्यपि ऋग्विधाने सूक्तमेतत्, शरीरसौन्दर्यमभीप्सता जनेन जपितव्यमिति वचनावसरे श्वित्रिणी- त्वग्दोषिणी, अलोम्नी च सुन्दरी भवतीति प्रदर्शितम्, तथापि अश्रुतपूर्वमपि विजानता आविष्करणीयं भवति, तेन भवत्विदम् अस्मदुपज्ञम् आविष्करणम् – इति मध्वाचार्यप्रतिज्ञा समादृता विराजते ।

षष्ठे व्याख्यातसूक्तेषु, पूयमानेषु – पावमानेषु उपान्त्ये शर्यणावतीति सूक्ते, शर्यणावत्-शब्दार्थः हृद्यो वरीवर्ति । शर्यणावत् इति सरोनाम इति साम्प्रदायिकं व्याख्यानम् । एवं नश्यमानानां सरआदीनां नामसु अर्थान्तरान्वेषणं श्रुतिविहितमेव । यथा भरद्वाज-अत्रि-विश्वामित्रादीनां पुरु षाणामुत्पत्तिप्रसङ्गवर्णनात् तेषां विनाशोपि गम्यते चेत्, वेदस्य पौरुषेयत्वापत्तिः इत्याशङ्कायां सत्याम्, विश्वस्य मित्रम् विश्वामित्रः, त्रीन् गुणान्, दोषान् वा अतीतः अत्रिः, भरन् वाजं अन्नरसम्- भरद्वाजः- इत्यादिप्रकारेण अविनाशवतां देवानामेव वर्णनमत्राभिप्रेतमिति कथयन्ती श्रुतिः, यमध्वानं प्रादर्शयत्, तेनैव विवधेन (विधानेन) वैनाशिकत्व-शङ्कानिवारणाय तात्त्विकार्थः शर्यणावत् शब्दे समुन्नीतः आचार्येण ।

यणयोः ज्ञानानन्दयोः शरणम् - शर्यणम् ।नामधेयत्वात् पूर्वपदवृद्धिः द्वारावती इत्यादिवत् । शीर्यमाणत्वात् शर्यणम् । तद्वत् शर्यणावत् । शरीरवदिति यावत् । तत्र वर्तमानः देवः इन्द्रः परमेश्वरः, तस्मै हे सोम भक्तिरसरूप – त्वं प्रवह इति भक्तिभाव उदाहृतः ।

सप्तमे ओषधिसूक्ते, ओषधीरिति मातरः ... सनेयमश्वं गां वास आत्मानं तव पूरुष इति व्याख्यानावसरेण, भगवद्गीतासारभूतं परमेश्वरार्पणं निरूपयति, कायेन वाचा मनसेन्द्रियैर्वा ... इति भागवतपथस्य वेदमूलकत्वं ज्ञापयति च। अत्र वाक्ये अश्वः- अन्तःप्रज्ञा, इन्द्रियाणि च। गौः वाक्। वासः शरीरम्। एतत्सर्वं नारायणाय धन्वन्तरये सनेयम् दद्याम् इति वर्ण्यते। तथा च धन्वन्तरिर्भगवानिति ओषधीशं स्तावयति।

अन्यच्च, यदहं वाजयन्निमाः इति तैत्तिरीयशाखागतं मन्त्रं व्याख्यान्, यक्ष्मो नाम - अज्ञायमानं सत्, यत् अन्तः पीडयति- सः अज्ञातरोगः। तस्य यक्ष्मस्य आत्मा ओषधीभिर्नश्यति, जीवग्रहाणां विनाश इव- इति अज्ञातमूलानां रोगलक्षणानां निदानमोषधिप्रयोगेण मन्त्रवता साध्यत इति वदति। एवञ्च काण्वानां माध्यन्दिनानां सूक्ते विशिष्टाश्च मन्त्रा व्याख्याताः।

घर्मसूक्ते अष्टमे, भगवन्तमेव घर्मशब्देन वर्णयति वेद इति कथयति। तथा च तेजोबन्नरूपस्य त्रिवृतो मूलभूतस्य वायोः स्तवनमवतारयन्, मातरिश्वशब्दं व्याख्याति। मातरि जगत्स्रष्टरि श्वयति गच्छति - मातरिश्वा सदागतिः वायुः। (मातृशब्दः अन्तरिक्षेण सह, गर्भ- वाक्परतया च व्याख्येयः इति कथयति।) वस्तुतस्तु, एकस्यैव ब्रह्मणः बहुभिश्शब्दार्थैर्वर्णनं वेदस्यैव निश्चप्रचो मार्ग इति वैदिका जानन्त्येव। उपनिषत्सु उपासनप्रसङ्गेषु बहवश्शब्दाः वस्तु- गुणाभिधायकाः प्रस्तुताः पाङ्क- ओङ्कार- प्रणव- अक्षि- आदित्य- उदारादयः। तथा च स्कम्भ- शतौदन- पञ्चौदन– ब्रह्मचारि- अश्वादिशब्दाश्च आथर्वणिकैः याजुषैश्च प्रयुज्यन्ते। स एव पन्था अत्राप्यनुसृत इति नावसरो विशेषस्य।

दानसूक्तम् नवममस्यां व्याख्यानस्रजि। दानशौण्डः अन्नकामस्सन्, अन्नं विन्दति। पापात् दारिद्र्यात् मुच्यते इति भावं वर्णयति। अददतः पिशुनस्य सकाशे, अदीयमानमपि वस्तु न तिष्ठति। किन्तु, रफिताय आध्राय दरिद्राय दीयमानमपि न क्षीयति इति श्रुतितत्त्वं बोधयामास। क्षुधा

मरणवत् भवति। गृहवे प्रतिग्रहयोग्याय अन्नकामाय कृशाय दरिद्राय यो ददाति, स एव भोजः (भोक्ता) अलं भवति। पर्याप्त इति दानमहिमान-माविष्कारयति।

दशमे पक्षिसूक्ते, अग्निं तुष्टुवुः जरितारिः, सारिसृक्कः, स्तम्बमित्रः, द्रोणः इति चत्वारः पक्षिणः, मन्दपालमुनेः शार्ङ्गकनाम्नः पक्षिरूपधारिणः पुत्राः, जरितानाम्न्यां पक्षिण्यां जाताः। खाण्डवदाहे आशुशुक्षणिना वह्निना दह्यमानास्ते चत्वारः, तमेव भगवन्तं कृशानुं प्रार्थयामासुरिति महाभारतोक्तया गाथया समन्वयः रोचते। तत्र महाभारतगाथायाः ऋग्वेदसम्प्रदायस्य च नामचतुष्टयप्रस्तावे व्यत्ययश्च भणाति। तत्रैव उलप इति तृणनाम व्युत्पादितम्। तद्व्युत्पत्तिर्यथा ऋ-गतौ (इयर्तेः) अप् इत्येकधा। उल - आवरणे, दाहे च सौत्रो धातुः। उल्यते इति उलपः। वल - संवरणे - वलतीत्युलपः। तादृशं शाब्दिककौशलं नैकान् बुधान् विस्मापयति।

एकादशे गर्भसूक्ते, यः अलं प्रजायै सन्- प्रजां न विन्दत इति श्रुतिप्रस्तुतां सन्तानहीनतां प्रक्रमय्य, मन्त्रद्वयं निर्दिशति- विष्णुर्योनिं कल्पयतु ... नेजमेष परापत... इति। गर्भधारणसामर्थ्याय जपेत् जापयेद्वा ऋतुमती स्त्रीः मन्त्रद्वयमेतत्। अत्र च विष्णुशब्देन, गर्भमभिव्याप्य जायस्व इति प्रार्थनां गमयति। नेजं शुद्धिं मेषति सिञ्चतीति नेजमेषो भगवान् इति च गर्भशुद्धिं स्तावयति च। (गर्भशुद्धिं सन्तानशुद्धिं प्रापयेति भगवन्तं प्रार्थयते सूक्तमिति च विवृणोति।)

संवनन सूक्तम् (शाकलम्, आथर्वणम् वा) द्वादशम्। अत्र सङ्गच्छध्वं भक्तिमार्गे, सम्भूय ऐकमत्येन संवादं सम्यक् नामकीर्तनं कुरुत- इति भक्तजनप्रबोधो गम्यते। भगवति निरतिशयिता भक्तिः समाजस्य संवनने सामरस्ये कीलकवद्भवितेति ध्वनयति।

त्रयोदशं कुन्तापसूक्तम्। चतुरोऽपि वेदानधीयमानानामस्मादृशामपि कुन्तापसूक्तवाक्यानि विस्मापकानि भवन्त्येव। यतोत्र भगवतः विद्यारण्यस्य

भाष्यवचनानि नोपलभ्यन्त इति हेतोः, महत्त्वलक्षितस्य सूक्तस्यास्य अर्थज्ञाने कुण्ठितबुद्धयो बहवो माणवकाः। तत्र श्रीमतां व्याख्यानं अन्धतमस्तारकमिति वचने नास्त्यतिशयः।

कुत्सितं दोषं तापयन्तीति कुन्तापाः। यज्ञे ब्राह्मणाच्छंसिना ऋत्विजा पठ्यमानेषु सत्सु, छन्दसां रसः प्रतिष्ठितो भवति, यज्ञश्च रसपूर्णैः छन्दोभिरिष्टो भवति इति ब्राह्मणवाक्यानि श्रूयन्ते। तत्रैव नराशंसशब्दः एवं व्याख्यातः। न रीयन्ते इति नराः। तैः आशंस्यमानः स्तूयमानः वासुदेवः नराशंसः परमात्मा।

तथा च रेभपदघटिता मन्त्राश्च व्याख्याताः। रेभृशब्दे। नरेषु स्थित्वा यो रेभति शब्दायते, स एव रेभः अनिरुद्धोत्र सम्बुध्यते, देवकीर्तनोद्बोधनाय इति वर्णयति। एवञ्च न्यूङ्खशब्दव्युत्पत्तिः, नीवीव नर्दनश्चेति अप्रसिद्धा अप्यंशाः वैदिकोपकाराय प्रस्तूयन्ते।

अश्लील सूक्तम् चरममस्यां मालिकायाम्। अश्वमेधप्रकरणे, राजमहिषी-प्रसङ्गे वर्तमानमिदम्।याज्ञिकाः कर्ममात्रप्रज्ञाः इति रूढिः। तेष्वन्यथा मन्यमानेष्वपि, सर्वमपि वेदवाङ्मयं, किञ्चित् परतत्त्वं विधत्ते विज्ञापयति च तत्त्ववादिनाम्। अतः परिहासरूपं, जल्पनरूपमपि वाक्यं भगवत्स्तोत्रपरतया व्याचख्यौ गोविन्दाचार्यः स्वकीयशेमुषीवैशिष्ट्यप्रभावात्। यत्र रुचिः- तत्र भक्तिः भावश्चेति सम्यङ्निरूपयति व्याख्यानावसरोयम्। तथा च दधिक्राव -जिष्णु-अश्व-वाजिशब्दानां दशावतारपरं व्याख्यानमत्यन्तं शोभतेतमाम्। एवं गुरोरनुग्रहादवाप्तां शाब्दिकविद्यां भगवद्भक्तिश्च लोकोपकाराय विदधत् गोविन्दाचार्यः सुकृतां ज्योतिरिति सानन्दं प्रकटयामः।

तादृशे वाग्व्यापारे रिरंसुषु निरन्तरं मङ्गलमातनोतु भगवानप्रमेयः।

*****

# तापनीयोपनिषद्भाष्यम्

प्रो.पि.टि.जि.वै.सम्पत्कुमाराचार्यः

बन्नञ्जे गोविन्दाचार्याः कर्नाटदेशेषु कविपण्डितसमाजे सुप्रसिद्धाः विद्वत्तल्लजाः। एते पडमन्नूरु नारयणाचार्याणां द्वितीयपुत्रत्वेन जनिमलभन्त। एतेषां पितृपादा अपि पण्डितमूर्धन्याः, यैः मध्वसिद्धान्तप्रवर्तकाः अष्टमठाधीशाः सर्वेऽपि न्यायशास्त्रमध्यापिताः। गोविन्दाचार्या अपि स्वपितुः सकाशात्, तथा भण्डारकेरिमठाधीशेभ्यश्च अधिगतवेदवेदान्त विद्याः, गीर्वाण-कर्णाटभाषयोः प्रवचने, काव्यरचनायाम्, काव्यव्याख्यान-करणे च लब्धयशाः, कर्णाटविश्वविद्यालयतः विद्यावाचस्पतिरित्युपाधिना, तथा राष्ट्रपतिसम्माननेन सह पद्मश्रीबिरुदेन च सभाजिताः। एतेषां रचनेष्वन्यतमं तापनीयोपनिषद्भाष्यमभिलक्ष्य किञ्चिदिव विवृणोमि।

स्तोत्रवाङ्मयेऽपि नृसिंहपरत्वप्रतिपादकानि स्तोत्राणि सुप्रसिद्धानि सन्ति। तेषु भगवता शंकरेण पार्वत्यै उपदिशष्टं मन्त्रराजपदस्तोत्रमिति प्रसिद्धं नारसिंहानुष्टुभमन्त्रस्य एतदुपनिषत्प्रतिपाद्यस्य प्रत्येकपदस्य अर्थ-विवरणपरं दरीदृश्यते। तत्र अन्ते शंकरेण निश्चित्य प्रोक्तं 'दासभूताः स्वतः सर्वेऽप्यात्मनः परमात्मनः। अतोऽहमपि ते दास इति मत्वा नमाम्यहम्॥' इति। तेन जीव-परमात्मनोः स्वस्वामिभावः सम्बन्धः प्रधान इति प्रत्यपादि।

तथैव शंकरभगवत्पादैरपि परकायप्रवेशावसरे संभूतस्य क्लेशस्य निवारणार्थं लक्ष्मीनृसिंहस्तोत्रमारचितमिति प्रसिद्धम्। तत्र भगवच्छरणा-गतिरेव मोक्षहेतुरिति न्यरूपि। नृसिंहावतारसमय एव हिरण्यकशिपोः हननानन्तरं नृसिंहस्याग्रहशान्तये प्रह्लादेन नृसिंहस्तुतिरूपं हर्यष्टकमवातारि। 'हरिर्हरति पापानि दुष्टचित्तैपरि स्मृतः। अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः॥' इत्येवमादि। तेन भगवन्नामसंकीर्तनरूपभक्तिरेव भगवदनुग्रह-हेतुरिति निश्चप्रचम्। तथैव त्रयोदशशतके सुप्रसिद्धवैष्णवाचार्यः वादिकेसरि-सौम्यजामातृमुनिनामकः नृसिंहाष्टकमकरोत् -'श्रीमदकलंकपरिपूर्णशशि-

कोटिश्रीधरमनोहर सटापटलकान्त। पालय कृपालय भवाम्बुधिनिमग्नं दैत्यपरकाल नरसिंह नरसिंह ॥ पादकमलावनतपातकिजनानां पीतकदवानल पतत्त्रिवरकेतो । भावनपरायण भवार्तिहरया मां पाहि कमलेश नरसिंह नरसिंह ॥ इन्दुरविपावकविलोचन रमायाः मन्दिर महाभुजलसद्वररथांग । सुन्दर चिराय रमतां त्वयि मनो मे नन्दितसुरेश नरसिंह नरसिंह ॥ ' इत्येवमादिना । तेषां स्तोत्राणां प्रतिपाद्यं सर्वमेतदुपनिषत्सारमिति सतां मतम् ॥

अष्टोत्तरशतोपनिषत्सु दरीदृश्यन्ते तिस्रः तापनीयोपनिषदः —— राम-तापनीयोपनिषत्, गोपालतापनीयोपनिषत्, नृसिंहतापनीयोपनिषत् इति, याभिः क्रमशः रामषडक्षरी, गोपालाष्टादशाक्षरी, नृसिंहद्वात्रिंशदक्षरी च विव्रियन्ते पूर्वोत्तरभागद्वयेन प्रत्येकस्याम्। तापनीयशब्देन सन्तापकः - पापनिवारकः इत्यर्थेन तत्तन्मन्त्रप्रभावः प्रतिपाद्यते ।

नृसिंहतापनीयोपनिषदिति अथर्ववेदान्तर्गता 'उग्रं वीरम्' इत्यादिनृसिंह मन्त्रस्यार्थनिरूपिका उपनिषत्। मन्त्रराज इति ख्यातस्य नारसिंहानुष्टुभ-मन्त्रस्य प्रतिपदमथवर्णनं पंचस्वध्यायेषु आहत्य सप्तसप्ततिमन्त्रैः अत्र विशदीक्रियते । प्रथमाध्याये षोडशमन्त्राः, द्वितीयेऽष्टादश, तृतीये षट्, चतुर्थे षोडश, पंचमे एकविंशतिरिति आहत्य सप्तसप्ततिमन्त्रैः अस्यामुपनिषदि नारसिंहानुष्टुभो मन्त्रराजस्य प्रत्येकं पदं निर्वचनपूर्वकं विवृमिति महानुपकारः नृसिंहोपासकानाम् ।

श्रीमद्भिः गोविन्दाचार्यवर्यैः अस्योपनिषदः पूर्वभागो गभीरं व्याख्यायि । तेषामभिप्राये तापनीयोपनिषदित्येवास्य नाम। तपनो नरसिंह एवेति, तपनशब्द एव संरक्षकत्वेन, सन्तापकत्वेन च नृसिंहपर इति तेषामभिप्रायः । नारसिंहतापनीयोपनिषदित्युक्ते द्विरुक्तिर्भवतीति तापनीयोपनिषदिति निरुपपदैव इयमुपनिषद् गृहीता। अन्ययोस्तु राम-गोपालोपपदग्रहणमस्या उपनिषदो वैलक्षण्यबोधनायेति च एते अभिप्रयन्ति। किं चास्या उपनिषद उत्तरभागो नास्तीति कृत्वा पूर्वभागपर्यन्तमेव एतैर्व्याख्यानं व्यधायि। शंकरभगवत्पादैरपि तथैव व्याख्यातमिति च समर्थयन्ति ।

गोविन्दाचार्यैः उपनिषदोऽस्याः निपुणतरमुपपादनं कृतम्, यद्विना दुरूहा उपनिषदर्थाः नैव प्रकाशयेयुः। व्याख्यानारम्भ एव तापनपदार्थं निरूपयन्, तापं नयति - अपनयति इति व्युत्पत्तिप्रदर्शनेन आश्रितजनपरित्राता भगवान् एव तपनशब्दवाच्यः, सच सूर्यान्तर्वर्ती नारायण एवेति प्रतिपादयन्, तपनगतत्वाच्च तपनः इति व्युत्पत्त्या, 'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः' इति नारसिंह-पुराणप्रमाणेन आदित्यविद्यागम्यः नारायण एवात्र नरसिंहः तपनपदवाच्य इति स्पष्टं विवृणोति। तथैव आदौ शान्तिमन्त्रव्याख्याने चइन्द्र-पूषन्-तार्क्ष्य-बृहस्पतिशब्दैः प्रद्युम्नानिरुद्धसंकर्षणवासुदेवाख्यं नारायणस्य भगवतश्चातुर्व्यूह्यम् न्यरूपि। तत एव विभवावताररूपेणाविर्भूतो भगवान् नृसिंहः प्रह्लादरक्षणेन साधुपरित्राणं, हिरण्यकशिपुनिग्रहेण भगवद्भागवत-विरोधिनिरसनं च कुर्वन् तपनपदवाच्यो जात इति। दुष्टान् तपतीति, शिष्टानां तापमपनयतीति व्युत्पत्त्या तापनो भगवान् नारसिंहः अस्या उपनिषदः प्रतिपाद्यं वस्तु इति तन्मन्त्रनिरूपणपरेयमुपनिषत् तापनीयोपनिषदिति अन्वर्थनामधेया इति साधु न्यरूपितयन्।

व्याख्यानावसरे एतैः बहवो ग्रन्थाः परिचायिताः। अनेकग्रन्थेभ्यः समुद्धृत्य प्रामाणिकतामाविश्चक्रुः। मन्त्रवर्णार्थनिरूपणे निर्वचनदर्शने च अमरकोश-अभिधानकोश-मेदिनीकोशादयः बहवः प्रदर्शिताः प्रतिपादित-भाष्यार्थस्य प्रामाणिकत्वदर्शने नासदासीयसूक्त-ऐतरेयभाष्य-अनुव्याख्या-नादय उट्टङ्किताः। मण्डूकभाष्यटीकापि एतैरारचिता इति व्याख्यानेऽस्मिन् दरीदृश्यते। तत्त्वप्रदीपादयो ग्रन्थाः, नरहरितीर्थादयो ग्रन्थकाराः, मध्वाचार्याश्च अनुपदं समुट्टङ्किताः। तदेवं प्रामाणिकं, विद्वन्मनोहरं, अध्येतृप्रयोजकं च भाष्यमेतैरनुगृह्य महानुपकारः कृतः संस्कृतजगतो, विशिष्य वेदान्तिनाम्। तेभ्य आचार्येभ्यो नमोवाकततिमर्पये सश्रद्धम्।

**बन्नञ्जे इत्युपाख्योऽयं गोविन्दाचार्यपण्डितः।**
**कर्णाटविद्वत्कविषु मूर्धन्यः परिगण्यते ॥**

# आचार्यगोविन्दविरचिभाष्यसमेतस्य चत्वारि सूक्तानीति ग्रन्थस्य विमर्शः

**डॉ. डी. दयानाथः**

गम्भीरपदार्थो वेदः इति हि वेदार्थमर्मज्ञानां मतिः। वेदोऽस्माकं धर्मस्य मूलस्तम्भ इत्यत्र नास्ति संशीतिः। उच्यते हि मनुना 'वेदोऽखिलो धर्ममूलम्'[1] इति। भारतीयविद्वत्परम्परा वेदस्यापौरुषेयत्वं मन्यते। अत एव ऋषयः मन्त्रद्रष्टारः, न तु मन्त्रकर्तारः इति सिद्धान्तमपि प्रतिपादयन्ति सम्प्रदायाभिज्ञाः। कतिपयदार्शनिकाः वेदानामीश्वरकर्तृत्वं स्वीकुर्वन्तोऽपि न तस्य प्रामाण्यविषये विसंवदन्ति। अत एव मनुना प्रोक्तम् –

**धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः।**[2] **इति।**

वेदे प्रामाण्यबुद्धिमनुसृत्यैव आस्तिक-नास्तिकभेदो महर्षिभिः समर्थितः। तदेवोपदिष्टं मनुस्मृतावपि –

**योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्द्विजः।**
**स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ॥ इति**[3] **।**

पूर्वश्लोके यदुक्तं 'श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः' इति4 तत्परामृश्यात्र ते मूले इत्युक्तम्। ते श्रुतिस्मृती इत्यर्थः अवगम्यते। श्रुतिमूलकत्वादस्माकंस्मृतिरपिप्रमाणमित्युपदिष्टम्।वेदभाष्यप्रणयनेऽस्माकं भारतीयाः ऋषयः यथास्थानं स्मृतिग्रन्थानप्युल्लिख्य वेदार्थं द्रढयन्ति। अत एव स्मर्यते 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति[5]।

---

1. मनु. 2.6
2. मनु. 1.132
3. मनु. 2.11
4. मनु. 2.10
5. वायुपुराणम् 1.201

ननु वेदस्य तत्त्वमवगन्तुं विधेयः महान् यत्नः। वेदस्यार्थपरिज्ञानायावश्यकं वेदाङ्गेतिहासपुराणस्मृतिग्रन्थानां यथार्थं ज्ञानम्। अपि च वेदार्थकरणे बह्व्यः पद्धतयः विलसन्ति। स्वीयबुद्धिवैशद्येन विविधैराचार्यैः नैकाः पद्धतयः आश्रिताः सन्ति। निरुक्तकारः यास्कः विविधपद्धतीनां विषये निर्दिशति। तेष्वधिदैवपद्धतिः, अध्यात्मपद्धतिः, आर्षपद्धतिः, परिव्राजकपद्धतिः, याज्ञिकपद्धतिः, नैरुक्त्य-पद्धतिः, आख्यानपद्धतिरित्येताः वेदव्याख्यानपद्धतयः विशिष्टाः प्रमुखाश्च विलसन्ति। यास्कः, वेङ्कटमाधवः, श्रीमत्सायणाचार्यः, भट्टभास्करः, महीधरः, उवटः, आनन्दतीर्थः इत्याद्यनेके आचार्याः महर्षयश्च वेदव्याख्याने विविधशैलीमाश्रित्य वेदार्थावबोधने मार्गं प्रदर्शितवन्तः। एतेषु श्रीमत्सायणाचार्यः, महीधरः, उवटः, भट्टभास्करादयः वेदस्य याज्ञिकपद्धतिमाश्रित्य स्वीयां व्याख्यामलिखन्। अपिच श्रूयते उपोद्बलकमस्याः शैल्याः 'वेदा हि यज्ञार्थम् अभिप्रवृत्ताः' इति[1]। अत एव विविधपद्धत्या यथाशास्त्रं रचितानां विविध-वेदभाष्याणां सद्भिः प्रामाण्यमङ्गीक्रियते। भाष्यकारा प्राचीना अर्वाचीनाश्चेति बहवः अभवन्। भाष्यकाराः स्वीयबुद्धिवैशद्येन वेदार्थ-रहस्यमुद्घाटयितुं प्रयत्नमकुर्वन्। तेषु कतिपय आधुनिका अपि विशेषेण श्लाघनीया एव। तादृशभाष्यपरम्परायां विशेषस्थानमर्हति श्रीमान् बन्नञ्जे गोविदाचार्यमहोदयः। अस्याचार्यस्य कृतयः विद्वत्समाजे बहुश्लाघिताः आसन्। अनेन महोदयेन विरचितासु कृतिषु अन्यतमः ग्रन्थः 'आचार्यगोविन्दकृत भाष्यविभूषितानि चत्वारि सूक्तानि' इति। तदेतस्य ग्रन्थस्य विषये गुणवैशिष्ट्यादिप्रदर्शनपूर्वकं तदीयभाष्यसरणिं महत्त्वञ्चाग्रे यथामति विमृश्य विलिख्यते।

## आचार्यगोविन्दकृतभाष्यभूषितानि चत्वारि सूक्तानि –

आचार्यबन्नञ्जे गोविन्दाचार्यविरचितभाष्यविभूषितानि चत्वारि सूक्तानि इति ग्रन्थे अम्भ्रिणीसूक्तम्, मन्युसूक्तद्वयम्, सपत्नघ्नसूक्तमिति सूक्तचतुष्टयस्य भाष्यं वर्तते। भगवता सह विहरमाणा भगवज्जाया श्रीरेव अम्भ्रिणी इति, प्रलयाम्भसि विहरमाणतया सा अम्भ्रिणीति पदवाच्या इति च प्रपञ्च्य

1. आर्चज्योतिषम् 36

सूक्तमिदं तयैव दृष्टमिति ग्रन्थारम्भे प्रतिपादयति भाष्यकारः। तदुपोद्बलकं लिङ्गमपि प्रदर्शयति गोविन्दाचार्यः। तद्यथा – 'स्वदृष्टं सूक्तमखिलं कामदं हरितुष्टिदम्। वाचोऽम्भ्रिण्याः श्रियोऽङ्गानि श्रीर्लक्ष्मीर्मेन्दिरा रमा' ॥ इति[1] श्रीमदानन्दतीर्थभगवत्पादाचार्यस्य वचनं समुद्धरति। तत्रैव श्रीरघुनाथ-विरचितायां तत्त्वकणिकाख्यव्याख्यायां स्पष्टमस्ति यत् – 'अम्भृणीरूपेण द्रष्टृत्वं, श्रीरूपेण देवतात्वमिति लभ्यते' इति[2] वैयर्थ्यं निवारितम्। इत्थं महता प्रयासेन विविधश्रुतिस्मृत्याद्युद्धरणपूर्वकमम्भ्रिणीसूक्तस्य देवता श्रीरेवेति सिद्धान्तितम्। अथ सूक्तान्तर्गतानामृचां व्याख्याने भाष्यकारस्य वैदुष्यं स्फुटलक्षितं भवति। सूक्ते 'अहं रुद्रेभिर्वसुभिश्चरामि' इति मन्त्रांशे चरामीति शब्दस्य संहरामीत्यर्थः लिखितः। तच्च 'चर गतिभक्षणयोः' इति धातुना 'अतो भिस ऐस्' इत्यनेन ऐस् भवति न वा भवतीति स्थिते 'बहुलं छन्दसि' इति वैदिकप्रक्रियया विकल्पेन रुद्रेभिरिति सम्पद्यत इति प्रतिपादितम्। प्रथमाया ऋचः अन्ते श्रीमत्सायणाचार्यस्य भाष्यमप्युद्धृत्य तन्मतं निराकृतम्। सूक्तेऽस्मिन् अभेदभावमापाद्य व्याख्यां कुर्वतां भाष्यकाराणां मतं निराकरोति। यतः अहं चरामि अहं धारयामीति शब्दैः भेदः स्फुटः प्रतीयत इति गोविन्दाचार्यमतम्। वस्तुतस्तु श्रीमतः सायणा-चार्यस्य यथेष्टं विरोधः कृतः अनेन भाष्यकारेणेति स्फुटं लक्ष्यत एव। अग्रे अस्य सूक्तस्य सर्वासामृचां श्रीतत्त्वप्रतिपादनपुरःसरं विलक्षणं भाष्यं चकार। तथा च सूक्तमिदमृग्वेदे अथर्ववेदे चेत्युभयत्र श्रूयते। गोविन्दाचार्येण तादृशस्थलेषु सूक्तगतमन्त्रक्रमवर्णादिभेदाः अपि प्रदर्शिताः। भाष्यान्ते मन्त्रस्य छन्दोविचारः अपि सुष्ठु प्रतिपादितः। श्रुतावप्युक्तम् – यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पद्यते म्रियते पापीयान् भवति। यातयामान्यस्य छन्दांसि

1. त.सा.सं. 4.62
2. त.सा.सं. तत्त्वकणिका 4.62

भवन्ति। इति[1] श्रुतिवचनमिदं मनसि सन्धार्य आचार्येण भाष्ये तत्तन्मन्त्रे छन्दोज्ञानमपि निराबाधं वर्णयतीति वैशिष्ट्यम्।

अहं सुवे पितरमित्यस्य मन्त्रस्य अहमेव विश्वस्य स्रष्टारं ब्रह्माणं जनयामीत्यर्थः प्रदर्शितः। तज्जननम् अभ्रिण्याः मूर्ध्नि सीमन्तदेशादुक्तम्। ननु प्रजापतेः सृष्टिः भगवतो नारायणस्य नाभिदेशादेवास्माभिः श्रुतम्। तर्हि कथं मूर्ध्निदेशात्प्रजापतेः उत्पत्तिरिति जिज्ञासायामुच्यते भाष्यकारेण – अस्य भूलोकस्य मूर्धन् मूर्धन्यहं पितरमाकाशं सुवे, 'द्यौः पिता पृथिवी माता[2]' इत्यादिश्रुतिवचनाधारेण पितरं दिवं प्रसुवे, अस्य दृश्यमानस्य प्रपञ्चस्योपरि सत्यलोके प्रपञ्चस्य सृष्टिकर्तारं विधातारमहं सुवे इत्याद्यनेकविधाः शास्त्र-सम्मतार्थाः वैदुष्येण प्रतिपादिताः। अथ च कतिपयस्थलेषु व्याकरणस्वर-च्छन्दोविषयाणामपि यथायोगं चर्चां विधाय अर्थनिर्णयमकरोत् भाष्यकारः।

ततो मन्युसूक्तस्यापि भाष्यं व्यरचयत् श्रीगोविन्दाचार्यः। वैदिकवाङ्मये ऋग्वेदाथर्ववेदयोः द्विवारमिदं सूक्तं पठितमिति प्रपञ्च्य तस्य शाखाभेदेन ऋषिच्छन्दोदैवतान्यपि विमृशति। भाष्यकारस्य मेधाविलासदृष्ट्या अस्त्येव गाम्भीर्यं तत्प्रणीतभाष्ये। तदतिरिच्य भाषामाधुर्यमप्यवलोक्यते तदीय-भाष्ये। भाष्ये क्वचित् परस्परसंवादसदृशवाक्यावल्या पाठकान् आवर्जयति। यथा – 'मन्युरिति का देवता ? केचिदाचक्षते क्रोधाभिमानी देवो मन्युरिति। अयि भोः, नोत्तरमलाभि। क्रोधाभिमानी देवः क इति वक्तव्यम्' इत्यादि-वाक्यान्युदाहरणभूतानि। क्रोधाभिमानी देवः मन्युसूक्तस्य देवता इति कथनेन आकाङ्क्षापूर्तिः न भवति। कः खलु स देव इति वक्तव्यमेव। तत्र भाष्यकारः मन्युरितिशब्दस्य क्रोध इत्यर्थकरणं पाश्चात्यमित्याह। ततः अग्रे 'रुद्रः क्रोधसम्भवः' इति स्मृतिवचनाद् रुद्र एव क्रोधाभिमानी इति वक्तुमर्हामः। तथाप्यत्रास्ति विशेषः –

---

1. छ.ब्रा. 3.7.5

2. तै.ब्रा. 3.7.5

**नमोऽतियशसे तस्मै देहिनां परमात्मने ।**
**नारायणाय विश्वाय निर्गुणाय गुणात्मने ॥**

**यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसम्भवः ।**
**योऽसौ योनिर्हि सर्वस्य स्थावरस्य चरस्य च ॥ इति[1] ।**

यस्य क्रोधाद् रुद्रस्यापि सम्भवः सः खलु श्रीनरसिंहावतारो श्रीमन्नारायणः । हिरण्यकशिपोः वधे दर्शितमन्युः नृसिंह एवात्र मन्युपदवाच्यः, स एवास्य मन्युसूक्तस्य देवता चेति सिद्धान्तयति । अथ च मन्युरितिशब्दस्य ज्ञानमित्यर्थः । यस्य भगवतः क्रोधोऽपि ज्ञानमूलकः, न द्वेषमूलकः स मन्युर्नरसिंह एवेति विशिष्टार्थं प्रपञ्चयति भाष्यकारः । इत्थमस्मिन् सूक्ते ऋषिः क इति विचारे तापसो मन्युरिति कश्चित्स्यात् पुरातनो ऋषिरिति । अथ च भाष्यकारः श्रीमन्मध्वाचार्यवचनं प्रस्तुवन् दुःशासनस्य हृदयं विदारयन्तं भीमसेनं सूक्तद्रष्टृरूपेण वदति । एकस्यापि मन्त्रस्य बहवः ऋषयः द्रष्टारः भवितुमर्हन्ति । विविधस्मृतिवचनानामुद्धरणपूर्वकं भीमसेनपर एवार्थः सूक्तस्य क्रियते इति निश्चिनोति भाष्यकारः । अत्र मन्युसूक्तस्य भीमसेनद्रष्टृत्वं हि अभूतपूर्वोऽर्थः । मन्युसूक्तस्य ऋषिविषये न केनापि भाष्यकर्त्रा इदं रहस्यमुद्घाटितम् । अत्र विशिष्यति श्रीगोविन्दाचार्य इति ज्ञेयम् । द्वित्राणां शब्दानां सायणाचार्योक्तानर्थानप्यनुसरति भाष्यकारः । साह्याम, आनुषग् इत्यादिशब्देषु तद् द्रष्टव्यम् । मन्युसूक्तं महाभारतस्य भीमसेनपरमेव व्याख्यातं भाष्यकारेण ।

ननु वेदे लौकिकाख्यायिकायाः सत्त्वे मन्त्राणामप्रामाण्यं वदन्ति पूर्वपक्षिणः । तद्विस्तरेण प्रपञ्चितं पूर्वमीमांसाशास्त्रे 'अनित्यसंयोगान्मन्त्रानर्थक्यम्'[2] इत्यादिसूत्रेषु । एवं स्थिते कथं खलु भाष्यकारेण महाभारतेतिहासस्य भीमसेनपरकं व्याख्यानं कृतमिति जिज्ञासति मनः । परमेतस्योत्तरमपि शास्त्रे उपलभामहे । प्रथमं तावद् गोविन्दाचार्येणैवोक्तं यदेकस्यैव मन्त्रस्य बहवो

1. महा.भा. 12.350.11-12

2. जै.सू. 1.2.39

मन्त्रद्रष्टारो भवितुमर्हन्तीति। द्वितीयं न ह्यत्र महाभारतं वा भीमसेन-कृतदुःशासनवधं वा विवृणुते। अत्र हि भीमसेनः दुःशासनस्य हृदयं विदारयन् सूक्तमिदं ददर्शेति। अतः शास्त्रवचनैः समर्थितमिदं व्याख्यानं भाष्यकृता। यदि पाठकाः चिन्तयन्ति न ह्येष पौराणिककथाप्रसङ्गः कथमपि वैदिकसूक्ते न सङ्घटते, मन्त्रानर्थक्यप्रसङ्गादिति। तर्हि अस्त्युत्तरं जैमिनि-सूत्रस्य शाबर-भाष्ये – 'चोदना हि भूतं, भवन्तं, भविष्यन्तं, सूक्ष्मं, व्यवहितम्, विप्रकृष्टम् इत्येवञ्जातीयकमर्थं शक्नोत्यवगमयितुम्'[1] इति। श्रुतेरकुण्ठित- शक्ति-सम्पन्नत्वात् सर्वमेतत् सुसङ्गतमिति वक्तव्यम्। परन्तु भीमसेनस्य मन्त्रद्रष्टृत्वं मृग्यमेव। परं तदपि महता प्रयासेन स्मृतिवचनैः भाष्यकारेण समर्थितत्वान्न विसङ्गतिरित्येव भाव्यम्।

प्रथमायामृचि 'साह्याम दासमार्यम्' इति पदानामर्थकरणे किञ्चिद् विशिष्टमाह भाष्यकारः। तत्र 'दसु उपक्षये' इति धातोर्निष्पन्नेन दासशब्देन लोकक्षयहेतुर्दुर्जनोऽभिधीयते। तच्चात्र कौरवबलमिति सङ्गतिः। भीष्म-द्रोणादीनामार्याणामपि पराभवो वा इति प्रश्ने, सत्यम्। दुष्टानां कौरवसमुदायानां पक्षे स्थितत्वात् तानपि सह्याम मर्षयेम इति भीमसेनः। अत्र हि दुष्टानां सहचरत्वमपि पापायेति भाष्यकृत् सुष्ठु प्रतिपादयति।

सूक्तेऽस्मिन् सम्पूर्णमहाभारतोक्तमितिहासमाचक्षते। यथा 'अभीहि मन्यो तवसः' इति मन्त्रे अमित्रहेति शब्देन कर्णं बोधयति, यः खलु स्वरूपतः मित्रः सन्निदानीम् अमित्रः अभवत्। तान् सर्वान् निहत्य तेभ्यः छलेनास्मात्तः द्यूतमाध्यमेनापहृतं धनं मयि आभर। तदित्थं मन्युसुक्ते प्रत्यृचं पूर्वाचार्याभिमतं भगवतो श्रीनृसिंहस्तुतिपरं कमप्यपूर्वमर्थं निगदति भाष्यकारः।

द्वितीयमन्युसूक्ते 'त्वया मन्यो 'इति मन्त्रस्य सरसमर्थं प्रत्यपादयत्। तत्र हे मरुत्वः मुख्यवायोः पते इति, ततः सरथमितिपदस्य शरीरमिति च व्याख्यानमकरोत्। अपि च मुख्यवायोः पते अन्तर्यामिन् इत्यर्थेन

---

1. जै.सू.शा.भा. 1.1.2

मध्वसिद्धान्ततत्त्वमपि श्रीगोविन्दाचार्येण प्रपञ्चितमिति वैशिष्ट्यम्। तच्च शास्त्रसम्मतमेवास्ति। यथा – 'आत्मानं रथिनं विद्धि शरीरं रथमेव तु' इति[1] उपनिषद्वाक्यम्। भीमसेनपरमर्थं च - समानं रथमारुह्य रुजन्तः रोजयन्तः शत्रून् पीडयन्तः इति कृतम्। अत्र आध्यत्मिकः आधिभौतिकश्चार्थः सुष्ठु प्रतिपादितोऽभवत्।

ततः ऋग्वेदस्थं सपत्नघ्नसूक्तं व्याख्यास्यति भाष्यकारः। अस्य सूक्तस्य ऋषभसूक्तमित्यपि व्यवहारः। ऋग्वेदे दशममण्डले इदं सूक्तं विद्यते। ऋषभो वैराजः, शाक्करो वा इति सर्वानुक्रमण्यां कात्यायनवचनेन ऋषिर्ज्ञायते। भाष्यकारः अत्रापि भीमसेनमेव मन्त्रद्रष्टारं मन्यते। भीमसेनोऽपि वैराजः भवतीति। तद्यथा विराड्रुरुषत्वात् भीमसेनस्य वैराजत्वम्। शाक्करःइति शक्क इति गजनाम। तत्समुदायः शाक्कं गजता। तेन रमत इति शाक्करो भीमसेन इति। ततो पाण्डवर्षभो भीमसेनः सूक्तद्रष्टा इति गम्यते। देवता तु मन्युसूक्तोक्तः श्रीनरसिंह एव। तथा च सूक्तस्यास्य भीमसेनः ऋषिः, नरसिंहो देवतेति स्थितः। अतो मन्युसूक्तमिवास्यापि भीमसेनपरयैव व्याख्यातम्। सपत्नघ्नसूक्ते मन्युसूक्ते च छन्दोविचारे विश्लेषेण कतिपय स्थलेषु अक्षरपूर्तिं संयोजयति।

**उपसंहारः –**

सर्वोऽपि वेदशब्दः ईश्वरप्रतिपादकः। तदुक्तम् – 'कृत्स्न एव हि वेदोऽयं परमेश्वरगोचरः' इति[2] श्रीमदुदयनाचार्येण। अतः तादृशपरतत्त्वप्रतिपादकस्य भगवतो वेदस्यार्थो प्रयासेन ज्ञेयः। तदुद्दिश्यैव परमकृपया महर्षयः आचार्याः च षडङ्गानां सहायेन पूर्वाचार्याभिमतार्थं स्वीयभाष्यमाध्यमेन द्योतयन्ति स्म। वेदव्याख्याने बह्व्यः पद्धतयः सन्ति, आध्यात्मिक-आधिदैविक-आधिभौतिकादिभेदेन। वेदशब्देषु एकमपि शब्दं निरर्थकं वक्तुं न शक्यते।

1. कठ.उप. 1.3.3
2. न्यायकुसुमाञ्जलिः 5.15

यागादिषु प्रैषमन्त्राणां प्रयोगोऽपि अदृष्टार्थाय न कल्पते। अर्थप्रकाशन-रूपदृष्टप्रयोजनस्य सद्भावात्। अत एवोक्तं पूर्वमीमांसाशास्त्रे – 'लभ्यमाने फले दृष्टे नादृष्टफलकल्पना' इति। अतः वेदशब्दस्य तात्पर्यं स्वगिरा बहवः विद्वांसः प्रतिपादयन्ति। तादृशेषु मूर्धन्याः महर्षयः यास्कः, कात्यायनः, शौनकाद्याः। ततः पूर्वाचार्याः उवटमहीधरभट्टभास्कराद्याः। तत्रापि विशिष्यते पञ्च संहितानां, त्रयोदश ब्राह्मणग्रन्थानां, नैकशास्त्रग्रन्थानां प्रणेता वेदार्थसंरक्षणधुरन्धरः श्रीमत्सायणपादाचार्यः। मन्त्राणामधियज्ञात्म व्याख्यापद्धत्या भाष्यमारचितं श्रीमत्सायणाचार्येण। सायणाचार्यस्य भाष्यं ह्यस्माकं वेदार्थावगमनामकदुर्गे प्रवेशमार्ग इत्यत्र न विप्रतिपत्तिः स्यात्। अत एव पाश्चात्यसंस्कृतविदुषा डॉ. विल्सनवर्येण उक्तम् – 'Sayana undoubtedly had a knowledge of his text far beyond the pretensions of any European scholar, and must have been in possession either through his own learning or that of his assistants, of all the interpretations which have been perpetuated by traditional teaching from the early times' इति[1] न तु पाश्चात्यविदुषां कथनमात्रेणास्य महत्त्वमिति चिन्तनीयम्। परं श्रीसायणभाष्यं पठतां परम्परानुगतविदुषां समेषामिदमेवाभिमतमिति कथनं युक्तियुतमेवेति भाति। सायणाचार्यभाष्यं यास्काभिमतमिति निर्विवादं वक्तुं शक्यते। तथा हि यास्कः – 'अयं मन्त्रार्थचिन्ताभ्यूहोऽभ्यूढोऽपि श्रुतितोऽपि तर्कतः। न तु पृथक्त्वेन मन्त्रा निर्वक्तव्या, प्रकरणश एव तु निर्वक्तव्याः' इति[2] निरुक्ते स्पष्टं निगदति। न ह्यस्त्यत्र कश्चित् सर्ववेत्ता। तदुक्तं –'न हि सर्वः सर्वं जानाति[3]' इति। एवं स्थिते तदीयं भाष्यं तद्वचनं प्रलापमात्रमिति कथनं परम्परागतवैदिकविदुषां कथमपि न रोचत इति तु तथ्यम्।

---

1. Translation of Rigveda, H.H. Wilson
2. निरुक्तम्. 13.12
3. मुद्रा.रा. प्रथमाङ्कः

परमविदुषा आचार्यगोविन्दाचार्येण स्वमत्या चतुर्णां सूक्तानां भाष्यं विरच्य कृपा विहिता। यतो हि दुरूहशब्दानां व्याख्याप्रसङ्गे पदे पदे तदीयशास्त्रपाटवं, छन्दोविषयकज्ञानं, वेदशब्दव्याख्यानसन्दर्भे तदीयदृष्टिः, शब्दशास्त्रज्ञानमित्यादयः अवलोक्यते। अम्भ्रिणीसूक्त-मन्युसूक्त-सपत्नघ्नसूक्तेषु तदीयभाष्यं विशिष्टं किमपि तत्त्वं चित्तमाकर्षयति। अनेन अम्भ्रिणीसूक्तं परादेव्याः श्रियः महत्त्वप्रतिपादिकतया व्याख्याय पाठकान् आवर्जयति। ततो भीमसेनपरतया अन्यानि सूक्तान्यपि व्याख्याय काऽपि नूतनसरणिरेवावतारिता आचार्येणेति वैशिष्ट्यम्। तदित्थम् आचार्य-गोविन्दकृतभाष्येण संस्कृतविदुषां विशिष्य द्वैतवेदान्तानुयायिनां मोदाय कल्पत इत्यत्र नास्ति विचिकित्सा। जगद्धात्र्या श्रिया सहितः श्रीनरसिंहो वेदरूपो मन्त्रराजः भाष्येणानेन भृशं तुष्यतीति दृढं विश्वसिमीति शम्।

****

# शतरुद्रीयस्य आचार्यगोविन्दकृतं भाष्यम् – सविमर्शो विचारः

प्रो.एन्. के. सुन्दरेश्वरन्

## भूमिका

विद्यावाचस्पत्याद्यनेकबिरुदैर्विभूषितेन मध्वकृपासुधाभिषिक्तेन विद्या-कुशलेन बन्नञ्जे इत्युपाह्वेन आचार्यगोविन्देन विरचितं शतरुद्रीयाख्यस्य महामन्त्रस्य सम्प्रदायबद्धं गीर्वाणवाणीनिबद्धं भाष्यं, वैदिके धर्मे श्रद्धावतां समेषां विदुषां विविदिषूणां च मोदावहं विराजते। यद्यप्ययं मन्त्रराशिः बह्वीषु श्रुतिशाखासु ईषत्पाठभेदेन समुपलभ्यते तथापि कृष्णयजुर्वेदान्तर्भूततैत्तिरीय शाखान्तःपाती अग्निकाण्डगतः चितिहोमप्रयुक्तो मन्त्रराशिरेव शतरुद्रीया-भिख्यया सुविख्यातः, यश्च श्रीरुद्रप्रश्न इति रुद्रप्रपाठक इति रुद्रोपनिषदिति च बहुधा व्यपदिश्यते। सर्वपापनिवर्तकत्वेन उपास्यत्वेन मोक्षप्रदत्वेन च श्रुतिस्मृतीतिहासपुराणैः अनेकैर्वचःप्रकारैः संश्लोकितमहिमेदं मन्त्ररत्नं श्रद्धावता अनेनाचार्येण 'सर्वे वेदास्त्र्यर्था विष्णुपराश्चे'ति समर्थयद्भिः श्रीमद्भिर्मध्वाचार्यैः प्रदर्शितरीत्या विष्णुपरतया, प्राणपरतया – विशिष्य मुख्यप्राणस्य अवतारत्रितयपरतया, शिवपरतया च तत्त्ववादानुगुणं व्याख्यातमित्येतत् निदानभूतं विद्वन्मोदस्य सज्जनप्रमोदस्य च। तत्रापि सायणभट्टभास्करयोः प्रत्नभाष्ययोः प्रदर्शितादप्यधिकमर्थं प्रदर्शयत् तत्र तत्र भट्टभास्करमतविमर्शनपरञ्च वर्तते भाष्यमिदमिति, किञ्च परिशीलितानेक-ग्रन्थेन आचार्येण प्रमाणवाक्यान्युद्धृत्य सयुक्तिकं स्वमतमुपस्थापितम् चेत्येतदधिकां सम्मुदं वितनोति।

## शतरुद्रीयमन्त्राणां महिमातिरेकः

धर्मादेव श्रेयः, धर्मश्च वेदप्रमाणैकगम्यः, इति सर्वस्यापि वेदभागस्य श्रेयस्साधनत्वं सद्भिः सर्वैः साम्प्रदायिकैरूरीकृतम्। परम् इयमस्ति

वस्तुस्थितिः यत् केषाञ्चन वेदभागानां कर्माङ्गत्वेन श्रेयस्साधनत्वं, केषाञ्चिदपरेषां साक्षाद्ज्ञानसाधनत्वमिति भेदो दृश्यते। शतरुद्रीयस्य परं, न केवलं कर्माङ्गत्वं, नापि केवलं ज्ञानसाधनत्वं किन्तु सर्वोपास्यत्वं साक्षात्पाप-निवारकत्वञ्च अभिहितमखिलेनागमेन।

कैवल्योपनिषदि ब्रह्मविद्याविविदिषयोपसन्नायाश्वलायनाय ब्रह्मतत्त्वम् उपदिश्य तत्साधनत्वेन अमुं मन्त्रराशिं निर्दिशन् परमेष्ठी एवं निगदति – **‘यः शतरुद्रीयमधीते सोऽग्निपूतो भवति सुरापानात्पूतो भवति ब्रह्महत्यात्पूतो भवति कृत्याकृत्यात्पूतो भवति तस्मादविमुक्तमाश्रितो भवत्यत्याश्रमी सर्वदा सकृद्वा जपेत्।’** इति ‘अनेन ज्ञानमाप्नोति संसारार्णवनाशनम्। तस्मादेवं विदित्वैनं कैवल्यं पदमश्नुते॥’ इति च।

अत्र कृत्याकृत्यात्पूतो भवतीत्येतदन्तेन पापनिवर्तकत्वं, अविमुक्तम् इत्यारभ्य सकृद्वा जपेदित्यन्तेन उपास्यत्वं, अनेनेति श्लोकेन च ज्ञानसाधनत्वं कैवल्यसाधनत्वञ्चाभिहितम्।

जाबालोपनिषदि अविमुक्तोपासनमधिकृत्य उक्तवन्तं याज्ञवल्क्यं प्रत्ययं प्रश्नः – ‘किञ्जप्येनामृतत्वं नो ब्रूहीति’ इति। तस्य च ‘शतरुद्रीयेण ..... एतानि ह वा अमृतस्य नामधेयानि एतैर्ह वा अमृतो भवतीति’ इति याज्ञवल्क्यस्य उत्तरम्। अयञ्च श्रुत्यंशः शतरुद्रीयस्य उपास्यत्वं ज्ञान-साधनत्वञ्च दर्शयति। विश्वेश्वराख्यः स्मृतिकारः ‘श्रीरुद्रं प्रणवं चैव नित्यमावर्तयेद्यतिः’ इति यतिभिरपि जपार्होयं मन्त्रः इत्यनुशास्ति।

सायणाचार्यः शतरुद्रीयप्रपाठकस्य भाष्ये भूमिकात्वेन

**‘रुद्राध्याये पञ्चमे तु चित्यग्नौ होम इष्यते।**
**कर्मप्रकरणे पाठात्कर्माङ्गत्वमपीष्यते॥**

**ज्ञानहेतुत्वमप्यस्य तथोपनिषदीरितम्।**
**किं जप्येनामृतत्वं नो ब्रूहीत्युक्तो मुनिर्जगौ॥**

**शतरुद्रीयकेणेति जाबाला आमनन्ति हि ।**
**स्मृत्यागमपुराणेषु रुद्राध्यायप्रशंसनम् ॥**
**बह्वस्ति तद्विस्तरेण रुद्रकल्पेऽभिधास्यते ।**
**इह कर्माङ्गता यादृग्वर्णिता ब्राह्मणेन ताम् ॥**
**बोद्धुं शब्दार्थमात्रस्य विवृतिः क्रियते स्फुटा ॥'**

इत्यभिदधाति । '(तैत्तिरीयसंहितायां चतुर्थकाण्डे) पञ्चमो योऽध्यायः सोऽयं चितिहोमे विनियुज्यते ; अत एवास्य कर्माङ्गत्वं ज्ञायते; उपनिषदा अस्य ज्ञानहेतुत्वमप्युदीरितम् ; रुद्राध्यायस्यास्य प्रशस्तिः स्मृत्यागमपुराणैः संश्लोकिता वर्तते । परम् अत्र मया ब्राह्मणोक्तया रीत्या यदस्य कर्माङ्गत्वं तत्प्रतिपादनाय यावदाश्यकं तावन्मात्रम् शब्दार्थविवृतिः क्रियते' इति प्रतिजानीते ।

भट्टभास्करोऽपि स्वभाष्यभूमिकायामेवमाह - **'अयञ्च ब्रह्मविद्या-रूपत्वाद् उपनिषन्मन्त्रराशिः प्रश्नः । अत एव रहस्यप्रकरण आम्नायते । .... अनया च रुद्रोपनिषदा ब्रह्मविद्या प्रतिपाद्यते ।'** इति । परं सोऽपि कर्माङ्गत्वेनैव व्याख्याति । उक्तञ्च तेन कण्ठतः - 'ब्राह्मणविनियोगानुरोधेन त्वत्र व्याचक्ष्महे' इति । प्रतिमन्त्रं ऋष्यादिकं प्रदर्श्य मन्त्रार्थं च निरूप्य पापक्षयवित्तारोग्यायुष्यादिफलदा बहवः प्रयोगा अपि वर्णिताः । उक्तञ्च भूमिकायाम् - **'अथवा यज्ञसंयुक्ताः प्रयोगाः श्रुतिस्मृतीतिहासपुराणादिषु प्रसिद्धा मोक्षधर्मपापक्षयवित्तारोग्यायुष्यादिफलदा बहवो विद्यन्ते । तेषु च कांश्चिद्ब्रूमः । प्रतिमन्त्रं च प्रयोगविशेषाः पुरस्ताद्वक्ष्यन्ते ।'** इति ।

अभिनवशङ्कराख्यः शतरुद्रीयभाष्यकारः सुदीर्घे उपोद्घाते मन्त्रराशेरस्य कर्मपरताम् अग्निपरतां च खण्डयित्वा ज्ञानैकपरतां समर्थयति । परम् अनेनापि कृत्स्नो मन्त्रराशिः ज्ञानपरतया न व्याख्यातः । तत्र तत्र ब्रह्मविद्याप्रतिपादकतया व्याख्यातमित्येव । तदपि मन्त्रसामान्यार्थानुरोधेन ।

नमोवाकमालारूपस्य (यन्मूला नमकमित्यभिख्याऽस्य) रुद्रप्रसादन-

रूपस्य वैश्वरूप्यध्यानरूपस्य अस्य मन्त्रराशेः कथं कर्माङ्गता, कथञ्च आध्वर्यवः यागवेदः इति प्रथिते याजुषे वेदे अन्तःपातिताऽस्य इत्येतदचिन्त्यं सद् अस्य महिमानं सहस्रगुणीकरोति ।

**भाष्यस्य स्वरूपम्**

तस्यास्य पञ्चाक्षरमहामन्त्रगर्भितस्य महितस्य मन्त्रराशेः विदुषा विद्याविशारदेन आचार्यगोविन्देन विष्णुपरतया, प्राणपरतया शिवपरतया च तत्त्ववादानुगुणं विस्तृतं भाष्यं विहितम् । तत्र शिवपरता नानुपात्तेति श्रद्धेयमेतत् । उक्तञ्च तेन 'प्रथमं निवेदनीयम्' इति विहितशीर्षिकायां प्रस्तावनायाम् –

**'यद्यपि अस्त्येका तैत्तिरीयशतरुद्रियस्य तत्त्ववादसम्प्रदायानुसारिणी टीका, नवरत्नपुरुषोत्तमाचार्येण विरचिता, यः परस्ताद् उत्तरादिमठीय-पीठमारुह्य सत्यधर्मतीर्थाख्यो यतिर्बभूव । तत्र सर्वे मन्त्राः रामपरतया व्याख्याताः । उपसञ्जहार च - 'रामो मुख्यार्थोऽमुख्यस्तु स्थाणुरित्यशेषम्-अतिमङ्गलम्'** इति । **अनुमन्यामहे तदपि । अथापि न तत्रार्थत्रयपरता विवृता । न प्राणपरता । नतरां शिवपरता । विष्णोरपि रामाख्यावतारपरतैव परं निरूपिता । पदपाठभेदश्च नात्यन्तमादृतः ।'** (पृ. 5) इति ।

न केवलं शिवपरता न त्यक्ता, किन्तु शिवमहिम्नः श्लाघाऽपि न न विहिता । नमस्तारायेति मन्त्रांशस्य व्याख्याने 'वाराणस्यां मृतानां तारकं रामनामोपदिशतीति शम्भुरपि तारः' (पृ. 84) इति प्रस्तुतिर्दृश्यते । उपसंहृतिपद्येषु च

**'रुद्रं नारायणं देवं रुद्रं प्राणं त्रिरूपिणम् ।**
**रुद्रं कपालिनं शम्भुं शतरुद्रीयगं नुमः ॥**

**शिवाय त्र्यक्षाय त्रिदिवपतिमुख्यामरपुषे**
**शिवाश्लेषप्रीणद्धवळभसितस्निग्धवपुषे ।**

**त्रिलोकीरक्षायै त्रिपुरहर नानायुधजुषे**
**नमस्तुभ्यं दिव्यस्तुतिभृतनमोवाकयजुषे ॥'** (पृ. **129**)

इति शिवस्तुतिरपि विहिता जागर्ति ।

एकैकस्य मन्त्रस्य सस्वरः संहितापाठो दत्तः, तमनु पदपाठश्च प्रत्तः । तदनु 'यो ह वा अविदितार्षेयच्छन्दोदैवतेन ब्राह्मणेन मन्त्रेण यजति वाऽध्यापयति वा स्थाणुर्वा गर्तं वा पद्यते प्र वा मीयते पापीयान् भवति तस्मादेतानि विद्यात्' इत्यनुशासनमनुरुध्य ऋषिच्छन्दोदैवतनिरूपणं विहितम् । अनन्तरं मन्त्रस्य सामान्यार्थमुक्त्वा भगवत्पराणां नाम्नां तथा अन्येषाञ्च पदानां यथोचितं नूत्नं बह्वर्थजातञ्च प्रदर्श्य नारायणपरतया प्राणपरतया शिवपरतया च अर्थविशेषाः प्रदर्शिताः प्रथन्ते । उपसंहृतौ च, उपक्रमे या प्रतिज्ञा विहिता तदनुसारं - नारायणपरतया त्रिरूपप्राणपरतया शिवपरतया च - शब्दतः अर्थतश्च सम्यगालोड्य भाष्यं विहितमिति (रुद्रं नारायणं देवं रुद्रं प्राणं त्रिरूपिणम् । रुद्रं कपालिनं शम्भुं शतरुद्रीयगं नुमः ।।) स्वस्य कृतकृत्यतां स्फोरयति ग्रन्थकारः ।

## पदानामनेकधाऽर्थवर्णनम्

मन्त्राणां तदन्तर्गतानां पदानाञ्च अर्थविचारे महान् यत्नो विहितः आचार्येण । ऋक्संहिता, तथा अन्या अपि बह्व्यः श्रुतिशाखाः, तैत्तिरीय-प्रातिशाख्यम्, निरुक्तम्, अष्टाध्यायी, दशपादिका, दशपादिकावृत्तिः, काशिका, सरस्वतीकण्ठाभरणम्, यादवप्रकाशादयोऽनेके कोशग्रन्थाः, श्रीमद्भागवतम् इति अनेकेभ्यः प्रामाणिकग्रन्थेभ्यः वाक्यानि प्रमाणत्वेन उदाहृत्य स्वविचारस्य द्रढिमानं समुद्घोषयति च ।

बहवः अर्थविशेषाः प्रदर्शिता नैकेषां पदानाम्, येषु केचन अप्रत्नाः श्रद्धेया रमणीयाश्च । तथा हि 'नमो रोहिताय स्थपतये वृक्षाणां पतये नमः' इत्यस्य नमोवाकमन्त्रस्य अर्थवर्णनवेलायां वृक्षशब्दस्य 'देहः', 'ज्ञानी' चेति अर्थद्वयं दर्शयति -

**'स्थपतिर्यान् वृक्षान् व्रश्चित्वा रमणीयं विग्रहं तक्षति तेषां वृक्षाणां पतये नमः। वृश्च्यन्ते इति वृक्षा देहाः। 'समानं वृक्षं परिषस्वजाते' इत्यस्यवामीये। तेषां स्वामी। 'पुरमेकादशद्वारमजस्य' इति श्रुतेः। ये पुनरविद्यां वृश्चन्ति ते वृक्षाः ज्ञानिनः। तेषामयं पाता।'** (पृ. 30) इति।

विकिरिदः इति पदस्य अनेके नूत्ना अर्थविशेषाः प्रदर्शिताः।

**'भक्तानामपेक्षितं विकिरन् विकिरन् ददातीति विकिरिदः। 'विविधं किरन्ति हिंसन्तीति विकिरयः पापव्याधयः। तेषां दाता खण्डयिता।' इति केचित्। कीर्यन्त इति किरयो धनानि विशेषेण ददातीति विकिरिदः' इत्यन्ये।'** (पृ 109) इति।

पञ्चमे अनुवाके षष्ठे नमोवाकरूपे 'नमो गिरिशाय च शिपिविष्टाय च' इति मन्त्रे व्याख्यायमाने शिपिविष्टशब्दस्य सूर्यरश्मिगतो नारायण इति, यज्ञभुङ्नारायण इति पशुपतिरिति च अर्थविवरणं करोति। तदीयान्येव वचांसि पश्यत –

'शिपिविष्ट' इति विष्णोरेव नाम। 'विष्णुः शिपिविष्ट' इति श्रुतेः। 'नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः' इति स्मरणाच्च। लोके हि गिरिश इति शिवः। शिपिविष्ट इति विष्णुः। विद्वद्रूढ्या तयोरिह सामानाधिकरण्यमिह कथ्यते। कथमथ शिपिविष्टः? शिपयः सूर्यरश्मयः इति यास्कः। तेषु सन्निधाय जीवलोकं हर्षयन् हृषीकेशः शिपिविष्टः। स्कान्दवचनं चात्र भवति – 'शैत्याच्छयनयोगाद्वा शीति वारि प्रचक्षते। तत्पानाद्रक्षणाद्वापि शिपयो रश्मयो मताः। तेषु प्रविष्टः सविता शिपिविष्टस्तदोच्यते।' इति। समानमेतत् नारायणप्राणरुद्राणाम्। 'यज्ञो वै शिपिः'। सर्वयज्ञानां भोक्ता च प्रभुश्च शिपिविष्टः। 'पशवो वै शिपिः'। तेन शिपिविष्टः पशुपतिः। शिपिविष्टः शिवः शौरिः इत्यभिधानम्। सर्वप्राणिष्वन्तर्यामितया विष्टः।' (पृ. 61)

प्रथमेऽनुवाके विज्यं धनुरिति मन्त्रे निषङ्गथिशब्दस्य खड्ग इत्यर्थं विवृण्वन् भट्टभास्करोक्तं व्याख्यानं दोषयुक्तमिति दर्शयति भाष्यकृत्।

सायणेन निषङ्गथिशब्दस्य खड्गकोशः अर्थः उक्तः। निष्पत्तिर्न दर्शिता। भट्टभास्करेण तु -**'नितरां नियमेन वा कोशेन सज्जत इति निषङ्गः खड्गः। स निधीयते यत्र सः इति निषङ्गथिः खड्गकोशः। परोक्षवृत्त्या धकारस्य थकारः। 'परोक्षप्रिया इव हि देवाः' इति। ... किञ्चिन्न्यूनं भवन-माभवनम्। तच्च खड्गेन विना सत्तामात्रेणावस्थानम्। निषङ्गधारण-स्वभावस्य खड्गकोशस्य निषङ्गेण सहावस्थानं पुष्कलभावः। तेन विनावस्थानम् आभवनम् इति। तेन सोपि खड्गरहितो वर्ततामिति भावः'** इति लिख्यते। तमिममंशमादाय गोविन्दाचार्येण एवं लिख्यते –

**'निषङ्गथिर्बाणाधारः' इति स्थूलं व्याख्यानम्। तदा निषङ्ग इत्येव पर्याप्तम्। किं वृथा अधिकाक्षरोपादानेन। यत् कश्चिदाह - 'नितरां नियमेन वा कोशेन सज्जत इति निषङ्गः खड्गः। स निधीयते यत्र सः इति निषङ्गथिः खड्गकोशः।' तदप्यपेशलम्। न हि निषङ्गशब्दः खड्गवचनः प्रसिद्धः। अपि चास्मिन्नर्थे 'निषङ्ग + थिः' इति द्वैपद्यं स्यात् प्रतृण्णे। नैवं पदकाराः पठन्ति'** (पृ. 18) इति।

किमेतैराचार्यैः भट्टभास्करोक्तस्य वाक्यस्य शेषभागो न दृष्टः स्यात् ? भट्टभास्करो लिखति – 'यद्वा निषज्जते कोश इति निषङ्गथिः खड्गः। 'नौ षञ्जेर्गथिन्' इति गथिन् प्रत्ययः। आभुरस्तु। न्यूनशक्तिरस्तु। कुण्ठितप्रभाव-मीषद्भवनमिति।' इति। किञ्च प्रतृण्णे द्वैपद्यं कथम् ? निषङ्गथिरिति निषङ्ग थिः इति स्यात् पदपाठे। एकमेव पदम्।

भाष्यकृदयं सोमशब्दस्य पवमान इति नारायण इति च अर्थवर्णनं कथं करोतीति पश्यन्तु – ' उत्कृष्टा मा प्रमा उमा तया सहितः सोमः पवमानः। सौम्यगुणः। सर्वजीवोत्कृष्टया मया रमया सहितः सोमो नारायणः।' (पृ.81) इति। उ मा उत्कृष्टा प्रमा , उ मा सर्वजीवोत्कृष्टा रमा इत्युभयत्र व्याकरणशास्त्रीया संस्कारसम्मतिः कथं वा साधयितुं शक्यते इत्येतच्चिन्त्यमेव।

## 'गुणानुसन्धाने मग्ना वयम्'

न केवलमत्र, बहुत्र एतादृशे अर्थविवरणस्थले नैरुक्तनयेन, संस्कार-सम्पन्नाया निष्पत्तेर्दर्शनं नास्माकीनं कर्तव्यमिति रीतिरवलम्ब्यते। सूचितश्चैषः अर्थविशेषमार्गणे, तथा पूर्णगुणस्य नारायणस्य गुणानुसन्धाने च नैर्भर्यातिरेकः स्वयं ग्रन्थकृता। तथा हि 'नमो भवाय च रुद्राय च' इति नमोवाकरूपस्य मन्त्रांशस्य विवरणे - 'अर्थविशेषमार्गणेन गुणानुसन्धानमग्ना वयम्'(पृ. 58) इति कथितम्। तथैव अनुपदमागच्छतः शर्वशब्दस्य 'शं रुन्धानो वातीति वा' इति अर्थं विवृण्वानेन 'अक्षरसाम्याद्धि निर्ब्रुवन्ति' (पृ.59) इति ख्याप्यते। आद्यानुवाकस्य 'या ते रुद्र शिवा तनूरघोरा-पापकाशिनी' इति तृतीयं मन्त्रं विवृण्वता, प्रथमम् अपापकाशिनी इति पदपाठानुसारं पदं प्रदर्श्य अर्थञ्च संवर्ण्य पापकाशिनी इति पदं भवतु, पापकानश्नातीति च विवरणं भवतु इति कथयति। एवञ्चेत् स्वरे भेदः भवेत्किल संहितायाम् इत्याशङ्कायां वदति इष्टापत्तिरिति, यतः अर्थविशेष एवास्माकं विशिष्टा दृष्टिरिति। तदीयानीमानि वचांसि – 'पापकाशिनी इति च प्रतृण्णम्। ननु स्वरः कुप्यति। अर्थविशेषलाभाय क्वचित्स्वरभङ्गोऽपीष्यते' (पृ. 7) इति।

## क्लिष्टा अर्थकल्पनाः

एवं बहवः नूत्ना अर्थविशेषाः पदानां प्रदर्श्यन्ते इत्येतदस्ति। परं काश्चिदर्थकल्पनाः क्लिष्टसाध्या इवाभान्ति। कपर्दिशब्दः कथं प्राणपरत्वेन नारायणपरत्वेन च व्याख्यायते इति पश्यत - 'कं परं मौक्तानन्दं ददातीति कपर्दो नारायणः। तस्यायं भक्तः कपर्दी प्राणः। कं परं ददातीति कपर्दं ज्ञानम्। ज्ञानेनैव परं पदम् इति स्मरणात्। तादृशस्य मोक्षसाधनस्य ज्ञानस्य विषयोऽयमिति कपर्दी नारायणः' (पृ. 18)। एवमेव भवशब्दस्य 'भाति वाति चेति भवः' (पृ. 54) इति निष्पत्तिः न सूपादेया सूपपादा वा। आलाद्यशब्दस्य कथङ्कारम् अर्थविवरणं विधीयत इति पश्यत –

'आसंसारान्तम् अलं पर्याप्तं कर्मफलमदन्तीत्यालादाः मुक्ताः। तेषु गताय तन्नियामकाय (आलाद्याय) च नमः।' । एतेनातृप्त इव अर्थान्तरमपि अनुपदं प्रदर्शयति सुधीरयमाचार्यः। तद्यथा-'अदनीयं च आ समन्ताद् अलमाद्यमनेन। आलान्ति आद्यमनेनेति वा' (पृ. 86) इति।

वारिवस्कृत इति शब्दः नारायणपरतया भीमपरतया प्राणपरतया शङ्कर-परतया च कथं कथञ्चित्समर्थ्यत इत्येतत् पश्यन्तु सुमनसः – 'वरिवस्कृतः, दैवस्य मानुषस्य च धनस्य दातारः, देवाः। इहत्या विद्वांसो धनाढ्याश्च। तेषामयं स्वामी। विदुषि स्थित्वा अयमेव ज्ञानदाता। धनिनि स्थित्वा अयमेव धनदाता च। वरिवस्कृतामयं वारिवस्कृत इति। वरिवो वरिवस्या। वरिवस्कृतामयं वारिवस्कृतो भक्तवत्सलः। वारिणि वासः कृतोनेनेति वारिव-स्कृतः समुद्रशायी नारायणः ....सर्वमेतत् यथायथं प्राणशङ्करयोश्च। ..... वारिणि समुद्रमध्ये द्वारकायां वासं कृतवानिति वारिवस्कृत् कृष्णः। वारिव-स्कृतः कृष्णस्यायं भक्ताग्रणीरिति वारिवस्कृताय भीमाय नमः। ये भगवतः वरिवस्याकृतस्तेषामयं स्वामीति च वरिवस्याकृत एव वारिवस्कृतः।'(पृ. 32) इति।

पशुशब्दः, श्वन्–शब्दश्च वेदरूपे अर्थे व्युत्पादितः। ज्ञानानन्दरूपी इत्यर्थोऽपि श्वन् शब्दस्य दर्शितः। दशमानुवाकस्य प्रथममन्त्रे 'द्रापे अन्ध-सस्पते' इत्यस्य भाष्ये 'एषां पुरुषामेषां पशूनाम्' इत्यंशस्य अस्मदीयानां पुत्रादीनां पुरुषाणाम्, गवादीनां पशूनां च इत्यर्थं प्रातीतिकार्थतया प्रदर्श्य, पुरुषाः ज्ञानार्थिनः, पशवश्च वेदाः इति आन्तरोऽयमर्थ इति प्रस्तौति सूरिरयम्। एतदीयानीमानि वचांसि– 'एषामस्मदीयानां पुरुषाणां पुत्रादीनाम्, पशूनाञ्च गवादीनाम् इति बाह्यः प्रातीतिकोऽर्थः। पुरुषाणां ज्ञानिनां ज्ञानार्थिनाम्, पशूनां वेदानां ज्ञानसाधनानां वेदानां चेत्यान्तरः। 'पान्ति शंसाधनाश्चेति वेदाः पशव ईरिताः' इति स्मरणात्।' (पृ.97) इति।

'नमः श्वभ्यः श्वपतिभ्यश्च वो नमः' इति मन्त्रांशस्य विवरणवेलायां लिख्यते तैः – 'शमानन्दः। वातीति वा ज्ञानम्। श्वभ्यो ज्ञानानन्दस्वरूपेभ्यो

नमः। श्वयन्ति भगवन्तमेव गच्छन्ति गमयन्ति चेति श्वानो वेदाः। तेषां पतयः। ज्ञानानन्दस्वरूपाणां जीवानां पतयश्च ते।' (पृ. 56)

भगवति नारायणे गुणपूर्णस्वरूपे दोषारोपं वारयितुं, तथा तस्मिन् वैश्वरूप्येण यद् वैरूप्यं कल्प्यते अन्यैः, तदपाकर्तुं च प्रवृत्तस्य, कथञ्चित् सर्वेषां नाम्नां प्राणावतारपरतया नारायणपरतया च विवरणं कर्तुं विधीयमानानल्पप्रयासस्य च विपश्चितोऽस्य एतादृशा क्लिष्टा निष्पत्तिप्रकाराः अर्थकल्पनाश्च दुर्वाराः संवृत्ताः।

## प्राणावतारत्रितयपरत्वम्

सर्वेषां शतरुद्रीयगतभगवन्नाम्नां मुख्यप्राणस्य अवतारपरतया – हनूमत्परतया, भीमपरतया मध्वाचार्यपरतया च - अर्थप्रत्यायने यो निर्बन्धरूपः सङ्कल्पो विहितः, ग्रन्थादौ या च प्रतिज्ञाऽऽहिता तद्रक्षणव्यग्रेण च इतिहासकथांशान् उन्नीय तदनुगुणं तत्साहाय्येन च कथञ्चित् अर्थो विवृतो बहुत्र। अनेकत्र मध्वाचार्यपरतया अर्थदर्शनाय आचार्याणां वादशूरत्वं मायावादखण्डनचण्डताश्च उपयुङ्क्ते च।

क्लिष्टतां नेयार्थताञ्च बिभ्रतः एते अर्थदर्शनप्रकाराः भाष्यस्यास्य गरिमाणं मनाग्ग्रसयन्तीति विपश्चितः कदाचिदाचक्षीरन्। परम् एते मानसीमुल्लाघतामुल्लासयन्तीत्यत्र नास्ति संशयस्यावकाशः। केचन तेषु दीयन्तेऽधस्तात्।

1.रोहितः – रुरोह रामोऽस्यांसमिति च रोहितः – हनूमान्। (पृ. 31)

2.वाणिजः–एतदर्थं वाणी द्रौपदीत्वेन जातेति वाणिजो भीमः।(पृ. 31)

3.वञ्चते – लङ्कां वञ्चते गच्छते रावणं च वञ्चयते हनूमते। (पृ. 39)

4.स्तायूनां पतये– स्त्यायन्ति सर्वान् शब्दान् भगवद्गुणतया अनुसन्दधतीति स्तायवः तेषां पतये मध्वाय नमः। अथ चान्ततो वेदद्रोग्धारश्छद्मवैदिकाः स्तायवस्तेषां पातयित्रे। (पृ. 39)

5.निचेरुः – लङ्कायां सीतान्वेषणाय गृहाद्गृहं नितरां चरन् हनूमान्

निचेरुः। (पृ. 40)

6.हिरण्यबाहुः– रावणेनापह्रियमाणया सीतया ऋश्यमूके पातितं हिरण्मयमाभरणं रामाय वाहयति प्रापयतीति हिरण्यबाहुर्हनुमान्। (पृ. 23)

7.सहमानः – रावणकृतं पुच्छदाहादिकमपराधं सहत इति सहमानो हनुमान्। (पृ. 37)

8.निव्याधी – कौरवसेनां निविध्यतीति निव्याधी भीमसेनः। (पृ. 37)

9.असिमद्भ्यः – रक्षसस्त्रिशिरसो हस्तादसिमाच्छिद्य तेनैव तं जघान इत्यसिमान् हनुमान्। गौरवाद्बहुवचनम्। (पृ. 42)

10. नक्तं चरद्भ्यः – जतुगृहान्नक्तमेव निर्गत्य मातरं भ्रातॄंश्च ररक्षेति नक्तं चरन् भीमः। गौरवाद्बहुवचनमिति सूचयन्नेकवचनेनोपसंहरति। (नमोऽसिमद्भ्यो नक्तश्चरद्भ्यः प्रकृन्तानां पतये नमः इति मन्त्रांशः। अत्र प्रकृन्तानां पतये इत्यत्रत्य एकवचनोपसंहार उद्दिष्टः) (पृ. 42)

11. शूरः – मध्वश्च वादशूरः। अवबिभेद च मायावादम्। (पृ. 72)

12. उग्रः – नखैरुग्रो हनुमान्। नादेन च। आयुधैः नादेन च भीमः। तर्कैर्मध्वः। (पृ. 82)

13. हनीयसे (हनीयान्) – राक्षसान् हन्ति हनुमान्। कौरवान् हन्ति भीमः। मायावादं हन्ति मध्वः। (पृ. 84)

14. श्रुतसेनः –हनुमदवतारे कपिसेना। भीमत्वे पाण्डवसेना। मध्वत्वे विद्वत्सेना। (पृ. 72)

**भट्टभास्करमतखण्डनम्**

‘प्रथमं निवेदनीयम्’ इति शीर्षकाङ्कितायाम् आमुखप्रस्तुतौ गोविन्दाचार्यः भट्टभास्करभाष्ये दोषसद्भावं प्रस्तौति। तदनुसरणेन मन्त्रार्थनिर्णयः अशक्य एवेत्यभिदधाति च। श्रौतसम्प्रदायानभिज्ञसदृक्षः, श्रुतिहृदयमवगन्तुमप्रभुः, प्रज्ञावादमात्रबलः इति भट्टभास्करमिश्रान् दूषयति च। तत्र च हेतुद्वयमुपस्थापितम्।

शतरुद्रियस्य केवलं शिवपरतया व्याख्यानम् ; अर्थानां निर्वर्णने, निर्वचननिरूपणे, वैदिकव्याकरणविश्लेषणे च तत्र तत्र स्खलनञ्चेति। आचार्यस्यैव वचांस्यत्र तथैवानूद्यन्ते – 'तत्र भट्टभास्करादयः श्रौतसम्प्रदायानभिज्ञा इव शतरुद्रियं केवलं शिवपरतया व्याचक्षते, नूनं दुराग्रहग्रस्ततया श्रुतिहृदयमवगन्तुमप्रभवः। शोच्या हि ते प्रज्ञावादमात्रबलाः। अर्थानां निर्वर्णने, निर्वचननिरूपणे, वैदिकव्याकरणविश्लेषणे च तत्र तत्र स्खलन्तो दृश्यन्ते। तदुत्तरत्र किञ्चिदिव प्रदर्शितम्। तस्मान्न शक्यं तदनुसरणेन मन्त्रार्थो निश्चेतुम्।' (पृ. 5)। भाष्ये च स्वीये तत्र तत्र भट्टभास्करमतम् (तन्नामग्राहं विना, कश्चिदाहेत्यादिदेशिन्या) अनूद्य खण्ड्यते उपहस्यते च। कुत्रचिच्च तद्व्याख्यानं बालिशम् (पृ. 107) इति, कुत्रचित् हास्यास्पदम् (पृ. 108) इति दूष्यते। द्वि-त्रि-स्थले 'भट्टभास्करो भ्रान्तः', 'भट्टभास्करः परास्तः' इति सनामग्राहं दोषदर्शनं विधाय तन्मतं निरस्तञ्च।

नमो अग्रियाय च प्रथमाय च इत्यस्य मन्त्रांशस्य विवरणसन्दर्भे अग्रियपदनिष्पत्तिं दर्शयन् भट्टभास्करो लिखति – 'यद्वा 'घच्छौ च' इति घः। छान्दसमाद्युदात्तत्वम्।' इति। अत्र घन् प्रत्यय एव भवति, न तु घः। तेन च आद्युदात्तत्वम्। इति दर्शयत्याचार्यगोविन्दः 'घच्छौ च' इति पाणिनिसूत्रस्य काशिकावृत्तिगतां पङ्क्तिमुद्धरन्। चकारात् घन् अनुकृष्यते। घनि च आद्युदात्तत्वं पदस्येति स्फुटयति च गोविन्दाचार्यः (पृ. 62)।

(नम आशुषेणाय चाशुरथाय च इत्यत्रत्ये) आशुषेण इति पदे (आशु+ सेन) – सकारस्य षत्वं 'सुषमादिषु च' इति सूत्राद् इति भट्टभास्करोक्तिः। तत्र दोषं प्रदर्शयति गोविन्दाचार्यः। अवग्रहपूर्वस्य सकारस्य षत्वं प्रातिशाख्येन दर्शितमिति दिशति च। तत्प्रयुक्तं नकारस्य णत्वञ्चेति। तत्रत्यमिदं भाष्यवाक्यम् - 'अवग्रहपूर्वः सकारः षत्वमापद्यते इति प्रातिशाख्ये स्थितम् (तै. प्रा. 1.6.3)। षपूर्वत्वाच्च नस्य णः। तेन 'आशु + सेनः' आशुषेणो भवति। 'सुषमादिषु च' (अ. सू. 8.3.98)

इति सूत्रेण षत्वमिति वदन् भट्टभास्करो भ्रान्तः। तत्र यद्यपि एकारपरस्य सकारस्य मूर्धन्यादेशो विधीयते इणः परस्य – 'एति सञ्ज्ञायामगात्' इति गणसूत्रेण। तथापि तत्सञ्ज्ञायामेव। अत्र तु न सञ्ज्ञात्वविवक्षा। असञ्ज्ञायामपि अवग्रहात्परः सकारो मूर्धन्यतामापद्यते।' (पृ. 71)

भट्टभास्करः प्रत्यनुवाकं पुरश्चरणविधिं तथा बहून् सद्यःफलदान् कृच्छ्रसाध्यान् (कांश्चन घोराचारांश्च) काम्यकर्मप्रयोगानपि अभिधत्ते इत्येतत्तथ्यम्। परं सायणापेक्षया बहून् अर्थवर्णनप्रकारान् (यद्वा यद्वेति) दर्शयति, व्याकरणसंस्कारांश्च दिशति पदानाम्। तत्र वैदिकव्याकरणविश्लेषणे - विशिष्य स्वरसम्बन्धिनि विषये - विशेषावधानं, निष्कृष्टा दृष्टिर्वा, कुत्रचिन्न दत्तेति गोविन्दाचार्येण दर्शितम्। एतावता वेदभाष्यकृतः वैदिक-धर्मरक्षणे दीक्षितांस्तानाचर्यानुद्दिश्य श्रुतिहृदयमवगन्तुमप्रभुः शोच्यः इत्यादि कथनम् असमीचीनमेव।

**मायावादितर्जनम्**

एवमेव अद्वैतिनः अधिकृत्योक्तमनेन आचार्येण 'नैर्गुण्यवादेन भगवद्गुण-तस्करा आत्मापहारिणः शोच्यास्ते' इति। दूषणायैतस्मै प्रवृत्तः भूमिकामेवं रचयति – 'अपूर्वोऽयं रुद्रप्रपाठकः। यत्र दोषपदैरेव रुद्रः स्तूयते। तद्यथा तस्कराणां पतये नमः, मुष्णतां पतये नमः, .......नमो दूताय इत्यादि। तत्किमिदम् ? भगवद्गुणगानाय श्रुतयः प्रवर्तन्त इति श्रुतम्। तत्कोऽयं समाहारो निन्दायाः ? दोषोरोपो भगवति ? अत्राचक्षते मायावादिनः - चोरचण्डालश्वादयोऽप्यन्ततो ब्रह्मात्मानः। सर्वत्र ब्रह्मरूपानुसन्धानाय इदमुदितम् ' इत्यादि। उपसंहरति च प्रकरणमेवम् – 'तेन लोके दोष-वाचिनामपि पदानां भगवति गुणपरतैव परमार्थः। तेन सर्वपदगदितत्वं भगवति सुदृढमनुसंहितं भवति। ततस्तत्त्ववादिनामेवानुसन्धानसरणिः साधीयसीत्यवसीयते।' इति (पृ. 60)। एतत्सर्वं किमुद्दिश्योच्यते ? अद्वैतिभिः कृतं तैत्तिरीयशतरुद्रियस्य प्रत्नभाष्यमुभयमपि भगवति

दोषारोपेण दुष्टं भवति। अतो मया शतरुद्रियगतपदैः अभिहितानां दोषाणां गुणत्वाधानेन, भगवद्गुणपरतया वर्णनेन, तत्त्ववादानुगुणम् अदुष्टं किञ्चिन्नूत्नं भाष्यं विरच्यत इति प्रकाशयितुम्। उक्तश्च कण्ठतः – 'तदेवमाचार्याभिमतं तत्त्ववादानुगुणं तैत्तिरीयशतरुद्रियस्य किमपि नूतनमदूष्यं भाष्यमिदम् इदानीमुपस्थाप्यते' (पृ. 7) इति।

वस्तुतः अत्र एतादृशी चर्चैव अस्थाने। किञ्च परमतमन्यथा अनूद्य तत्खण्डनं क्रियते। 'किमुक्तं भवति ब्रह्मैव तस्करो बभूव, ब्रह्मैव श्वा बभूवेत्यनुसन्धेयमित्युक्तं भवति। शुक्तितो भिन्नं रजतं नास्तीति शुक्तिरेव रजतत्वेनानुसन्धेयेति पर्यवसितम्। नास्ति तेषां भ्रमस्यौषधम्।' इत्येवं गच्छति तेषां पूर्वपक्षावतरणम्। केनोक्तमेवम्? सगुणे ब्रह्मण्यपि प्रतिजीवमपि तदेव निर्गुणस्य ब्रह्मणः चैतन्यं भासते; तेन सर्वभूतस्थमात्मानं पश्येत्, आत्मनि च सर्वभूतानि पश्येत्, यतो हि एक एवाखण्डबोधो भासते सर्वत्र; एवम् सगुणब्रह्मोपासनयापि जीवब्रह्मैक्यबोधरूपो मोक्षः साधयितुं शक्यते, यस्तत्र अधिकृतः तेन तदुपासनं कार्यम्; एवं सगुणस्य ब्रह्मणः वैश्वरूप्यानुसन्धानेन उपासनमपि मार्गशोधकं भवतीति अद्वैतराद्धान्तः। किञ्च सगुणब्रह्मोपासनेऽपि 'सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम्। सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः।।' इति नयेन तस्करो ब्रह्मेत्यनुसन्धानं निषिध्यते, तच्चैतन्येनैव तस्करस्यापि भानमिति दृढबोधफलकं भवत्वनुसन्धानमित्येव अद्वैतसमयः। तम् अन्यथा प्रकल्प्य अनवसरे अयुक्तिकश्च दूषणं कृतमित्येतदचारु।

## उपसंहारः

वेदार्थविचिन्तने कृतभूरिपरिश्रमेण श्रीमता बन्नञ्जे गोविन्दाचार्येण सम्प्रदायसंरक्षणैकदीक्षेण सश्रद्धं विरचितमिदं (तैत्तिरीयशतरुद्रियस्य) भाष्यमित्यतः जगदाधारभूते शाश्वतसुखनिदानभूते वैदिके धर्मे श्रद्धावतां समेषाम् आनन्दसन्दायकं भवेदित्यत्र नास्ति सन्देहकणिका। यद्यपि

वैश्वरूप्यप्रकरणगतानां रुद्रपराणां पदानाम् हनुमत्परतया भीमपरतया मध्वपरतया च अर्थवर्णनाय कृतः प्रयासः सर्वेषाम् ऐकमत्येन सम्मत्यै सन्तोषाय वा कदाचिन्न कल्पेत तथापि सम्प्रदायानुसारं तत्त्ववादानुगुणं विष्णुपरतया व्याख्यातमित्येयत् महते मोदाय। वेदास्तावत् समेषाम् आस्तिकानां जगदाधारधर्ममूलतया परमं प्रमाणं परमादरास्पदञ्च। वेदार्थवर्णने श्रुत्यन्ततात्पर्यनिर्णये च समप्रदायभेदेन मतिभेदे सत्यपि वेदरक्षणे वैदिकधर्मपालने वेदार्थनिर्णयविचारे च क्रियमाणः सर्वोऽपि प्रयासः सर्वथा सद्भिः श्लाघनीय एव। एवम् एतैः तैत्तिरीयशतरुद्रियप्रपाठकस्य नूतनतया अन्यैरप्रहतया पद्धत्या अर्थविचारः प्रवर्तितः इति, सा च प्रवृत्तिः सम्प्रदायानुसारिणी इति च सतामानन्दसन्दोहाय महते। यद्यपि भट्टभास्करोक्तेषु केषुचिद्विषयेषु विमतिर्दोषाश्च दर्शिताः, ते न सर्वथा निराधाराः। किञ्च अभिनवगुप्तोक्तरीत्या 'तस्मात्सतामत्र न दूषितानि मतानि, तान्येव हि शोधितानि। पूर्वप्रतिष्ठापितयोजनासु मूलप्रतिष्ठा-फलमामनन्ति' (नाट्यशास्त्रे षष्ठाध्याये रससूत्रव्याख्याने पूर्वाचार्याणां मतान्यनूद्य खण्डयित्वा च स्वमतोपस्थापनायाः भूमिकासंरचनावसरे अभिनवोक्तिरियम्) इत्येव एते संशोधनप्रकारा द्रष्टव्याः। परम्, अद्वैतिनः उद्दिश्य 'नूनं ते ब्रह्मणि नैच्यानुसन्धानेन नीचां गतिमाप्नुयुः। नूनमीदृशानेवागूर्य गीताचार्य आह – 'मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्' इति। अनुकम्पनीयास्ते। नैर्गुण्यवादेन भगवद्गुणतस्करा आत्मापहारिणः शोच्यास्ते। ..... किं ततोऽन्ये केपि तस्करा भूयासुर्ये परं ब्रह्मैव तस्करमाचक्षते' (पृ.6) इत्यादिकथनं, अभनवशङ्कराख्येन शतरुद्रीय-भाष्यकारेण श्रीमन्तं रामानुजाचार्यमुद्दिश्य कृतं 'तस्माद्बहून् पश्यन्त्या बहुभिर्भाषमाणाया अपि पतिव्रताया हृदयं पत्याविव बहुभिर्वचनैरितस्ततो नीयमानाया अपि भगवत्या श्रीरुद्रोपनिषदो हृदयं श्रीमति साम्बपरब्रह्मण्येव व्यवतिष्ठत इति तामन्यपरां चिकीर्षमाणा रामानुजादयः भगवतीं सीतामात्मसात्कर्तुं प्रवृत्तरावणवत् महापापिष्ठा इत्यास्तां तावत्।' इति

कथनमिव सज्जनान्नानन्दयति। यद्येतादृशा उक्तिप्रकारा नाभविष्यन् तर्हि 'स्यादयं सुरलोकस्य सशक्रस्यापि रक्षिता' इति आदिकविनिगदितरीत्या भाष्यमिदं सकलसज्जनमनोरमणम् अभविष्यत्। सर्वथा वेदार्थनिर्णयाय क्रियमाणः सर्वप्रकारोऽपि परिश्रमः श्लाघनीय एवेति शम्।

*****

**उपयुक्तग्रन्थाः**

**शतरुद्रियम्-** (आचार्यगोविन्दकृतभाष्येण विभूषितम्), तत्वसंशोधनसंसत्, विद्यामान्यपुरप्रकाशनम्, श्रीहृषीकेशतीर्थसंस्थानम्, रजतपीठपुरम्, उडुपि, 2013.

**रुद्राध्यायः-** सायणाचार्यभट्टभास्करप्रणीताभ्यां भाष्याभ्यां संवलितः, आनन्दाश्रमसंस्कृतग्रन्थावलिः, आनन्दाश्रमः, पुण्यपत्तनम्, 1906.

**श्रीरुद्रभाष्यम्-** अभिनवशङ्करप्रणीतम्, वाणी विलास् प्रेस्स्, श्रीरङ्गम्, 1913

**आलोचनामृतम्-** (विशिष्य तद्गतः शतरुद्रीयम् इति लघुनिबन्धः), कालिक्कट् विश्वविद्यालयः, 2015.

# आचार्यगोविन्दकृतम्
# अस्यवामीयसूक्तभाष्यम्

**प्रो.मधुसूदन पेन्ना**

वेदार्थ एव गहनः तत्रापि कानिचन सूक्तानि गहनतरार्थानि। यदि नाम तपःपूता मन्त्रद्रष्टारो नाभविष्यन् तर्हि नूनमेव कतिपयसूक्तगता अर्थाः दुरूहाः एव अभविष्यन्। नासदीयसूक्तं, पुरुषसूक्तं, विष्णुसूक्तं, अस्यवामीयसूक्तं इत्यादिगहनार्थकवैदिकसूक्तेषु प्रमुखतया कीर्त्यमानमस्ति अस्यवामीय सूक्तमेकम् यस्य हृदयाविष्काराय बहुधा बहुभिर्यत्ना व्यधायिषत।प्राचीनकाले सायणाचार्यभाष्यं, तदुत्तरकाले च कृतानि भाष्याणि श्रूयन्ते, ततः आत्मानन्दनामकेन स्वामिवरेणापि कृतमस्य भाष्यं, ततः आधुनिके काले माक्स् मूलर् नामकविदुषः इतरेषाञ्च भाषान्तराणि सन्ति।

1956 तमे वर्षे मद्रपुर्यां गणेशनामकसंस्थया प्रकाशितम् आत्मानन्द-नामकस्य विद्वद्वरस्य भाष्यं सर्वथा केवलाद्वैतपरं सदपि न सर्वेषां मन्त्राणामद्वैतपरत्वं विवृणोति। अत एवोक्तं स्वामिवर्येण - एवमुत्तरत्रापि अद्वैतपरतया योजयितुम् शक्यम्। तथापि स्वरसत्वाभावात् ग्रन्थविस्तरभयाच्च न लिख्यते। यत्र द्वा सुपर्णा इत्यादौ स्फुटमाध्यात्मिकः अर्थः प्रतीयते तत्र तत्र प्रतिपादयामः- इति। अनेनाचार्येणास्मिन् भाष्ये श्रुति-स्मृति-कोश- कल्पसूत्रादिप्रमाणप्रदर्शनपुरःसरं सूक्तमन्त्रार्थः प्रदर्शितः। तदनुगुणमेव 1956 तमे वर्षे श्रीमता कुन्हन्राजनामकेन विदुषा विश्वरहस्यमिति शीर्षकं दत्त्वा अस्य विवेचनं कृतमिति बुध्यते। सर्वेषां मन्त्राणामेकार्थबोधकत्वं दर्शयितुं तेन प्रयत्नः कृतः। अन्यथा सर्वेपि मन्त्राः भिन्नार्थकाः इति, दीर्घतमोनामकस्य च महर्षेः असंबद्धा विचारा एव मन्त्रेषु लभ्यन्ते इति च प्रतीयेत।

परन्तु अस्य सूक्तस्य एतादृशसूक्तान्तरस्यापि तत्त्वं न पूर्णतया समाविष्कृतमिति बहूनां मतम्। सर्वोपि स्वसंप्रदायम् अथवा स्वाभिमतमर्थं सूक्तगतमन्त्रेषु कथञ्चिदपि दर्शयितुं बद्धकटिरित्यपि विदुषाम् आक्षेपः।

तदेतत् सर्वमाकलय्य कृतार्थेन आचर्येण गोविन्दवर्येण माध्वसंप्रदायार्थकलितं भाष्यं बुभुत्सूनामुपकाराय निरमायि तच्चाधुना प्रकाशमनायि।

ऋग्वेदस्य प्रथममण्डले द्वाविंशे अनुवाके 164 तमसूक्ततया पठ्यमानमिदं सूक्तम् अथर्ववेदे नवमाध्यायेपि समुपलभ्यते।अस्य द्रष्टा तावत् शतर्चिः दीर्घतमोनामकः महान् दार्शनिकः यः को ददर्श प्रथमं जायमानमिति, पृच्छामि त्वां परमन्तं पृथिव्याः इति तात्त्विकान् प्रश्नान् पृच्छति ततः स्वयमेव तत्र तत्र समाधानानि प्रयच्छति।

महाभारते आदिपर्वणि भीष्माचार्येण दीर्घतमसः कथा वर्णिता तदनुसारम् एवं बुध्यते यत् दीर्घतमसः जीवनमतिकष्टसंकुलमासीत् अनेकापत्यकोपि महर्षिरयं परिवारेण परित्यक्तः केनचिद् राज्ञा संपोषितः जीवनं निनाय इति च। अस्य परिवारे नैके मन्त्रद्रष्टारः आसन् ऋग्वेदस्य षष्ठमण्डलस्य द्रष्टा भरद्वाजः, नवममण्डलस्य द्रष्टा वामदेवश्च अस्य वंशजाविति ज्ञायते। अनेन दर्शितानि सूक्तानि गूढार्थकानीत्यत्र नास्ति संशयः।

अस्य सूक्तस्य मन्त्राः वेदान्तादिदर्शनेषु बहुधा समुद्धृताः बहुधा व्याख्याताश्च यथा द्वा सुपर्णा सयुजा सखाया इति मन्त्रः, ऋचो अक्षरे परमे व्योमन् इति मन्त्रः, चत्वारि शृङ्गास्त्रयोस्य पादा इति च मन्त्रः वेदान्तेषु विवेचनविषयतां याताः अन्तिमश्च व्याकरणशास्त्रे। आपाततस्तु प्रत्येकमपि मन्त्रः क्वचिदन्येन असंबद्ध एव इति भाति। एतत्सूक्तगतमन्त्राणाम् एकार्थबोधकत्वे पुरापि महान् प्रयत्नः कृतः।

परन्तु एतादृशमन्त्रव्याख्याने अल्पमतयः प्रवर्तेरन्निति धिया भिया च भण्यते- बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यतीति। वयं जानीम एव भगवत्पाद वाक्यम् असंप्रदायवित् सर्वशास्त्रविदपि मूर्खवद् उपेक्षणीय इति। इतिहास-पुराणादिशास्त्रविदां कार्यमिदम् अल्पशेमुषीकाणां कृते सर्वथा दुष्करमेव। अत एतादृशस्य सूक्तस्य व्याख्याने न केवलं वैदिकसंस्कृत-भाषाज्ञानम् अपि तु रहस्यार्थावगमनयोग्यताविशेषोपि समम् अपेक्षित इति निश्चप्रचम्।

आधुनिकेषु शास्त्रवित्सु स्वनामधन्याः श्रीमन्तः गोविन्दाचार्याः विश्रुत-कीर्तयः। अस्य सूक्तस्य भाष्यव्याजेन भगवद्भक्ता वेदार्थबुभुत्सवश्च अत्र-भवद्भिः नितरामुपकृताः इत्यत्र नास्ति संशयलेशोपि। अत एव निगदितमेतैः भाष्यान्ते-

**सूक्तन्तु दैर्घतमसं विपुलार्थमस्य-**
**वामीयमद्भुतमनेकनिगूढभावम्।**
**व्याख्यामिषेण विववार यथामनीषं**
**विद्वन्मुदे किल मुकुन्दपदैकभक्तः। इति।**

निरुक्ताधारेण मन्त्रगतशब्दानां नारायणपरकत्वं तदन्यदेवतापरत्वं वा भाष्येस्मिन् सुष्ठु निरूपितम्। विशिष्य कतिपयस्थलेषु व्याख्यानान्तरापेक्षया महद् वैलक्षण्यमस्ति भाष्यस्यास्य यथा-

**इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः सुपर्णो गरुत्मान्।**
**एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः।**

अस्य मन्त्रस्य व्याख्याने बहव आचार्याः स्वसंप्रदायानुगुणं बहुधा भाषितम्। अत्रार्थमेवं विवृण्वन्त्याचार्याः –

एक एव परमात्मा नारायणः सर्वान्तर्यामी तत्तद्गुणानुरूपं इन्द्र-यम-वरुण-वायु-इत्यादिशब्दैः संबोध्यते इति। अत्र इन्द इति प्रद्युम्नः, मित्र इति अनिरुद्धः, वरुण इति वासुदेवः, अग्निरिति संकर्षणः इति च व्याख्यातं शास्त्रप्रमाणप्रदर्शनपुरःसरम्।

एकैव वाक् एकपदी, द्विपदी, चतुष्पदी, अष्टापदी च कथं बभूवेति च सम्यक् निरूपितमत्र भाष्ये-

**गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी।**
**अष्टापदी नवपदी बभूवुषी सहस्राक्षा परमे व्योमन्॥**

●गौरी सर्वशुक्ला सरस्वती श्रीमन्नारायणं प्रामुख्येन प्रतिपादयन्ती एकपदी बभूव।

- ततः जगच्च जगन्नाथं च भेदेन प्रतिपादयन्ती द्विपदी बभूव।
- ततः विश्वादि-वासुदेवादि-चतूरूपं भगवन्तं प्रतिपादयन्ती चतुष्पदी बभूव।
- ततः प्रकृतिमानित्वेन अष्टापदी बभूव।
- अष्टप्राकृतरूपैः स्वरूपेण च नवपदी।
- अनन्तमक्षरं प्रतिपादयन्ती सहस्राक्षरा इति च।

एवमेकस्यैव मन्त्रस्य बह्वर्थबोधकत्वं प्रतिपादितम् आचार्यैः सप्रमाणम् अस्मिन् भाष्ये। अन्यत्र च –

**ऋचोक्षरे परमे व्योमन् यस्मिन् देवा अधिविश्वे निषेदुः।**
**यस्तन्न वेद किमृचा करिष्यति य इत् तद्विदुस्त इमे समासते॥**

अस्य व्याख्यानावसरे सर्वस्यापि मन्त्रस्य प्रणवरूपनारायणपरकत्वं साधु प्रत्यपादि विद्वद्वरैः। प्रणववाच्ये नारायणे आश्रिताः सर्वे वेदाः (देवाः) प्रणवाख्य-अक्षराश्रिताः एव। यस्तन्न विजानाति सः तया अधीतया ऋचा किं करिष्यति इति मन्त्रार्थः समुपवर्णितः। क्वचित् यदि कश्चन तमर्थं न वेद सा ऋचा किं करिष्यतीत्यपि केनचिदर्थः प्रदर्शितः। परम् आचार्यैः प्रदर्शितः अर्थः न केवलं युक्तिसङ्गतः अपि तु शास्त्रसिद्ध इत्यपि ज्ञातुं शक्यते।

इत्थं सर्वेषामपि मन्त्राणां नारायणपरत्वप्रतिपादनात् सर्वथा तात्पर्य-भङ्गदोष एव नायाति यतः सर्वान्तर्यामी नारायण एव वेदमात्रस्य तात्पर्यम् सर्वेषामपि अन्ततः तद्बोधकत्वमेव। तदेतनेन भाष्येण साधु साधितमिति प्राचीनभाष्यानुरोधेन नवीनभाष्यविरचनमिदं सर्वथा सत्संप्रदायपरिरक्षकं तत्त्वबुभुत्सूनां च बोधकारकमिति मे विश्वासः। अस्य भाष्यस्य अध्ययनेन मनोहरम् अर्थमवगन्तुं शक्ष्यामः, तथा परमपूरुषे नारायणे समेधितभक्तयः तत्रैव मनःसमाधिं प्राप्स्याम इति मे भावना।

# प्राणाग्निसूक्तम्

डा. शम्भुकुमार झा

पद्मश्रीगोविन्दाचार्यस्य प्राणाग्निसूक्तभाष्यम् 'सम्पूर्णमृषवाक्यं तु सूक्तम् इत्यभिधीयते' इति सूक्तलक्षणं बृहद्देवतायां शौनकेनाकारि। सर्वानुक्रमण्यां ऋषिछन्दोदेवतानां च विज्ञापनं परिष्कृतम्। यस्य वाक्यं स ऋषिः। तेन यास्तूयते सा देवता। देवः दानाद्वा, दीपनाद्वा, द्युस्थानीयो भवतीति वा इति निरुक्तस्य सरणिः। देव शतदात्तल्प्रयत्नेन देवता पदमेति। पाणिनेः सूत्रं भवति 'देवात्त्' अत्रेदं ध्यातव्यमस्ति तल्प्रत्ययः भावार्थे न भवति अपितु स्वार्थे प्रवर्तते। तथा च तलन्तं स्त्रियाम् इति अनुशासनात् टाप् यो देवः सा देवता। यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुंक्ते तद्दैवतः स मन्त्रो भवति। इति दैवतकाण्डे यास्कः प्रतिपादयामास।

'विद्वांसो वै देवाः' शातपथीश्रुतिः। अनयाश्रुत्या गोविन्दाचार्यस्य भाष्यविषये ज्ञायते साक्षात् भगवती श्रुतिः आचार्यस्य हृदि प्रकटिता। सरस्वत्याः सर्वाङ्गतत्वं तत्र प्रस्फुटितम् 'जायेव पत्ये उशती सुवासाः' विद्वद्वरेण्यः गोविन्दाचार्यः खलु गुरुकृपया सदाशिषा च समग्रं शास्त्रं चावगाहनं कृत्वा हस्तामलकवत् भाष्ये प्रदर्शितवान्।'बिभेत्यत्यल्पश्रुताद्वेदो मामयं प्रहरेदिति' वचनस्य आदरं सम्पादयन् षडङ्गानां, पुराणानां, मीमांसादिशास्त्राणाञ्च प्रमाणमुपस्थापयन् भाष्यस्य गौरवं वैभवं माहात्म्यं च रक्षितवान्। वेदार्थे निरुक्तस्य महत्त्वं सर्वैः विद्वद्भिः स्वीकृतम्। निरुक्तकारेण मन्त्रस्य व्याख्यानावसरे क्वचित् अध्यात्मपक्षः भौतिकपक्षः सन्धारितः न च सर्वोऽपि पक्षः सर्वत्र निरूपितः। गोविन्दाचार्यस्य प्रातिभवैलक्षण्यं पदे पदे द्रष्टुं शक्यते एकैकस्य मन्त्रस्य त्रिधा विभागः महता श्रमेण कृतो वर्तते। तत्रापि मध्वसंप्रदायस्य संपोषणं आचार्येण कृतम्। प्राणाग्निसूक्ते भाष्यं स्वयमेव श्रीमदानन्दतीर्थेण भगवत्पादेन व्यरचि। तद्भाष्यमेव गोविन्दाचार्यस्य पाथेयं विभाति। संप्रदाय इत्युक्ते सम्यक्प्रदीयते

शिष्येभ्यः इति। गोविन्दाचार्यस्य श्रद्धा, विश्वासश्च गुरौ, सम्प्रदाये चाविकलेन भवति। सूक्तमिदं पदेन विषयेण च क्लिष्टतरं विभाति तथापि आचार्यस्य भाष्यं पठित्वा सर्वं स्फुटं जायते परन्तु श्रद्धावतामेव। श्रद्धायाः अभावे निखिलं शून्यमुक्तं च यास्केन- 'नैष स्थाणोरपराधो यदेनमन्धो न पश्यति पुरुषापराधः स भवति'।

अस्याः पङ्क्तेः भावं स्फोरयन् गोविन्दाचार्यः ब्रवीति अपिधाय चक्षुषी न शक्यं द्रष्टुं यदि वस्तु तमसि निलीनम्। अथ विवृते चक्षुषी, अपगतं च तमः, अथापि न शक्यं द्रष्टुं यदि नास्ति दिदृक्षा। अत्रैव आचार्यपादानां भाष्यं प्रतिपादयन्नाह - 'यो हि यत्राऽदरवान् तस्यैव तद्वस्तु विद्यमानमपि स्फुरति। न ह्यत्रानादरवतः अन्यत्राऽऽदरवतश्च' इति। न केवलमेतावत्। यो हि यत्राऽऽदरवान् तस्य तदेव स्फुरत्यविद्यमानमपि।

अस्य गभीरतमस्य प्राणाग्निसूक्तस्यविज्ञानं कथं कर्तुं शक्यते। यथा गीतायामाह-

**नतु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा।**
**दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥**

तथैव भूमिकाभागे गोविन्दार्यः प्रकटयति- यद्यस्ति प्रदीपप्रकाशः अस्ति च विवृतं हृदयम्। अपि च स्त एवोन्मीलिते नयने तदा निर्विचिकित्सं निश्चीयते प्राणाग्निसूक्तमेतत् ॥

अस्य प्राणाग्निसूक्तस्य दीर्घतमा ऋषिः जगतीछन्दः अग्निर्देवता प्रातरनुवाके विनियोगः। बृहद्देवतायां शौनकाचार्यः लिलेख-

**द्वावुचथ्यबृहस्पती ऋषिपुत्रौ बभूवतुः।**
**आसीदुचथ्यभार्या तु ममता नाम भार्गवी ॥**

**तां कनीयान् बृहस्पतिर्मैथुनायोपचक्रमे।**
**शुक्रस्योत्सर्गकाले तु गर्भस्तं प्रत्यभाषत ॥**

**इहास्मि पूर्वसम्भूतो न कार्यः शुक्रसङ्करः ।**
**तच्छुक्रप्रतिषेधं तु न ममर्ष बृहस्पतिः ॥**

**स व्याजहारं तं गर्भं तमस्ते दीर्घमस्त्विति ।**
**स च दीर्घतमा नाम बभूवर्षिरुचथ्यजः ॥**

**स जातोऽभ्यपतद् देवानकस्मादन्धता गतः ।**
**दद्दुर्देवास्तु तन्नेत्रे ततोऽन्यो बभूव सः ।**

अत्रैवप्रसङ्गे गोविन्दाचार्यस्य देवता विषये विशिष्टः उपक्रमः दृश्यते। कथमत्र प्राणाग्निर्देवता। अग्निरेव प्राणाग्निरूपेण जीवेषु विद्यमानः सञ्चरति। कारणं निरूपयामास गीतायां-

**अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।**
**प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥**

प्राणाग्नय एवैतस्मिन् पुरे जाग्रति गार्हपत्यो ह वा एषोऽपानः व्यानो अन्वाहार्यपचनो यद् गार्हपत्यात् प्रणीयते। प्रणयनादाहवनीयः प्राणः इति श्रुतिः।

अस्मिन् सूक्ते त्रयोदशमन्त्राः। तत्र प्रथमः 'बडित्था तद्वपुषे' इति। आदितः पञ्चसु मन्त्रेषु पञ्चात्मा नारायणः मुख्यः। पञ्च प्राणाः शास्त्रादौ प्रसिद्धाः, पञ्चाग्नयः श्रौतव्यापारे कथिताः। देवशब्दः द्योतनशीलस्य अग्नेः पर्यायः। तस्मात् भर्गः तेजो हि प्रसिद्धं ज्योतिरूपमुत्पन्नम्। दैवतकाण्डे निरुक्ते तिस्र एव देवता इति तत्र पृथिव्यामग्निः प्रमुखः स भगवान्। अग्नेः द्विधा विभागः भौतिकः, यस्मिन् पाककर्म विधीयते, अपरश्च तत्वरूपोऽग्निः स च दर्शनीयः चेतनात्मकश्च, भौतिकोऽग्निः चेतनस्याधीनो भवति। गोविन्दाचार्यस्यमते स च ज्योतिरूपो भगवान् जठरे भवति कारणं नारायणस्य सकाशाद् ज्योतिरजनि। यथा कुण्डे प्रक्षिप्तं हविषः सारतत्वं गृहीत्वा दूतोऽग्निः देवेभ्यः समर्पयति तथा यजमानस्य वाञ्छितं च साधयति। श्रौते स्मार्ते च अग्निमन्थनविधिना मन्त्रोच्चारपूर्वकं प्राप्यते। प्रयोगकालीनार्थ-

स्मारकत्वेनैव मन्त्राणां प्रामाण्यम्। तस्मात् लौगाक्षिणा प्रोक्तम्- प्रयोग-समवेतार्थस्मारकाः मन्त्राः। अग्निमन्थने प्रयुज्यमानः मन्त्रः न अदृष्टफलाय भवति प्रत्युत दृष्टप्रयोजनाय एव। दृष्टे फले सम्भवति सति अदृष्टफलकल्पनम् अन्याय्यम्। अतः यज्ञे उत्पन्नोऽग्निः मतिरूपः साधितः। बडित्थाशब्दः पदच्छेते कृते बट्, इत्था च। उभे सत्यनामनी भवतः। तथा च अग्निवायु-रविभ्यस्तु त्रयं ब्रह्म सनातनम्। सनातनेन ब्रह्मणा वेदेन जनितोऽग्निः मतिरूपः कथितः। जडरूपोऽग्निः मन्त्रं विनैव जायते। अभिष्टफलाय स मतिरुपः अग्निः कार्यं साधयति।

धेनाः पदं वाक्पर्यायः निघण्टौ। ऋतस्य धेनाः यज्ञस्य किंवा यजमानस्य वा। अग्नेस्तेजसा सर्वेषां वाचः सस्रुतः समानं गच्छन्त्यः सहैव प्रवर्तमानाः। यज्ञसन्बन्धिन्यः मन्त्ररूपाः वाचः होत्रादिमुखेन सहैव प्रवर्तमाना अनयन्त नयन्ति। तेजोमयी वागिति श्रुतेः। ऋतपदेन रामस्य च ग्रहणं कृतं भाष्यकारेण गोविन्देन। सत्यभाषणत्वात् रामस्य। रामो द्विर्नाभिभाषते। यद्यपि रामस्य चरितं लोकवत् प्रतिभाति तथापि भक्तिसूत्रे सूत्रितं लोकवत्तुलीलाकैवल्यम्। परमात्मनो लीला एव भवति। रामस्य धेनाः (वाक् ) त्वमेव सीतान्वेषणे समर्थः। साधको रामकार्याणां तत्समीपगतः सदा। हनुमान् प्रथमो ज्ञेयः। रामस्य स्वृतरूपस्य वाचस्तेनानयन्त हि। अनेन विश्लेषणेन ज्ञायते गोविन्दाचार्यः विष्णोः परमः साधकः आराधकः भक्तश्च। 'वेदैश्च सर्वैरहमेव वेद्यः' गीताकारस्य वचनं सार्थकं कुर्वन् गोविन्दाचार्यः अग्निरूपेण, वायुरूपेण, भीमाख्येन, नारायणरूपेण च सूक्तमिदं व्याख्यातवान्। भौतिकप्रपञ्चेन तत्सेवनेन च कालक्षय एव प्रोक्तः। सत्यात्मको हि भगवान् नारायणः स च सर्वैराराध्यः चिन्तनीयः प्राप्तव्यश्च। वेदादौ यानि वचनानि भागवतादौ ये श्लोकाः विद्यन्ते तेषां विषयः भगवान् भवति।

अस्य सूक्तस्य द्वितीयः मन्त्रः, पृक्षो वपुः इति वर्तते। यत्र प्रथमेन मन्त्रेण गार्हपत्योऽग्निः प्रार्थितः। अनेनाहवनीयः श्रोतागारे पूर्वस्यां दिशि चतुरस्रे खरे विसयमानो भवति तं यो हि प्रार्थयति। असौ भगवानग्निः पितुमान्

पितुशब्दोऽन्नपर्यायः, यथा च निघण्टौ द्वितीयेऽध्याये अन्धः वाजः, पयः, प्रयः, पृक्षः, पितुः, सुतः इति।

प्रशस्तान्नभोक्ता हविष्मान् वा। प्रायेणास्मिन् खरे हविषि दीयन्ते। अयं हि अग्निः मातृषु आधारभूतासु देवीषु नित्यमाश्रितः। अयं भावः - मातृषु विद्यमानः तेजोरूपधरः भगवत्याश्च तेजो वर्धयति। आचार्यप्रवराणां व्याख्याने वैशिष्ट्यमत्र दृश्यते- यत् प्रकृतिपुरुषयोः संयोगः याजकानां सर्वैश्वर्यप्रदानाय विद्यते। तस्यां देव्यामपि सामर्थ्यं जनयति, तेन सामर्थ्येन सर्वाभीष्टं साधयति। यथा चाह माकण्डेये - रोगानशेषानपहंसि तुष्टा इति। पृक्षो वपुरित्युक्ते पृक्षशब्दश्च अन्ननामसु पठितः। अग्नौ यत्किमपि प्रक्षिप्यते तत् सर्वं तस्य वपुः कलेवरमेव। परन्तु आचार्यचरणानां व्युत्पत्तिः 'पृची= संपर्के' इत्यस्मात् धातोः पापसंपर्कं क्षपयतीति नाशयति पृक्षः।

सप्त शिवासु यः आश्रितः। सप्त ते अग्ने समिधः सप्तजिह्वाः, सप्त ऋषयः सप्तधामप्रियाणि (यजुर्वेदः)

अग्नेः सप्तजिह्वाः काली कराली इति प्रसिद्धाः। वृषभः कामानां वर्षकः। अयं अग्नेः तृतीयं रूपम्। निर्वचनशास्त्रस्य मर्मज्ञो विद्वान् गोविन्दाचार्यः मन्ये अर्थस्फोरणाय विज्ञानाय प्रतिभया बहुत्र नूतनं निर्वचनं कृतवान्। यथा च भीमशब्दस्य। निरुक्तकारो यास्काचार्यः भीमो बिभ्यत्यस्मात् भीष्मोऽपि एतस्मादेव। अयमर्थः अस्मात् बृहत्कायात् जनाः बिभ्यति। अस्मात् आचारवतः बलवतः शक्तिमतः भीमात् जनाः बिभ्यति तत्रैव भाष्ये खलु भीमशब्दस्य द्वयी निर्वचनसरणिरुक्ता भवति। पृक्ष इत्येकम् शत्रुसेनाभयङ्करः इति।

मातृषुशय इत्येकम्। भृता मा येन सभीमः

**पृतनाक्षयकारी च द्वितीयस्तु तृतीयकः।**
**पूर्णप्रज्ञस्तथाऽऽनन्दतीर्थनामा प्रकर्तितः ॥**

**हनूमान् प्रथमो ज्ञेयो भीमस्तु बहुभुक्पितोः।**
**भृतमो भीम इत्युक्तो वाचो मा मातरः स्मृताः ॥**

**ऋगाद्या इतिहासश्च पुराणं पञ्चरात्रकम् ।**
**प्रोक्ताः सप्त शिवास्तत्र शयो भीमस्ततः स्मृतः ॥**

केषाञ्चित् पण्डिताचार्याणामपि उदाहरणं दत्तमाचार्यैः ।

अस्य वृषभस्य तृतीयं वपुर्ज्ञानदोहार्थं योषासु जातम् । दशप्रमतिः कथं । दशशब्दस्य निर्वचनं यास्केन- दशादस्ता दृष्टार्था वा। 'दसु उपक्षये' इत्यस्मात् कनि प्रत्यये वर्ण- विपर्ययेण दशन् इति भवति । या पुनर्न वर्धते सा संख्या दश । परन्तु गोविन्दाचार्य विशिष्टं किञ्चित् लिलेख -

**दशेति सर्वमुद्दिष्टं सर्वं पूर्णमिहोच्यते ।**
**प्रज्ञामतिरुद्दिष्टा पूर्णप्रज्ञस्ततः स्मृतः ।**
**शतं दश सहस्रं च सर्वमक्षयवाचकम् ॥**

सहस्रशब्दः अनन्तार्थे पुरुषसूक्तव्याख्याने सायणादिभिः स्वीकृतः। अदितिः अदीना देवमाता अनवखण्डि ता इति महीधरः । भाष्ये च - सर्वमत्ति इति अदितेदितित्वम् । सर्वं भक्षयति किं वा निगृह्णाति इति श्रुत्यानुमोदितं निर्वचनं प्रदर्शितम् । दशसु अपि दिक्षु प्रमतिर्यस्य तादृशं ज्ञापयन्ति । सर्वगतत्वेन प्रमितः । रूपत्रैविध्यं च - उपासा त्रैविध्यात् । यथा-

**केषाञ्चित् सर्वगतत्वेन केषाञ्चिद् हृदये हरिः ।**
**केषाञ्चित् बहिरेवासादुपास्यः पुरुषोत्तमः ॥**

अस्य समग्रं चिन्तनं हिरण्यकशिपोः वधे च द्रष्टुं शक्यते भागवते ।

तृतीये मन्त्रे मध्वः इति पदं बहुधा चर्चितम् । अग्निर्वै देवानाम् अवमः विष्णुः परमः । अग्निः दारुमध्ये निलीनो भवति मन्त्रेण प्रमथनेन आज्यादि- प्रक्षेपणेन प्रदीप्तो जायते । काण्ठे निलीनम् न कश्चिदपि पश्यति, सत्प्रयासेन शोणः पुनश्च ज्वालामयः ततश्च सप्तभिर्वर्णैः देदीप्यते । मातरिश्वा वायुः मातरि अन्तरिक्षे श्वयतीति मातरिश्वा मन्त्रपाठपूर्वकेण व्यजनधवनेन संपन्नः । उक्तञ्च सङ्ग्रहे-

**तं दुर्दशं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् ।**
**आ समन्तात् पतित्वे तु गूढं कलियुगे हरिम् ।**
**असत्यमप्रतिष्ठं च जगदेतदनीश्वरम् ॥**

**वदद्भिर्गूहितं सन्तं तृतीयोऽसुर्मथायति ।**
**येन विष्णोर्हि वर्पाख्यान् गुणानज्ञासिषुः परान् ॥**

**ईशानासः सूरयश्च निगूढान् निर्गुणोक्तिभिः ।**
**त्रेतायां द्वापरे चैव कलौ चैते क्रमात् त्रयः ॥**

**मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम् ।**
**मध्व आनन्दतीर्थः स्यात् तृतीयामारुतीतनुः ॥**

तृतीयं मध्वः । मधुशब्दः आनन्दवाची । अन्यत्र च विश्वकोषे -

**मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसे मधुः ।**
**दैत्ये चैत्रे वसन्ते च जीवाशोके मधुद्रुमे ॥**

सोमस्यापि मधुत्वं निरुक्ते भणितम् । मधुसोममित्यौपमिकम् माद्यतेरिदमपीतरन्मध्वेतस्मादेव । आनन्दवाचको मधु, तत्र प्रमाणमुपन्त्यस्तं गोविन्दाचार्येण -

**कमलानलं मधुलवे शमयन् दुरापैः ।**

पण्डिताचार्या अप्याहुः - येन शवसा सुखेन महितषड्गुणस्य विष्णोः वरणीयान् गुणान् रुद्रादीश्वरा अन्ये च सूरयो निरक्रन्त निरजानत । यत्र चायं प्रदिवः प्रकृष्टज्ञानो मध्वनामा भूत्वा मातरिश्वा गुहायां निहितं विष्णुं आधवे आ समन्तादीश्वरत्वे मथायति प्रकाशयति । इति तत्रैव भाष्ये धृतम् । असौ वा आदित्यो देवमधु इति श्रुतेः ।

**य आदित्यगतो विष्णुः स एव मधुनामकः ।**
**मदधिर्मध्विति प्रोक्तो मदः सुखमिहोच्यते ॥**

मधुशब्दः अनुकूलार्थेऽपि महीधरेण संकलितः मधुवाता ऋतायते इत्यस्य

व्याख्यानावसरे। वायोरुत्पवनक्रिया सर्वत्र प्रसिद्धा। वायुः पुनाति मलिनं तुषादिपदार्थानाम् अपनयनेन प्रकाशयति चाभीष्टम्।

चतुर्थे मन्त्रे च तस्यैव वायुदेवस्य मधुपदवाचकस्य विस्तरेण प्रकारान्तरेण निगमः कृतः।

पञ्चमो मन्त्रः आदिन्मातृ इति। अत्र स्वरितस्याष्टौ भेदाः ये कथिताः - 'जात्योऽभिनिहितः क्षैप्रः प्रश्लिष्टश्च' इत्यादयः। तेषु क्षैप्रः प्रसिद्धः। छन्दःसु ऊहः खल्वपि करणीयः। तस्मात् बहुत्र व्यूहेनाक्षरपूरणमिति लिखितं भवति अक्षरपूर्तये। यतो हि - सूक्ते जगतीछन्दः स्वीकृतम्। जगती गततमं छन्दः। जलचरगतिर्वा। जलोर्मिप्रकारो हि तस्याः प्रस्तारः। जल्गल्य-मानोऽसृजदिति च ब्राह्मणम् इति निरुक्ते। वायुः वा भीमो वा हनुमान् वा मातुः गर्भे प्रविष्टः परन्तु गर्भजन्यः यो दोषः शास्त्रेणाविष्कृतः तद्दोषरहितः दिव्यत्वात् ज्ञानरूपत्वाच्च। न हि ज्ञानेन सदृशं पवित्रमिह विद्यते। संसारे च प्रतिवादिभिः कुतर्कैः पीडितोऽपि निर्विकारः। इत्यत्र बहुविधविमर्शनेन गोविन्दाचार्यस्य प्रथमो वर्गः पूर्णोऽभगवत्।

षष्ठः मन्त्रः आदिद्धोतारम् इति। वायुरत्र पुरुष्टुतः। पुरुभिः बहुभिः भक्तैः समाराधकैः स्तुतः। स्तुतिभिः प्रसन्नोऽग्निः देवानाह्वयति। अग्निः देवानां होता भवति इति भावः। ऋग्वेदे प्रथमे मन्त्रे उपन्यस्तं 'यज्ञस्य देवमृत्विजं होतारं रत्नधातमम्'इति। तथा यजुर्वेदे - देवानामसिवह्नितमं सस्नितमं पप्रितमं जुष्टतमं देवहूतमम् इति च। पुरुष्टुतो वायुर्वा, अग्निर्वा क्रत्वा कर्मणा ज्ञानेन मज्मना बलेन आत्मबलेनेत्यर्थः देवान् अयत् अगच्छदिति। अत्रैव उत्कृष्टं विज्ञातमाचार्येण हनुमदवतारे देवानिति देवपक्षीयान् देवांशजान् कपीन्। भीमावतारे युधिष्ठिरादीन्, मध्वावतारे ज्ञानिनः सज्जनान्।

सप्तमे मन्त्रे अग्नेः ज्वालायाः प्रसङ्गः। वातचोदितः वायुना प्रेरितः अग्निः ऊर्ध्वं वितिष्ठते। पराभवं न प्राप्नोति, अपितु वर्धत एव सर्वं व्याप्य तिष्ठति। अनाकृतः अनिवारितः अप्रतिहतः। ह्वारो न - कुटिल इव। न इत्यत्र

उपमार्थकः निपातः। तेषामेते चत्वारो उपमार्थे भवन्ति- इव, न, चित्,नु। नेति प्रतिषेधे भाषायाम्। उभयमन्वाध्यायम्। अन्वाध्यायो नाम वेदे न इति निपातस्य द्विधा अर्थः प्रतिषेधः उपमा च। पत्मन् इति मार्गः। धक्षुषः दह धातोः लिटि। कृष्णवर्त्मा अग्निः प्रसिद्धः। येन वर्त्मना मार्गेणासौ गच्छति सर्वत्र कृष्णवर्णो भवति स च प्रसिद्धः।

अष्टमेन दावाग्निः प्रार्थितः। अयं भगवानग्निः शिक्वभिः रज्जुभिः वेष्टनोपकरणैः कृतः दृढीकृतः रथ इव। यथा रथः स्वीयैश्चक्रादिभिः ईयते तद्वत् यातः स्थापितः सन् अरुषेभिः ज्वालादिभिः अङ्गैः अन्तरिक्षं गच्छति। यदा वने दावाग्निः दीप्तो भवति सद्य एव अन्तरिक्षे तस्य प्रदीप्तस्याग्नेः ज्वाला दृश्यते। ईङ्गतौ। अनन्तरं मार्गाः सरण्यः सूरयः कृष्णासः कृष्णवर्णाः जायन्ते। वयः पक्षिणः ईषते भयात् पलायनं कुर्वन्ति।

मनुष्यस्य शरीरमपि रथ इव वर्णितम्। आत्मानं रथिनं विद्धि शरीरं रथमेव च। अस्थिभिः दृढीकृतः देहः रथ इव गच्छति।

अत्र अन्योऽभिप्राय प्रकटितः संप्रदाये- दीक्षितस्य किंवा निष्ठस्य ईश्वरे प्रणिधानयुक्तस्य भक्तस्य प्राप्तानन्दस्य भीतिरहितस्य शत्रवः मलिनाः भवन्ति निस्तेजस्काः जायन्ते। सर्वत्र आनन्दतीर्थस्यान्वयाः तेजोमाहात्म्यम् अन्तरिक्षं स्पृशन्ति, न च पृथिव्यां दुर्गतिः क्वापि। अन्तरिक्षशब्दः स्वर्गपर्यायोऽपि श्रुतः।

नवमे मन्त्रे अग्नि-वरुण-मित्र-अर्यमादिदेवतानां एकतन्त्रेण प्रसङ्गः। अस्य ब्रह्माण्डस्य विश्वस्य प्रथमं पदं तावत् 'अग्निः' वर्तते। यास्काचार्यः निर्वचने प्राह - अग्रणीर्भवति, अग्रं यज्ञेषु नीयते अङ्गं नयति सन्नममानः। अक्नोपनो भवति इति स्थौलाष्ठीविः।

न क्नोपयति न स्नेहयति। त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिः। इतात्, अक्ताद्, दग्धात्, नीतात्। स खलु एतेः आकारमादत्ते। गकारमनक्तेर्वा दहतेर्वा। नीः परः।

अग्निः यद्यपि त्रिषु लोकेषु भवति तथापि पृथिव्यां प्रमुखः। वरुणः अपाम्पतिः रात्र्यभिमानी देवो वा। मित्रः प्रकाशमयो देवः दिनाभिमानी। तमसः विनाशकः।

अर्यमा उभयोर्मध्यवर्ती देवः सुदानवः शोभनदानः प्रोक्तः। इमे त्रयः अग्नेः साहचर्येण सुदानशीलाः प्रार्थकानामभीष्टफलप्रदाः भवन्ति। वरुणादयः देवाः अग्निना नियम्यन्ते। अरान् न नेमिः। अरान् रथचक्रम् तस्य नेमिः वलयः बाह्यवलयः यथा सर्वं चक्रं व्याप्य कार्यं करोति तद्वत् प्रयुक्तोऽयमग्निः वरुणादीन् देवान् व्याप्य तिष्ठति। अयमेवाग्निः नारायणाख्यः परमेश्वरः।

दशमे च मन्त्रे युवतमोऽग्निः स्तुतः। प्राणाग्निः शयनावस्थायामपि कार्यं करोत्येव स कदापि न क्लेशं अनुभवति न च व्यथितो भवति अतः युवतमः यविष्ठः अतिशयेन युवा युवतमः। अयमग्निः शशमानाय शंसमानाय प्रार्थकाय पाठकाय उपासकाय वा तथा च सुन्वते अभिषवं कुर्वते यजमानाय रत्नं रमणीयं यागार्थं हविः देवतातिं देवेषु तायमानं विस्तार्यमाणं इन्वसि प्रापयसि ददासि च। इन्वतिः व्याप्तिकर्मा। त्वां युवतमं वयं कारे मन्त्रलक्षणे पाठे स्तोत्रे च धीमहि स्थापयामः मन्त्रचैतन्याय।

महिरत्नविषये गोविन्दाचार्यस्योल्लेखः प्रसङ्गेऽत्र विधीयते। महिरत्नः कस्मात्। महाधनो भवति। महाज्ञानो भवति। महच्च सुखमस्य भवति। रत्नं हि रतनं रतिः। महच्च सुखं ज्ञानं वाऽस्माद्भवति। महच्च सुखरूपं ब्रह्मास्य साक्षत्समाराध्यं भवति। महतामपि रतिरस्माद् भवति। महद्भिरपि रतिरूपं ब्रह्मानेनैव गम्यते। अतस्तं देवं स्तुतिशब्दे निधीमहि स्थापयामः। यथा देवे तथा गुरौ।

एकादशेन मन्त्रेण पुनः अग्निः प्रार्थितः। अयं भगवान् ऐहिकामुष्मिकं सर्वं सौख्यं यजमानाय प्रयच्छति। धनं पुत्रमैश्वर्यञ्च। धर्णसिं विद्यादि-धारणकुशलं पुत्रम्। यथा सूर्यस्य रश्मिः लोकान् यमयति नियमयति तथैव अग्निरपि जन्मनी जननाद्याधारभूतौ इहलोकपरलोकौ नियमयति।

उपान्तिमे मन्त्रे त्रिष्टुप् छन्दः । सुद्योत्मा इति सुद्योतमानः शोभनप्रकाशः । द्युत दीप्तौ । जीराऽश्वः अश्वस्य विशेषणम्, जीराः जवन्ते इति जीराः । तादृशाः वेगवन्तः अश्वाः यस्य स जीराश्वः । यद्यपि अश्वः अश्नुते ध्वानम् महाशनो भवति इति यास्कः । असौ अग्निः अस्माकं आह्वानं शृणवत् श्रुणुयात् अथवा अस्मान् श्रावयेत् । देवेषु मध्ये प्रख्यापयेत् । चन्द्ररथः 'चन्द्रः स्वर्णेऽपि कथ्यते' स्वर्णमयो रथः इति । अयमग्निः अमूरः अमूढबलः । मूढः मनुष्यो भवति, देवः अमूढ एव । असौ यज्ञस्य पारं नयेत । यज्ञस्य पारं प्रापयेत् ।

अमूरः अप्रतिहतगतिः इति सङ्ग्रहभाष्ये । वस्यः पदं व्याख्यातं गोविन्दाचार्येण - सर्वाश्रयत्वाद्धा वसति सर्वमस्मिन्निति वस्यः । अस्मदीयं स्तोत्रं च श्रुणुयात् । अथवा श्रावयेत् भगवते ।

अन्तिमे मन्त्रे अस्माभिः स्तवनं कृतम् । शिमी शक्तिः इति कर्मनामसु पठितम् । यजमानैः स्तुतः अग्निः । सामाज्याय सम्यक् राजमानत्वाय । अयमग्निः स्वर्गादिफलं दधानः ददानः । मघवानः मघ इति धननामसु पठितम् तद्वान् । परन्तु गोविन्दाचार्यः मखवन्तो मधवानः । तं वा एतं मखवन्तं सन्तं मघवानित्याचक्षते । यशस्विनो वा ।

अस्मत् पुत्रपौत्रादयः वयं चाग्निं स्तुमः । तत्र दृष्टान्तः - मिहं न सूरः । मेहनशीलं मेघं यथा सूर्यो वृष्ट्यर्थं शब्दयति तद्वत् ।

एभिः त्रयोदशमन्त्रैः नारायणः, हनुमान् भीमः वायुः आनन्दतीर्थश्च स्तुतः । मन्त्राणां विशेषेण गोविन्दाचार्यस्यान्तःप्रज्ञा उत्कृष्टतरा विभाति । समग्रं शास्त्रं तत्तत्स्थले मूर्ततरं विभाति । मन्ये यत् भाष्यमिदं समेषां विद्योपासकानां जिज्ञासूनां ज्ञानपिपासकानां अर्थतत्वावगाहकानां आत्मतत्वजिज्ञासूनाञ्च समस्तभ्रमच्छेदाय आत्मकल्याणस्वरूपावाप्तये च वर्तते । अस्य भाष्यस्य भाषान्तरेषु अनुवादः तथा आचार्यकक्ष्यायां चाध्यापनाय प्रयासः विद्वद्भिः करणीयः । स्वनामधन्यः गोविन्दाचार्यः प्रणस्यः स्तुतियोग्यश्च ।

*****

# श्रीबन्नञ्जे गोविन्दाचार्याणां तलवकारोपनिषच्चिन्तनम्

अ.गुरुप्रसादाचार्यः

**जयन्ति ते सुकृतिनः रससिद्धाः कवीश्वराः ।**
**नास्ति तेषां यशः कार्ये जरामरणजं भयम् ॥**

सुविदितमेवेदं सुभाषितं समेषां सज्जनानाम्। अस्मत्कालीनाः तादृश रससिद्धाः कवीश्वराः बन्नंजेगोविन्दाचार्यवर्याः। सरस-सुन्दर-पाठ-प्रवचन-मालिकाभिः (ದೃನಿಸುರುಳಿ) अनितरसाधारणवैदुष्योपेतग्रन्थरत्नैश्च अद्यापि राराजन्ते आचार्यवर्याः सहृदयसज्जनहृदयमन्दिरेषु ॥ तत्र उपनिषदः अधिकृत्य आचार्याणां चिन्तनं परमाद्भुतं, सर्वातिशायि च। तत्राऽपि तलवकारोपनिषदः यः कन्नडानुवादः आचार्यैः रचितः, स तु कन्नडभुवनेश्वरी-शिरोरत्नमिव राराजते। एवं संस्कृतभाषायां, वामनपण्डिताचार्यरचित-तलवकारोपनिषद्भाष्यटीकायाः पन्थिकारूपेण रचिता कृतिः विद्वत्प्रपञ्चे एव असाधारणं स्थानं आभज्यते ॥

## भूमिका राजतेतराम्

उभयकृत्योरपि प्रारम्भे वर्तमाना पीठिका नूनं असाधारणीका अनुपमा अनन्या यत्र आचार्याः – 'अपौरुषेयत्ववादिनां सारसंग्रहः, इतिहासो नाम चक्रगमनम् खंडनमध्यपौरूषेयम् इति अन्यान्यप्रकरणेषु उपनिषद्विषये प्रपञ्चे अवश्यं ज्ञातव्यानां विषयाणां सारसङ्ग्रहमेकत्र कृतवन्तः।

## अथ कथं ताः उपनिषदः

भूमिकायामेव 'उपनिषत्' शब्दस्य नूत्न-नूत्नार्थाविष्कारः स्वरसतया कृताः- यथा वा – (उपनिषच्चन्द्रिका भूमिका Page No - 53)

महाभारते स्मर्यते-

**यं वाकेषु अनुवाकेषु निषत्सूपनिषत्सु च ।**
**वदन्ति सत्यकर्माणं सत्यं सत्येषु सामसु ॥**

तत्र काः निषदः ? काः उपनिषदः ? ब्राह्मणारण्यका इति एव निषदः। कुतः ? ब्राह्मणारण्यकेषु अध्यात्मं निषण्णमिति निषदः । ब्राह्मणारण्यकेभ्योऽपि उपरि गताः उपनिषदः। वेदवाचाम् उत्कृष्टतमाः सारभागाः उपनिषदः इति निष्कर्षः, तेन वेदवाङ्मये सर्वस्मात् उपरि निषीदन्ति इति उपनिषदः(अ) । ये च उपसीदन्ति तान् उपरि निषादयन्ति इत्यपि उपनिषदः(आ)। उपरे नारायणे स्वयं निषीदन्ति इत्यपि उपनिषदः(इ) । श्रोतॄन्/पाठकान् नः उपरे निषादयन्ति इति वा उपनिषदः(ई) । उपरि नीत्वा उपरे नीत्वा वा साधयन्ति भगवन्तं इति वा उपनिषदः(उ) । उपनीताः सीदन्ति आसु इति वा उपनिषदः ।

अपि च- 'उप' इत्यस्य प्राचीनैः अङ्गीकृतः अर्थः सामीप्यं इति। 'उत्कृष्टाननुरूपत्वात् उपशब्दः प्रकीर्तितः' इति माण्डूकभाष्ये माहात्म्य प्रमाणानुगुणं, उपशमशब्दे उपशब्दस्य उत्कृष्टः इत्यपि अर्थः सर्वज्ञाचार्यैः सूचितः। रहस्यार्थकस्य 'उपह्वर'शब्दस्य संक्षिप्तरूपोऽयं उपशब्दः 'रहस्यं' इत्यप्यर्थम् अभिधत्ते। एवं च सामीप्यं, उत्कृष्टः, रहस्यं इति अर्थत्रयं आदधानः उपशब्दः अस्माकं जीवानां अत्यन्तसमीपे रहस्यतया वर्तमानं शब्दैः सर्वैः उत्कृष्टं परब्रह्म नारायणमेव वक्ति ॥ उप=भगवन्तं, नि= नितरां सादयन्ति= बोधयन्ति/प्रापयन्ति इति उपनिषदः। (षद्लृ=विशरणगति-अवसादनेषु, गतिः=अवगतिः, प्राप्तिश्च) ।

अपि च षद्लृधातोः अवसादनं= नाश इत्यप्यर्थः। तमर्थं उवगम्य चिन्तयामः। 'उपनिषदः' इत्यस्य अन्योप्यर्थः स्फुरति-

उप- जीवानां समीपे, उप=उत्कृष्टया= अनादिकालादारभ्य वर्तमानं अज्ञानं, नि=नितरां, सादयन्ति= नाशयन्ति इति उपनिषदः।

(भगवत्स्वरूपविषये, जीवस्वरूपविषये, संसारस्वरूपविषये वर्तमानं अज्ञानं नाशयन्ति) ।

एवं तत्त्वज्ञानबोधनद्वारेण अज्ञाननाशनद्वारेण जीवानां संसारमेव नाशयन्ति इत्यपि उपनिषदः।

एवं उपनिषच्छब्दस्य अनेके नूत्नाः अर्थाः आचार्यैः प्रकाशिताः। उपनिषच्चिन्तनविषये बन्नञ्जे गोविन्दाचार्यः नूनं मार्गदर्शीमहर्षिः। तेषां मार्गदर्शने यदि पुरतः गच्छामः- अन्येऽप्यर्थाः एवं स्फुरन्ति-

१. उप= अस्माकं समीपे स्थितं, एवमपि रहस्यं, यथायोग्यं उत्कृष्टं-लक्ष्मीतत्त्वं, प्राणतत्त्वं, रुद्रेन्द्रादिदेवतातत्त्वं, तेषां तारतम्यं च निरतितरां सादयन्ति= बोधयन्ति, तेन च तत्तत् तत्त्वविषये अज्ञानं नाशयन्ति, अन्ते च तत्तत् प्रापयन्ति च इत्यपि उपनिषदः।

२. उप= उत्कृष्टं - मुक्तिसाधनोपायं - निष्कामकर्मयोगं, ज्ञानयोगं, भक्तियोगं, निरतितरां, सादयन्ति=बोधयन्ति इत्यपि उपनिषदः।

३. उप= उत्कृष्टं, जीवस्वरूपभूतं आनन्दं=मुक्तिं नितरां बोधयन्ति, प्रापयन्तीत्यपि उपनिषदः ॥

## नामधेये किमस्ति ? बहु अस्ति

'तलवकार'शब्दस्यापि अतीवनूतनोऽर्थः एवं संप्रकाशितः-

(उपनिषच्चन्द्रिकाभुमिका- पृ.सं- 49, 50)

'अथ सामवेदिनां इयं तलवकारोपनिषत् भवति यां केनोपनिषत् इति प्रचुरमाचक्षते। केनेषितं पतति प्रेषितं मनः..... इति केन पदेन आरब्धा उपनिषत् केनोपनिषत् इति समीचीनम् ॥ कथं अथ तलवकारोपनिषत्किं निमित्तं नामधेयम् ? कश्चार्थः ? कावा निरुक्तिः ? सहस्रवर्त्मा सामवेदः। तत्रैव तलवकारशाखा। तस्याः शाखायाः द्रष्टारः तलवकाराः उच्यन्ते। तन्त्रवाद्यकारान् सतः तलवकारानाचक्षते इति निरूचुः। ते किन्तु(ल) तलवकाराः ये पाणितलेन तोलयित्वा तालं सतालं गायन्ति। तालवाद्यं मुरज, मृदङ्ग, पणव, गोमुखादिकं आनद्य गायन्ति। तथाचेदं लयप्रधानं

तलवकारगानम् । अद्यत्वे तु सामगाने श्रुतिरस्ति । न लयः । गायेयुः वीणायां साम । गायेयुः वेणुना साम । न मुरजेन । आसीदपि तादृशः कालः । यत्र सतालं सामगाः साम गायन्ति स्म । अस्याः पद्धतेः प्रवर्तकाः तलवकाराः नाम । तेषां इयं उपनिषत्- तलवकारोपनिषत् इति ।

## क्रमपरिवर्तनेप्यस्ति अनुसन्धानम्

'केनेषितं पतति....' इति प्रथमश्लोके- मनः, प्राणः, वाक्, चक्षुः, श्रोत्रम्- इति क्रमेण पञ्चेन्द्रियाणां प्रस्तावः । तस्य उत्तररूपे द्वितीयश्लोके च श्रोत्रं, मनः, वाक्, प्राणः, चक्षुः- इति क्रमेण पञ्चेन्द्रियाणां प्रस्तावः ॥ पुनः पञ्चमश्लोकात् आरभ्य नवमश्लोकपर्यन्तं-पञ्चेन्द्रियाणां प्रस्तावः- वाक्, मनः, चक्षुः, श्रोत्रं, प्राणः इति अन्येनैव क्रमेण ॥ एवं क्रमपरिवर्तनेऽपि अनुसन्धान-विशेषः अस्ति तं अनुसन्धानविशेषं कन्नडानुवादे विशेषतः, एवं संस्कृत-व्याख्याने संक्षिप्ततया सूचितवन्तः बन्नञ्जे आचार्याः । संस्कृते यथा-

प्रथमश्लोके- 'स्वानुभवक्षेत्रं मनः प्रथममाह शिवः । ततः स्वतोऽप्युत्तमं प्राणम् । उत्तरार्धेऽप्येवम् प्रथमं वाक्-देवता अग्निः । ततः ततोऽप्युत्तमौ चक्षुः-श्रोत्रमानिनौ सूर्याचन्द्रमसौ इति क्रमः ॥

द्वितीयश्लोके- 'अयमत्रानुसन्धानक्रमः । प्रथमं गुरुमुखात् श्रवणम् । ततः मनसा स्वरूपचक्षुषा साक्षात्कारः इत्यत्र विवक्षाक्रमः ॥'

पञ्चमश्लोकात् नवमश्लोकपर्यन्तं निर्दिष्टानाम् इन्द्रियाणाम् अयमत्र क्रमः । वाग्देवता स्वाहा प्रथमम् उक्ता । ततो मनोदेवः पर्जन्यः, अग्निर्वा । ततः चक्षुः-श्रोत्रमानिनौ सूर्याचन्द्रमसानन्तो च मुख्यप्राण इति देवता-तारतम्यानुगुणोऽयं निर्देशः ॥

## अर्थगाम्भीर्यमद्भुतम्

वेदोपनिषदां अनितरसाधारणवैशिष्ट्येषु अन्यतमत् तासां परमोच्चं अर्थगाम्भीर्यम् । तदर्थगाम्भीर्यं बन्नञ्जे आचार्याः स्वीयानुवादे व्याख्याने च अतीवविशदतया विरूपितवन्तः ॥

द्वितीयमन्त्रे 'स उ देवः' इत्यस्य अतिसुन्दरं विस्तृतं व्याख्यानं पश्यन्तु ॥ यथावा- 'सः' इति सर्वनामशब्दः सामान्यतः दूरस्थं वक्ति । अत्र तु न केवलं दूरस्थः, अपि तु समीपस्थोऽपि । सृ=गतौ, सर्वत्र सरतीति= सः इति निरुक्तिः । एवं च दूरस्थः समीपस्थः, सर्वत्रवर्तमानः यः स एव 'सः' अपि च, सर्वं सरतीति= 'सः' इत्यपि निरुक्तिः ॥ ये गत्यर्थकाः ते ज्ञानार्थकाः ॥ एवं च 'सः' इत्युक्ते 'सर्वज्ञः' इत्यप्यर्थः ॥ ब्रह्माण्डपिण्डाण्डेषु सर्वत्र वर्तमानः, सर्वब्रह्माण्डपिण्डाण्डज्ञानीयः स एव 'सः'

किञ्च- यः सर्वस्मादपि सारभूतः स एव 'सः' सारभूतश्च स भवति यः दोषरहितः, ज्ञानानन्दमयश्च । एवं च यः सच्चिदानन्दमयः स एव 'सः' इत्युच्यते ।

'सः' इति दूरस्थोऽपि भवति । अत एव बहुदूरे सूर्यमण्डले वर्तमानः नारायणः 'सः' इत्येवोच्यते ॥ एवं समीपेऽपि वर्तमानः सः । अत एव जीवानां हृत्कमलवासी गायत्रीप्रतिपाद्यः बिम्बरूपी अपि 'सः' । एवं सर्वव्याप्तः एव सारात्सारतरः । अत एव सर्वशब्दवाच्यः । श्रोत्रं, चक्षुः मनः, वाक्, प्राणः इति इन्द्रियवाचकशब्दाः अतिमुख्यतया नेन्द्रियवाचकाः, न वा इन्द्रियाभिमानिदेवतावाचकाः । अपि तु- सकलेन्द्रियाणां, अभिमानिदेवतानां च स्रष्टारं, एवं तेषां तत्तच्छक्तिप्रदं, महाप्रलयकाले एतेषां संहर्तारं, मुक्तौ पुनः स्वरूपेन्द्रियाणां अभिव्यक्तिकर्तारं भगवन्तमेव इन्द्रियवाचकशब्दाः संवदन्ति । एवं च सर्वव्याप्तः सर्वज्ञः, सारात्सारतरः, सर्वशब्दवाच्यः यः स एव 'सः' ।

### 'क उ देवो युनक्ति' ? इति प्रश्नाभिप्रायः कः ?

प्रथमे मन्त्रे एव अयं प्रश्नः, इन्द्रियनियामके प्रश्नः इति सामान्यतः उत्तरम्, अभिमानिनयन्यायेन इन्द्रियाभिमानिनां नियामकः कः इत्यपि प्रश्नः परन्तु इन्द्रियाणां, इन्द्रियमानिनां च नियामकं हृषीकेशं प्रश्निकः जानात्येव । एवं तर्हि ज्ञातविषये सदाशिवः कुतः पृच्छतीति ? अत्र बन्नञ्जे आचार्याणां विवरणम् अतीवसमीचीनम् । यथा-

महिमातिशयज्ञानार्थः प्रश्नः, 'को देवः कीदृशो देव इति ॥ तद्यथा

अर्जुनः कृष्णमाह- 'भासस्तवोग्राः प्रतपन्ति विष्णो। आख्याहि मे को भवा नुग्ररूपः।(भगवद्गीता-११-३०-३२) तदेवं 'तावा एताः शीर्षन् श्रियः। श्रिताः चक्षुः, श्रोत्रं, मनो, वाक्, प्राणः' (महैतरेये- २.२.२२) इति श्रुत्यन्तरगदितानि शीर्षाण्यानि पञ्चज्ञानसाधनानीन्द्रियाणि गृहीतानि भवन्ति पञ्चात्मनोः प्राणनारायणयोः उपासनार्थम्। अवान्तरप्रेरकाः सिद्धा एव। 'भीषास्माद्वातः पवते' इत्यादिः। न तत्र जिज्ञासा। स्वतन्त्रप्रेरकस्य महिमातिशय एवेह जिज्ञास्यते इति ॥

## अपूर्वं पाठान्तरम्

बन्नञ्जे आचार्याः वदन्ति स्म यत् अर्थशुद्धेः कारणीभूता पाठशुद्धिरिति शुद्धपाठस्वीकारविषये अतीव जागरूका आसन् आचार्याः। तलवकारोपनिषद्यपि द्वितीयखण्डे प्रथममन्त्रे 'यदि मन्यसे सुवेदेति दहरमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपम्' इति सार्वत्रिकः पाठः नञ् रहितः एव। परन्तु अस्य भागस्य वामनपण्डितानां टीका तु 'स्वहृदयस्थमेव ब्रह्मणः रूपं नूनं नवेत्थ' इति। प्राचीनटीकाकाराणां वामनपण्डितानां टीकानुगुणं 'दहरमेवाऽपि नूनं न वेत्थ ब्रह्मणो रूपं' नञ्गर्भ एव प्रतनः पाठः इति निश्चीयते इति बन्नञ्जे आचार्याः। सर्वगुणपरिपूर्णस्य परब्रह्मणः हृद्रूपस्यापि संवेदनं संपूर्णतया अशक्यमेवेति नवेत्थ' इति नञ् गर्भपाठस्वीकारः समुचित एव ॥ अत एव वामनपण्डिताचार्याणां पूर्वजाः नारायणपण्डिताचार्याः अपि सुमध्वविजयमहाकाव्ये एवं प्रावोचुः-

**न रमाऽपि पदाङ्गुलीलसन्नखधूराजदन्तसद्गुणान्।**
**गणयेद्गणयन्त्यनारतं परमान् कोऽस्यपरो गुणान् वदेत् ॥**

## छन्दस्स्वपि वर्तन्ते अनुसन्धानविशेषाः

वैदिकच्छन्दोविषये अनितरसाधारणं कार्यत्रयम् आचार्याः कृतवन्तः-

१. छन्दोबुभुत्सानां कन्नडभाषायां सुखावबोधाय लक्षणादिनिरूपणम्॥

२. वैदिकछन्दोविषये विशेषबुभुत्सूनां कृते वैदिकछन्दोमीमांसा’ इति ग्रन्थं आरचय्य ‘उपनिषच्चन्द्रिका’ इति संस्कृतग्रन्थे परिशिष्टत्वेन आयोजनम् ॥

३. वैदिकछन्दसां अभिमानिदेवतानिर्देशपूर्वकं, तत्तच्छन्दःस्वीकारेऽपि कार्य निर्देशः, अक्षराधिक्ये अक्षरन्यूनतायां वा सूचितः अर्थविशेषः, एकस्मिन् छन्दसि अन्तर्गतं अन्यत् छन्दः, छन्दसां बृहतीकरणं इत्येवमादयः अपूर्वाः विषयाः बन्नञ्जे आचार्यैः इदं प्रथमतया विशदीकृताः ॥ संस्कृतव्याख्याने प्रथममन्त्रछन्दोविचारे यथा-‘प्रथममन्त्रे तावत् प्रथमपादे एकाक्षराधिका त्रिष्टुप्। एकादशाक्षरा हि त्रिष्टुप् एकादशात्मनः शिवस्य स्वं छन्दः। अतः सूक्तं त्रिष्टुभा शिवः पृच्छतीति। प्रथमपादे च एकाक्षराधिक्येन द्वादशेन्द्रियगमणन्तारं केशवादिद्वादशात्मानं नारायणं स्मरन्नेव प्रश्नम् उपस्थापयतीव ॥

## लिङ्गवचनानां व्यत्ययः शास्त्रेषु बह्वर्थत्वाय भवति

न वेदेषु लौकिकव्याकरणचिन्ता। अन्यदेव वर्तते वैदिकव्याकरणं पाणिनीयम्। एवमपि स एव प्राह- छन्दसि इष्टानुविधिः’ कात्यायनोप्याह- ‘सुपां सुपो भवन्ति, तिङां तिङः भवन्ति(५.२.३९)। एतेन च वैदिकप्रयोगेषु लिङ्गादिव्यत्ययानां गतिः कल्पिता, व्यवस्थापि कृता। परन्तु वेदेषु व्याकरणनियमभङ्गः कुतः क्रियते इत्यस्य नोत्तरं लब्धम्। अत्र बन्नञ्जे आचार्याः वदन्ति-

वेदेषु व्याकरणनियमभङ्गोऽपि बह्वर्थत्वाय भवति। यथा वा ‘येन चक्षूंषि पश्यति’ इति मन्त्रव्याख्याने -

१. अभिमानि देवताविवक्षया एकवचनम्। चक्षुषामभिमानी विवस्वानपि येन पश्यतीति ॥

२. येन च चक्षूंषि पश्यति= पश्यन्ति(वचनव्यत्यासः) द्रष्टारः= चक्षूंषि, पश्यन्ति = दर्शनादिशक्तिमन्तः भवन्ति।

३. ख्यायन्त इति चक्षूंषि' इत्यर्थस्वीकारे चक्षुर्ग्राह्यपदार्थजातानि एव चक्षूंषि, तानि लोकः पश्यति(मात्रवचनव्यत्यासः)

४. येन- यदनुग्रहेण, चक्षूंषि=चक्षुषा(तृतीयार्थे प्रथमा) अयं लोकः पश्यतीति।

## प्लुतस्वरस्य अपूर्वार्थता:

चतुर्थखण्डे च उपनिषदि एकं वाक्यम्- 'यदेतत् विद्युतो व्यद्युतदा३ इति' यदेतत्= परब्रह्म, विद्युतः= विशेषेण द्योतन्ते इति- विद्युतः= सूर्य-चन्द्र-नक्षत्रादिसर्वभासः व्यद्युतदा३ स्वयं तत्र स्थित्वा प्रकाशयति। व्यद्युतदा३ इति प्लुतस्वरस्तु महदाश्चर्यमिदम् इति वक्ति ॥ सूर्य-चन्द्र-नक्षत्रादयः प्राकृतभासः, अप्राकृतपूर्णतेजोरूपिणः भगवतः पुरतः अतीव न्यूनाः॥ सः तेजसां सिन्धुः। अन्ये बिन्दवः। सर्वानपि भासयते तत्तेजः परन्तु परब्रह्मणरूपिणं तेजः सूर्यादयः न भासयन्ते। तदुक्तं गीतायाम्-

**'न तद्भासयते सूर्यो न शशाङ्को न पावकः'** ।

काठकेऽपि श्रूयते-

'न तत्र सूर्यो भाति न चन्द्रतारकं नेमाविद्युतो भान्ति कुतोऽयमग्निः तस्य भासासर्वविदं विभाति'। सर्वप्रकाशकस्य तस्य प्रकाशकः नान्यः वर्तते इति गीता-काठकयोः विदितं विषयं तलवकारः 'व्यद्युतदा३' इति प्लुतस्वरेण सूचयति॥ तत्रैव उत्तरतः अन्यद्वाक्यम्- 'न्यमीमिषदा३'.....

सर्वप्रकाशकं ब्रह्म महाप्रलयकाले अक्षिणी निमील्य प्रसुप्तम्। तत्राऽपि पुनः प्लुतस्वरः को वा विशेषः अर्थः प्लुतस्वरस्य ? आचार्याः वदन्ति- कियत्कालं स्वपिति तत् ब्रह्म? महाप्रलयकालसमाप्तिपर्यन्तम्। महाप्रलयकालस्तु ३२२०४ सहस्रकोटिवर्षाः। तावान् दीर्घकालोऽपि कालातीतस्य तस्य ब्रह्मणः क्षणकालोऽपि न। अत एव भागवते तृतीयस्कन्धे वर्ण्यते- 'अव्याकृतस्यानन्तस्य निमेष उपचर्यते'। एवं दीर्घकालं प्रसुप्तमपि

तद्ब्रह्म क्षणकालमपि न सुप्तम् । एतादृशं आश्चर्यभावं वदनं व्यावृत्यैव वर्जनीयं किल! अत एव प्लुतस्वरः ॥

**अपसिद्धान्तनिरासः**

मूलमवलम्ब्य व्याख्यानम् । मूलसिद्धान्ते दीक्षाय व्याख्यातॄणामत्यन्तम् आवश्यकी । मूलसिद्धान्तदीक्षा तदापरिपूर्णा भवति यदा मूलसिद्धान्तमण्डनं, तद्विरुद्धविचाराणां खण्डनं च व्याख्यातृभिः क्रियते । बन्नञ्जे गोविन्दाचार्या अपि स्वीये उपनिषच्चन्द्रिकाभिधे व्याख्याने सर्वज्ञाचार्याणां भाष्यमण्डनम्, तद्विरुद्धाभिप्रयाणां खण्डनं च समीचीनतया एव कृतवन्तः प्रथममन्त्रव्याख्याने नवनमन्त्रव्याख्यानं, उपनिषदः अन्तिमखण्डव्याख्यानसन्दर्भेऽपि आचार्याणां परमतनिरासकौशलं द्रष्टुं शक्नुमः ॥

सरससुन्दरवाग्मिः सरसभारतीविलासेन च उपनिषदां हार्दं भाष्यकाराणां अभिप्रायं वामनपण्डितानां विशेषविचारं च बन्नञ्जे आचार्याः बालानामपि सुखावबोधः यथाभवेत्तथा स्वीयव्याख्याने निरूपितवन्तः । नूनवयं धन्याः यतः बन्नञ्जे आचार्याणां काले वयं आस्म, तं महोदयं अपश्याम, तदानीं इदानीमपि तेषां मधुरवाणीं शृण्वन्त एव स्मः, तेषां अद्भुतग्रन्थान् पठन्तः/ पाठयन्तश्च स्मः ॥

****

# डा. बन्नञ्जेगोविन्दाचार्यविरचिता उपनिषच्चन्द्रिका

डा. एच्.वि. नागराज राव्

प्रथितयशसां प्रातःस्मरणीयानां विद्वत्तल्लाजानां डा. बन्नञ्जे गोविन्दाचार्याणां संस्कृतभाषाकृतिषु मेरुपर्वतायते उपनिषच्चन्द्रिका । बहुषु वर्षेषु कृतस्य परिश्रमस्य परिपक्वं फलमत्र गोचरीभवति। वेदान्त शास्त्रस्य यस्यां कस्यामपि शाखायां गम्भीरमध्ययनं चिकीर्षुभिः सर्वैरपि इयम् उपनिषच्चन्द्रिकाऽध्येतव्येति ममाभिप्रायो निवेद्यते। तस्याः प्रथममयूखस्य विषये कांश्चनांशान् अस्मिन् लेखने निवेदयितुमिच्छामि।

## ग्रन्थे व्याख्याता उपनिषदः

अस्मिन् ग्रन्थे षडुपनिषदो व्याख्यानसहिता उपलभ्यन्ते। याज्ञीय-मन्त्रोपनिषत् (ईशावास्योपनिषत्) काठकोपनिषत् (कठोपनिषत्), तलवकारोपनिषत् (केनोपनिषत्), आथर्वणोपनिषत् (मुण्डकोपनिषत्), षट्प्रश्नोपनिषत् (प्रश्नोपनिषत्), माण्डूकोपनिषत् (मण्डूक्योपनिषत्) इति तासां नामधेयानि। तासाम् श्रीमन्मध्वाचार्याणां भाष्यं, श्रीवामन-पण्डिताचार्यविरचिता टीका, श्रीबन्नञ्जेगोविन्दाचार्यविरचिता भावचन्द्रिका च ग्रन्थेऽस्मिन् उपलभ्यन्ते।

## उपनिषद्भूमिका

श्रीगोविन्दाचार्यैः श्रेष्ठा भूमिका सविस्तरा ग्रन्थादौ दत्ता। सर्वैर्वेदान्ता-सक्तैरियं प्रथमं पठितव्या। वेदशाखानां विषयेऽत्र लभ्यमाना सामग्री अन्यत्र दुर्लभा। वेदा अपौरुषेया इति सिद्धान्तस्य च समर्थनमत्र विशिष्टया रीत्या कृतम् । वेदानां शाखाः कतीति च विचारः सुष्ठु न्यरूपि। ब्राह्मणानां सार आरण्यकम्। आरण्यकानां सार उपनिषत् इति आचार्यगोविन्दप्रतिपादनं सम्यगस्ति। पुराणेतिहासेषु अप्रामाण्यं कथितवताम् आधुनिकानां

केषाश्चिन्मतं निरस्य गोविन्दाचार्या वदन्ति- चतुर्विधाश्चत्वारो वेदाः, पुराणानि, इतिहासौ च भारतरामायणे प्रमाणभूताः सप्त मातरः इति। अपि च त आहुः- संहितापाठोऽपौरुषेयः, क्रमपाठः पौरुषेय इति। ईदृशाः सूक्ष्मविषयाः जिज्ञासुभिः उपनिषद्भूमिकायां ज्ञातव्याः सन्ति। त्रयीमन्त्राणां त्रयोऽर्था इति सप्रमाणं कथयन्ति चाचार्यगोविन्दाः।

**त्रयोऽर्थाः सर्ववेदेषु दशार्थाः सर्वभारते।**
**विष्णोः सहस्रनामापि निरन्तरशतार्थकम् ॥**

गोविन्दाचार्याणां बहुश्रुतत्वं पदेपदे व्यक्तं भवति अत्र। वेदेषु गृह्यमाणास्त्रयोऽर्थाः के इति वदन्ति-

अधिदैवमधाध्यात्ममधियज्ञमिति त्रयम्। अस्मिन् प्रसङ्गे गोविन्दाचार्याः शाङ्खायनगृह्यसूत्रं दुर्गाचार्यस्य भाष्यं पातञ्जलं महाभाष्यं मन्त्रार्थमञ्जरीं षड्गुरुशिष्यवाक्यं चोदाहरन्ति। कोऽन्य एतावतो ग्रन्थान् दृष्टवान् ?

पूर्वमीमांसासूत्रकारो जैमिनिर्देवतास्वरूपम् अङ्गीकरोति न वेति प्रौढो विचारोऽपि उपनिषच्चन्द्रिकायाः भूमिकायां प्रस्तुतः। तत्र गोविन्दाचार्याणां निशिता मतिर्जाज्वलीति। विपश्चिदपश्चिमैः निश्चप्रचं पठनीयोऽयं भागः।

आचार्या अत्र जिज्ञासून् जागरयन्ति। 'परःशतमुपनिषदः सम्प्रति मुद्रिता दृश्यन्ते। न ताः सर्वा अप्युपनिषदः। अश्वा अपि सन्ति। अश्वमुखाः खरा अपि सन्ति।'

अतस्तत्त्वं ज्ञातुकामैः का उपनिषद आश्रयणीया इति चिन्तना प्रस्तुता। दशानाम् उपनिषदां विषये न कस्यापि विवादः। वेदानां रसा उपनिषदः। महाभारतस्य पञ्चमवेदस्य सर्वपुराणानां च, अन्ततः सर्वोपनिषदां च रसो भगवद्गीतेति आचार्यगोविन्दसिद्धान्तः। तत्र दशोपनिषदां स्वरूपं च न्यरूपि सम्यगाचार्यैः। अतः सर्वेऽप्युपनिषद्विद्यार्थिनः आदौ भूमिकामिमां पठेयुरिति वयं सप्रश्रयं सूचयामः।

भाष्यचन्द्रिकायां गोविन्दाचार्याणां नानादर्शननिष्णातत्वं पदेपदे व्यक्तं भवति। तावतां ग्रन्थानां ज्ञानम् एकस्मिन् पुरुषायुषे कथं प्राप्तुं शक्यमिति वयं विस्मयामहे। ईशावास्योपनिषदि ( याज्ञीयमन्त्रोपनिषदि) केचन मन्त्राः अतीव जटिलाः।

**अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते।**
**ततो भूय इव ते तमो य उ सम्भूत्या रताः ॥**

**अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात्।**
**इति शुश्रुम धीराणां ये नस्तद् व्याचचक्षिरे ॥**

**सम्भूतिं च विनाशं च यस्तद् वेदोभयं सह।**
**विनाशेन मृत्युं तीर्त्वा सम्भूत्यामृतमश्नुते ॥**

इत्यत्र सम्भूतिशब्देन असम्भूतिशब्देन विनाशशब्देन च कोऽर्थो ग्राह्य इति न ज्ञायते। भाष्यचन्द्रिकायाम् गोविन्दाचार्याः पूर्वव्याख्यानानि दर्शयित्वा तत्रत्यान् दोषानपि निर्दाक्षिण्यम् आचक्षते। यथा-

'एवं सम्भूतिः समाधिज्ञानम्। असम्भूतिः तद्विरोधिनां हिंसास्तेयादीनां निवृत्तिः' इत्येके रामानुजीयाः। अशब्दार्थोऽयम्। 'सम्भूतिः कर्म। असम्भूतिरात्मनिष्ठा' इत्यन्ये। तर्हि पुनरुक्तं भवति विद्यां चाविद्यां चेत्यनेन। अवधारणार्थं पुनरुक्तिरित्यगतिकागतिः। 'सम्भूतिः शरीरपरिग्रहनिष्ठा। असम्भूतिस्ततो निवृत्तिरित्यन्ये। कथञ्चित् स्यान्नामायं पदार्थः। अर्थस्वारस्यं तु जिह्रेति। किमित्येवं हठाद् अर्था आकृष्यन्ते।

'सम्भूतिः कार्यं ब्रह्म हिरण्यगर्भः। असम्भूतिः कारणं प्रकृतिः' इति मायावादिनः। ततश्च 'सम्भूतिं च विनाशं च' इति मन्त्रः कुप्यति। तदर्थमेवं व्याचक्षते। 'विनाशपदेन विनाशवत् कार्यं ब्रह्मोच्यते। सम्भूतिपदेन चाकार प्रश्लेषेणासम्भूतिः प्रकृतिरुच्यते' इति। शब्दशास्त्रे काप्यदृष्टचरमिदं व्याकरणकौशलम्। यत् तत्पदेनातदुच्यते इति। तर्हि घटाभाववति भूतले

'घटोऽस्ति' इति वदन्नपि उपादेयवचनः स्यात्। नञ् प्रश्लेषेण 'घटो नास्ति' इत्यर्थवर्णनसम्भवात्। एवं च सर्वोऽपि वाग्व्यवहारो वैयाकुल्यमापद्येत।' इति। एतादृशो वस्तुनिष्ठो विमर्शः अन्यत्र न मया दृष्टपूर्वः इति दृढं वच्मि। अन्यासां चोपनिषदां ग्रन्थिसदृशा भागाः गोविन्दाचार्यैः भाष्यचन्द्रिकायां पूर्वपक्षनिरसनपूर्वकं विवृता इति तेषां वर्तामहे वयमधमर्णाः।

भाष्यचन्द्रिकायाः परिशिष्टमेकं वैदिकछन्दोमीमांसा इति आचार्यपादैः दत्तम्। तत्रातीव सूक्ष्मा विषया अभिहिताः। छन्दश्शब्दस्य का व्युत्पत्तिः, कोऽयं इति जिज्ञासायां तैरुच्यते-

'अत एव छन्दांसि। छादयन्ति भगवदङ्गानि कञ्चुकमिव देहभागमिति। छन्दोविज्ञानिनं छादयति पापात् कर्मणः, यथा पापं कर्म ज्ञानिनमाक्रम्य न पराजयेतेति तथा मन्त्रेषु निगूढं भगवतत्त्वमन्तरेव विधाय छादयन्ति, न प्रकटमाविष्कुर्वन्ति, सम्पुट इव साळग्रामसमुदायमिति च तानि छन्दांस्युच्यन्ते। **उक्तं हि -**

**उत त्वः पश्यन्न ददर्श वाचम् उत त्वः शृण्वन्न शृणोत्येनाम्।**
**उतो त्वस्मै तन्वं वि सस्रे जायेव पत्य उशती सुवासाः ॥४॥**

**(ऋ सं. ७.७१.४) इति।**

छन्दयन्तीति छन्दांसीत्यपरे। समानोऽर्थः। छदि संचरणे इति हि धातुपारायणिकाः। 'छन्दयतीति छन्दः' इति क्षीरस्वामी। छन्दतिरयमर्चन कर्मा निघण्टौ पठ्यते। स एव च निर्वचनान्तरमप्याह छन्दयति आह्लादयत इति च्छन्दः' इति। एवं स्वरसनिर्वचने सत्यपि केचिदन्यथा निर्वदन्ति। तथाहि। जयदेवकृतच्छन्दस्सूत्रविवृतौ हर्षटः 'चन्दति ह्लादं करोति दीप्यते वेति च्छन्दः' इति। वैयाकरणा अप्येनमाशीर्वदन्ति – 'चन्दतेरादेश्च च्छन्द इति दशपादिका। अथाप्येतन्न वेदसम्प्रदायविदां चेतश्चमत्करोति।'

एतादृशस्तलस्पर्शी विमर्शो मया नान्यत्र दृष्टः। कति ग्रन्थाः गोविन्दाचार्यैरेकैकस्मिन्नपि विषयेऽवलोकिताः। इदमेव बहुश्रुतत्वं नाम।

वेदेषु गायत्री चतुर्दशधा इति च ते सोदाहरणं वर्णयन्ति। वेदसाहित्ये कृतभूरिपरिश्रमाणाम् एवैतद् गम्यम्।

वैदिकच्छन्दोमीमांसाया अन्ते गोविन्दाचार्यैरभ्यधायि-

**छन्दसि निष्णातानाम् आश्वलायनशौनकपिङ्गलादीनाम्।**
**प्राचाम् अर्वाचामपि पण्डितयुधिष्ठिरमीमांसकादीनाम्।**
**भणितीरालोक्य समं ततः समन्ततः सारमुद्धृत्य।**
**क्षीरादिव नवनीतं नवनीतमुपायनं सुधियाम्॥ इत्यादि।**

वैदिकच्छन्दोमीमांसां सर्वेऽपि वेदविद्यार्थिनः पठेयुः। इत उत्तरं मध्वमतानुसारिणी तारतम्यमीमांसाच गोविन्दाचार्यैः प्रदत्तः।

तलवकारोपनिषद्भाष्यचन्द्रिकायां गोविन्दाचार्याणां निष्पक्षपातदृष्टिं दर्शयितुमेकं भागमत्र उद्दिधीर्षामि।

'स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानाम् उमां हैमवतीम्। तां हो वाच किमेतद् यक्षमिति।' इत्युपनिषद्वाक्यम्। अत्र भाष्यचन्द्रिका-

'यो यक्षतया प्रादुर्बभूव ततश्च तिरोबभूव 'स' विष्णुः यत्र पूर्वं यक्षरूपः सन्नास तस्मिन्नेवाकाशे इन्द्रस्य गुरुस्थानीयां 'स्त्रियम्' आगमयामास। काम्? हैमवतीम्। हिमवतः पुत्रीम्। हेमालङ्कारभूषिताम् उमाम्। विनापि आभरणजालेन स्वत एव बहुशोभमानाम्। सर्वतो विततप्रकाशाम्। स्वेन सह आगतान् अन्यान् सर्वान् तिरोधाय्य केवलम् उमामेकां तत्रागमयामास विष्णुरिति। अथ चेन्द्रस्तामाजगाम। आगत्य च तामुवाच किमेतत् मदागमनपर्यन्तं त्वया सहात्र स्थितम्, मदागमनमात्रेण तिरोहितं च यक्षमिति। भाष्ये - ब्रह्मणा शिवेन च सह 'नादृश्यत स केशवः'। केशाभ्यां ब्रह्मरुद्राभ्यां सह वर्तत इति हि केशवः । योग्योमेति। साक्षाद् गुरुत्वात्। केचित्तु स्वकीयमतिवैष्णवत्वं विख्यापयन्तो व्याचिख्यासन्- 'हैमवतीं हिरण्यविकारभूषणवतीम्। अत एव बहुशोभमानाम् मां लक्ष्मीरूपां स्त्रियम्

उ आजगाम आगतवान्। तदु चन्द्रमाः इतिवत् उकार एवकारार्थक : इति। प्रमाणवचनविरोधादेव नेदं समीचीनम्। नूनमिदमङ्गञ्चकरिष्यत, यदि प्रमाणेन समवदिष्यत। स्वादिष्ठमप्यधिकम् आस्वादितमनास्वादाय भवति।'

अत्र माध्वमतानुयायिभिरपि कैश्चित् उ + मा इति पदद्वयं कृत्वा हठेन मां लक्ष्मीरिति अर्थं वक्तुं यत् प्रयतितं तत् निराकृतं श्रीगोविन्दाचार्यैः। एतादृशी सत्यनिष्ठापेक्षिता विपश्चिदपश्चिमेषु।

रुक्मं, रुक्मिणी इत्यादीनि पदानि सर्वत्र जनप्रियाणि सन्ति ककार घटितानि। तानि असाधूनि, गकारसहितानि रुग्मं रुग्मिणीत्यादीनि साधूनि इति गोविन्दाचार्याणां दृढं प्रतिपादनम्।

**यदा पश्यः पश्यते रुग्मवर्णं**
**कर्तारमीशं पुरुषं ब्रह्मयोनिम्।**
**तदा विद्वान् पुण्यपापे विधूय**
**निरञ्जनः परमं साम्यमुपैति ॥**

इत्याथर्वणोपनिषदो मन्त्रस्य विवरणे गोविन्दाचार्याः स्पष्टीकुर्वन्ति।

'रुक्मवर्णमिति श्रौतसम्प्रदायानभिज्ञानां प्रामादिकः पाठः। रुग्ममिति सुवर्णनाम । न रुक्ममिति। अपशब्दोऽयं वैयाकरणपाशोपज्ञं यद् रुक्ममिति। ननु रोचमानं हि रुक्मं भवति। रोचते च जनेभ्यः। युजिरुचितिजां कुश्च [दशपा १.१४३] इति सूत्रं च संवदते। तत् कथं रुग्मम् ? न भोः। समलोष्टाश्मकाञ्चनेभ्यः कथं रोचेत? तस्माद्रुजतीति रुग्मम् इत्येव साधु निर्वचनम्। रुजो भङ्गे। रुग्मं हि भनक्ति मनो दायभागिनाम्। सत्यपि कनके मनोभङ्गः। असत्यपि। ननु तर्हि सूत्रं कुप्यति। न भोः। पाठभ्रान्तिरियं वैयाकरणानाम्। युजिरुजितिजाम् इत्येव प्राचीनो धातुपाठः इत्यभ्यूह्यते। अन्यथा चान्तस्य प्रथमं पाठो युक्तः। तदनन्तरं च जान्तयोर्धात्वोः 'रुचियुजितिजाम्' इति।

अन्यत्रापि दृश्यते किलैतादृशी पाठभ्रान्तिर्वैयाकरणानाम्। तथाहि काशिकाकारः रुचिं पठति। नहि-वृति-वृषि-व्यधि-रुचि-सहि-तनिषु क्वौ (६-३-११६) इति। क्षीरस्वामी तु रुचिं पठति। नहि-वृति वृधिव्यधिरुचिसहितनिषु क्वौ' इति। एवमत्रापि रुचिं विहाय रुजिः पठनीयः। रुग्मवर्णम् इति श्रुतिश्च तेन प्रीयते। रुचेरपि मक्प्रत्यये भवति रुजेरपीत्यन्ये। तेन रुक्म इति रुग्ममिति रूपद्वयमपि साधु इति उभयस्स्वस्तिवादिनः।

एतादृशं गम्भीरं व्याकरणपाण्डित्यं गोविन्दाचार्येभ्योऽन्यत्र क्व दृष्टं व्याख्यातुः ? अत एव तेषां वाक्यं सर्वैरादरणीयम्।

उपनिषच्चन्द्रिका आचार्यगोविन्दैर्दर्शनविवरणाय प्राणायि, न तु पाण्डित्यस्य कवित्वस्य वा प्रदर्शनाय, तथापि तद्वयं च वाचकलोचनगोचरी भवति। तत्रत्यानि कानिचित्पद्यानि सद्यो लिखामः।

**1) नाम्ना विद्यामान्यान् यशसा मान्यानपि त्वसामान्यान्।**
**विद्वद्वरमूर्धन्यान् धन्यान् प्रणतोऽस्मि देशिकाचार्यान्॥**

अत्रानुप्रासः मनोज्ञः।

**2) नारायणार्यं पितरं विपश्चिद्गणतल्लजम्।**
**तर्ककर्कशपाथोधितरणाय प्लवायितम् ॥**

अत्र तल्लजपदप्रयोगो मनोहरः, रूपकालङ्कारश्च सुन्दरः।

**3) धीमन् भवाब्धिभयभङ्गदमध्वनाथम्**
**धीमन् हरेर्वसतिवासितचित्तधामन्।**
**श्रीमन् निरस्तदुरिताखिलजीवसीमन्**
**स्वामिन् नमोऽस्तु भवते पवमानस्वामिन् ॥**

अत्र शब्दसौन्दर्यं कर्तुं शब्दशेवधिः पूर्ण इति स्पष्टं द्योतयति।

**4) तेषामुपनिषत्सेयं ये कठन्ति पठन्ति च।**
**नैव तेषां ये शठन्ति ये वठन्ति मठन्ति च ॥**

ये जनाः कठन्ति कृच्छ्रजीवनं कुर्वन्ति, ये च श्रद्धया पठन्ति अधीयते च तेषाम् इयमुपनिषत्। उपनिषत् तेभ्यः स्वरहस्यं विवृणोति। ये तु शठन्ति कैतवं वञ्चनां च कुर्वन्ति, ये वठन्ति अधिकभोजनेन स्थूलोदरा भवन्ति, ये च मठन्ति मदोन्मत्ता भवन्ति तेषां नैव। तेभ्यः उपनिषत् स्वार्थं न प्रकाशयति। अत्र गोविन्दाचार्यैः कठ=कृच्छ्रजीवने, शठ=कैतवे,पठ=व्यक्तायां वाचि, वठ=स्थौल्ये, मठ=मदनिवासयोः इति धातवः प्रयुक्ताः। एतत्सर्वं तेषां वैयाकरणमूर्धन्यत्वे प्रमाणम्।

**5) यक्षं सज्जनपक्षं दुर्जनकक्षं दिधक्षन्तम्।**
**सुरगणरक्षादीक्षं किमपि त्र्यक्षं महो वन्दे ॥**

अत्रापि अनुप्रासः आकर्षको वर्तते।

**6) रामं मेघश्यामं राक्षसभीमं**
**समस्तजगदभिरामम्।**
**श्रीरघुवंशललामं**
**पूरितनिजकामं नमामि धीमन्तम् ॥**

सरलं सुगमं सुन्दरं पद्यमिद कं न प्रीणयेत् ?

**7) बालं कुवलयलीलं**
**गोपीलोलं निरस्तभवजालम्।**
**दुर्जनभर्जनकालं गुणगणशीलं**
**नमामि मुहुरतिवेलम् ॥**

अत्र लकारस्य पुनः पुनः श्रवणं नितान्तमानन्दं जनयति सहृदय-श्रवणानाम्।

**8) नीलोत्पलदलभासं व्यासं व्यासङ्गशीलकृतवासम्।**
**अन्तस्तिमिरनिरासं शुभनासं नमामि मृदुहासम् ॥**

अस्मिन् पद्ये व्यासमहर्षये प्रणामः समर्पितः। व्यासे गोविन्दाचार्याणां महत्तमा भक्तिः।

**9) षोडशकलासु निहितं**
**पिहितं हृदि मे हितं हि तं सततम् ।**
**असतामहितं याचे**
**कृपया मां पाहि भवपतितम् ॥**

'अत्राचार्यगोविन्दा 'हितम्' इत्यक्षरपुञ्जे कविताकौशलेन पञ्चवारम् आनीतवन्त इति द्रष्टव्यम् ।

**10) भेकाः क्वचन न काकाः**
**नाकाशं पूरयन्ति किमु रावैः ।**
**दूरे किल सहकारे**
**कोकिल रे गाय नायकीभूय ॥**

अत्रानुप्रासप्रस्तुतप्रशंसयोः संसृष्टिर्मनस्तोषिणी। आचार्यगोविन्दाः दार्शनिकानां सभायां वाचस्पति- मिश्रसदृशैरुपनीयन्ते, कवीनां संसदि भारविप्रभृतिभिः सहोपविशन्तीति मम मतिः। यदि तैः स्वतन्त्रकाव्यं संस्कृतभाषायाम् अरचयिष्यत, तर्हि तत् कुमारसंभवेन नैषधीयचरितेन सहास्पर्धिष्यतेति मन्ये ।

**'नमाम्याचार्यगोविन्दमरविन्देक्षणप्रियम् ।**
**येनोपनिषदां व्याख्या रचिता भावचन्द्रिका ॥**

****

# आचार्यगोविन्दविरचिता
# प्रश्नमाण्डूकाथर्वणोपनिषच्चन्द्रिका

**डा. हेच्.सत्यनारायणाचार्यः**

समुद्रवद्गाम्भीर्यमुपनिषदाम्। समुद्रे खलु उपरिष्टाद्वलन्तो जनाः लवण-जलात् मत्स्यसङ्घाच्च अन्यत् किञ्चित् न प्राप्नुवन्ति। अधोऽधः प्रविशद्भिः रत्नानि बहुमूल्यान्युपलभ्यन्ते। तद्वत् बालसङ्घा अप्युपनिषदं पेठुरधिजगिरे च। शब्दावगमे वाक्यार्थबोधे च पर्यवसितं तेषामध्ययनम्। नैवं विदुषाम् अध्ययनम्। विद्वांसः खलु उपनिषत्पारावारे स्वेच्छं विहरन्तोऽन्तरधोऽवतरन्तोऽर्थविशेषरत्नान्यासादयन्तो बहुलमानन्दमनुभवन्ति। अस्य आनन्द-कूपारस्य पारो न विद्यते। तस्यामन्दानन्दस्याभिव्यक्तिरेव ग्रन्थप्रणयनम्। स्वेनानुभूतस्य ज्ञानानन्दस्य वितरणमनेन भवतीति महत् पुण्यप्रदं कार्यं व्याख्यानं नाम। **'व्याख्यैकस्य शतोत्तरा'** इत्याह भगवान् मध्वाचार्यः। यत्र नवनवोन्मेषशालिनी प्रतिभा, सरलया हृद्यया च वाग्भङ्ग्या तन्निरूपण-कौशलञ्च सम्मिलिते तादृश एव विद्वद्वरः कुर्याद्ग्रन्थव्याख्यानम्।

ईदृशेष्वङ्गुलिगण्येषु साम्प्रतिकेषु व्याख्यातृषु मूर्धन्यतमोऽयम् आचार्य-गोविन्दः। योऽयमुपनिषदः स्वयमधीयानः प्राचीनैरुक्तेष्वर्थेषु निगूढान् भाव-विशेषान् साक्षात्कुर्वाणः श्रुतिस्मृत्यविरोधिन्या स्वीययाऽश्रुतप्रतिभया नूत्नानप्यर्थविशेषान् प्रकटयन्नाप्याययति विनेयगणम्। अत एतस्य व्याख्या क्वचिदुपनिषदां भाष्यायते। क्वचिदुनिषद्भाष्यस्य टीकायते। परं सर्वत्र टीकायाष्टिप्पणीत्वं न जहाति।

मध्वभाष्यस्य गुरुभावं प्रकाशयन्ती विलसति भावगम्भीरा विद्वज्जन-मानसरसायनभूता टीका पण्डितवामनपेजत्तायस्य। लिकुचवंशोद्भवस्य वामनपण्डितस्य टीकाचन्द्रमसश्चन्द्रिकेवार्थप्रकाशिनी बन्नञ्जे गोविन्दाचार्यस्य उपनिषच्चन्द्रिका।

## हृद्या शुद्धा च भाषा

अयं व्याख्याता स्वयमभिजातः कविः। न खलु कविवाणी क्वाप्यध्येतुर्मनः खेदयति। परं नवोढा कान्तेवाकर्षति। स्वस्याः श्रवणे पठने च स्वयं प्रेरयति।

अत्रत्या गोविन्दवाणी क्वचिट्टीकाकृन्मूर्धन्यस्य जयतीर्थस्य वाणीं स्मारयति। अन्यत्र पातञ्जलं भाष्यम्। अपरत्र च बाणभट्टस्य गद्यवैभवम्। सर्वत्र च लिकुचसूरेः पण्डिताचार्यस्य तत्त्वप्रदीपसरणिम्। पण्डिताचार्यवचोभिः आविष्टचेता अयं व्याख्याता स्वीयकार्यस्य संवादित्वेन क्रियासमभिहारतः तत्त्वप्रदीपादिवचांस्युल्लिखति।

न केवलं भाषा हृद्या, सरला च। आकाङ्क्षानुगुणं वाक्यानि सन्दृब्दानि। स्वयं प्रश्नान् पृच्छन्नुत्तरं ब्रूते। अनायासेन वाक्यार्थग्रहणे तदिदं निमित्तम्। प्रतिवाक्यमत्र किञ्चिद्वैशिष्ट्यमुपवर्णनीयम्। परन्तु प्रबन्धबन्धोऽनुल्लङ्घनीय इति किञ्चिदेव विवरीतुकामोऽयं जनः।

## निर्वचनमादर्श्य शब्दार्थकथनम्

'अकयप्रविसंभूमसखहा विष्णुवाचकाः' इति टीकोल्लेखः। अत्रोपदर्शितानामेकादशाक्षराणामप्यर्थविशेषानादर्शयति गोविन्दः। तत्रापि विशेषतो 'य'शब्दस्य। **कथं यो विष्णुः? ईः लक्ष्मीः। अः नारायणः। ईसहितः अः यः। लक्ष्मीनारायणः इति यावत्।** इति तद्वचनम्। यद्यपि 'याति सर्वत्रेति यः' इति सर्वगतत्वं सर्वज्ञत्वञ्च यशब्दार्थः इति टीकान्तराध्येतॄणां नातितिरोहितम्। ईकाराकारयोः यणि निष्पन्नोऽयं रमारमणवाचक इति गोविन्दाचार्यव्याख्यानं त्वपूर्वम्।

शौनकाथर्वादीनां व्यक्तिविशेषवाचकानां शतशः पदानां निर्वचनं प्रादर्शि। अथर्वशब्दनिर्वचने गोविन्दाचार्यः नैरुक्तं मार्गमनुसरति। **न थर्वतीत्यथर्वः, अथर्वा च। द्वयमपि साधु। यथा नचिकेत इति, नचिकेता इति च। 'थर्वतिश्चरति कर्मा। तत्प्रतिषेधः' (२२-२८)। इति निरुक्तम्।**

**चरतिः संशयार्था। तेन तत्वनिश्चयवानथर्वोच्यते। अकारवाच्ये तिष्ठन् रमते वनति भजति चेति वा। सर्वमधरयन् भजति वा। अं धरमाणो वननीयश्चेति वा। समित्पाणिरधरं वर्तयन् वा।**

पश्यत! पश्यत निर्वचनचातुरीं पण्डितवर्यगोविन्दस्य। आन्त-नान्तयोः अथर्वशब्दयोः 'अथर्वाय ज्येष्ठपुत्राय', 'अथर्वणे यत् प्रवदेत', इत्युपनिषदुल्लिखितयोः स्थिरीकरणाय नचिकेतपदं दृष्टान्तयति। 'नाचिकेतमुपाख्यानम्' इति श्रुत्याकारान्तोऽप्यस्ति नचिकेतशब्दः इति स्वयं काठकटीकाविवरणे निजगादायं व्याख्याता। साम्प्रतमेतद्दृष्टान्तस्तदपि द्रढयतीति स्थाने खल्वेष दृष्टान्तः।

स्वयमपि चतुर्धाथर्वणशब्दं निर्वक्ति। 'अकारवाच्य' इत्यादिना। तदिदं व्याख्यानसापेक्षम्। तिष्ठतीति थः। रमत इति रः। वनतीति वः। वनसंभक्ताविति धातोर्डः। ए = परमात्मनि तिष्ठन्, परमात्मनि निविष्टान्तश्चक्षुरिति यावत्। तथाभूतो रमते परमां मुदमाप्नोति। तमेव हृदि दृश्यं परमात्मानं वनति भजति इति अथरवः। क्विपि तु नान्तः शब्दः। तथा च ए= अकारनामके परमात्मनि तिष्ठतीत्यथः। ष्ठाधातोरच्यादि लोपेऽन्त्य ह्रस्वश्च। अथः सन् रमत इति अथरः। रमेर्डः। वनतीति वः। वनेर्डः। क्विपि तु वनिति नान्तं पदम्। अथरश्चासौ वश्च अथरवः अथरवा वा। अथरव एवाथर्वा इति व्युत्पत्तिः स्वयमध्येतृभिरूह्या। संक्षेपप्रियो गोविन्दसूरिः।

अक्षरसाम्यान्निर्ब्रूयात्, न चैव न निब्रूयात् इति यास्कवचनमनुसरन् समित्पाणिरधरं वर्तयन्निति निरुवाच। अधरं वर्तयन् अधर्वो भवेत्। 'तृतीयोऽतिशये' इत्यस्मादथर्वा भवति। थकारस्य धकार इव धकारस्य थकारोऽपि तृतीय एव।

### टीकास्वारस्याविष्करणम्

आथर्वणे षष्ठे मन्त्रे 'जङ्घन्यमानाः परियन्ति' इति श्रूयते। तत्र जङ्घन्यमानाः = अतिजघन्या भवन्तः इति वामनपण्डितस्य टीका।

उद्भिद्यतेऽत्र प्रश्नावली। को धातुः? कथं निष्पत्तिः ? कुत अतिजघन्यभवनं तदर्थः? इत्यादि। सयुक्तिकोऽयं प्रश्नसमुदायः। यतः – 'दन्द्रम्यमाणाः परियन्ति' इति काठके पाठः। अत्र तु जङ्घन्यमाना इति। उभयोः पदयोः समानार्थत्वं मन्वते शब्दशास्त्रज्ञाः। हनधातुः गत्यर्थः। 'नित्यं कौटिल्ये गतौ'(अष्टा-३.३.१३)इति कौटिल्ये गम्यमाने यङ्प्रत्ययः। कुटिलं घ्नन्ति= गच्छन्तीति जङ्घन्यन्ते। तस्माच्छानचि जङ्घन्यमाना इति रूपम्। कुटिलं गच्छन्त इति स्फुटोऽर्थः। 'अतिजघन्या भवन्तः' इति टीकाकृद्वचने नूनं निस्सरन्त्येव प्रश्नाः। परिहारभारो निहितश्चन्द्रिकाकृति।

भारमिममनायासेन निर्वहत्याचार्यगोविन्दः। तथाहि तल्लेखः- **जघन्योऽवरः। जघन्यवदाचरन्ति जघन्यन्ते स्वरूपानुगुण आचार इत्यात्मनेभाषः। अतिशयार्थे बिन्दुः। तदेतदाह अतिजघन्या इति।**

**वैयाकरणास्तु दन्द्रम्यमाणा जङ्घन्यमाना इत्येकार्थे पदे इति मन्यन्ते। तथा हि – कुटिलं क्रमन्ति चङ्क्रम्यन्ते, कुटिलं द्रमन्ति दन्द्रम्यन्ते। द्रम = गतौ। कुटिलं घ्नन्ति जङ्घन्यन्ते। हन=गतौ। 'नित्यं कौटिल्ये गतौ' इति हि पाणिनिः। गतिवचनात् धातोः कौटिल्ये गम्यमाने नित्यं यङ्प्रत्ययो भवति इति जयादित्यः। अनुमतोऽयमप्यर्थोऽस्माकम्। टीकाकृदुक्तः त्वपूर्वः श्रौतोऽर्थः वर्णव्यत्यासेन।**

**'जङ्घन्यमाना जरारोगाद्यनेकानर्थव्रातैर्हन्यमाना' इति परेषां भाष्यम्। समग्रवाक्यार्थेऽनन्वितमिदं विवरणम्। 'स्वयन्धीरा' इत्यादिना स्तब्धता ह्यत्र प्रकृता। न रुग्णता। अपिचेदमपूर्वं व्याकरणपाटवमतिशयेन हन्यते जङ्घन्यत इति। अतिशयेन हन्ति जङ्घन्यते इति तु व्याकरणज्ञा वदन्ति। स्वयं वैयाकरणस्य गजपद एव पदं निदधत् कथमेवं व्याख्यायात् ?**

अवशमञ्जलिं बन्धयति व्याख्यातुः कौशलम्। 'जङ्घन्यमाना' इत्यत्र जघन्य इति नामधातुः प्रदर्शितः। 'बिन्दुरतिशये' इत्यनेन व्युत्पत्तिरुपादर्शि। जयादित्यादिमते रूपगतिः प्रादर्शि। सोऽप्यर्थ अन्वमोदि। वर्णव्यत्ययमादृत्य

टीकाकृद्दर्शितोऽर्थः श्रौत इति तन्महत्ता न्यरूपि। परैर्गदितार्थस्यानन्वितता अशास्त्रीयता च सूपापादि। किमतोऽन्यद्व्याख्यात्रा वक्तव्यमवशिष्टम् आकाङ्क्षितम्? निराकाङ्क्षाबोधजनको वाक्यप्रबन्धः प्रमाणम्। प्रबन्धकः प्रामाणिकः।

## तत्वप्रदीपाद्याकरोल्लेखः

'यः सर्वज्ञः स सर्वविद्यस्य ज्ञानमयं तपः' इति मुण्डकप्रथमखण्डेऽन्तिमो मन्त्रभागः। नातिस्पष्ट इवार्थोऽस्य। सर्वज्ञ-सर्ववित्पदयोः पौनरुक्त्यमाभाति। तत्रेयं व्याख्या- **सर्वं जानातीति सर्वज्ञः। सर्वत्र विद्यते इति सर्ववित्** = **सर्वगतः, सर्वं विन्दत इत्याप्तकामो वा। यस्य ज्ञानमयं तपः= आलोचनम्। तप-आलोचने** ॥ इति ॥ स्वोक्तार्थे समाख्या प्रादर्शी -**'सर्वत्र विद्यते इति सर्ववित्। विद-सत्तायाम् इति धातोः। यस्य ज्ञानमयमालोचनम्। न संशयात्मकम् (१.२.२२) इति तत्वप्रदीपे**। इति॥ नायं मयोच्यमानोऽपूर्वोऽर्थः। पूर्वसूरिभिरुपदर्शित एव। मया सङ्गृहीत इति स्वोक्तार्थस्य प्रामाण्यबलमातनोति ॥

## ग्रन्थान्तरविरोधोद्धारः

'प्रपञ्चो यदि विद्येत' इत्यादि मन्त्रद्वयं माण्डूकोपनिषदि द्वितीयखण्डान्ते श्रूयते। व्याख्यातमिदं द्वयमपि ब्रह्मतर्कवचनानुसारं मध्वगुरुणा। तत्रायम् आचार्यगोविन्दः मन्त्रद्वयस्यास्य विष्णुतत्वविनिर्णयेऽनुव्याख्यायां च मध्वोक्तमर्थं सञ्जग्राह। अर्थभेदश्च प्रादर्शयत्। श्रुतिवचनानां त्र्यर्थतां द्योतयन् ब्रह्मतर्कवचनमेवार्थान्तरमाहेति समर्थ्य ततश्चायं मन्त्रद्वयस्यार्थ इति समगृह्णात्। तदिदमध्येतृजिज्ञासूनां मार्गदर्शि निरूपणम्।

## लोलृट्!!

सुकेशादयः षण्मुनयो भगवन्तं पिप्पलादमुपसन्नाः। तान् स रुषिरुवाच। भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं वत्स्यथ(त), यथाकामं प्रश्नान्

पृच्छत। यदि विज्ञास्यामः सर्वं वो वक्ष्यामः’ इति। अत्र वत्स्यत इति प्रयोगं कटाक्षीकरोत्याचार्यगोविन्दः। **संवत्सरं वत्स्यथ। अयं सार्वत्रिकः पाठः। मन्ये वत्स्यत इत्येव प्रायः प्राचीनपाठ इति। अत एव वैदिकपदलोलुपैराचार्यैरुक्तं महाभारततात्पर्यनिर्णये -वत्स्यन्तु वारणवते इति। ननु भोः कथं वत्स्यत? कोऽयं लकारः ? यदि लृट् तर्हि वत्स्यथ। यदि लोट् वसत। तत्कथं लोटो लृटश्च साङ्कर्यम्’? तर्हि करिष्यमाणं वासं कथं विधत्ते तत्रभवान् ? ननु कालत्रयेऽपि सञ्चरति लोट् वर्तमाने च भविष्यति च। सञ्चरतु नाम यत्र लोडेवोभयत्र प्रयुज्यते। महान्तस्तु भाविकालबोधनाय लृटा सह लोटं प्रयुञ्जते ‘वत्स्यत’ इति। सेयं लोलृट्। एतामपूर्वां वैदिकीं सरणिं जिज्ञापयिषन्नेवाचार्यः स्वयं हि प्रयुयोज ‘वत्स्यन्तु’ (म ता नि १९-१८) इति। भविष्यतु (२१-८१) इति। स्वप्स्यन्तु (२६-२५६) इति च। प्रायुङ्क्त भगवान् बादरायणोऽपि ‘अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्’ ( भ गी ३.१०) इति।**

पृच्छत इति लोटः साहचर्यात् वत्स्यत इत्यपि लोडेव विभाव्यते। वत्स्यत इति प्रयोगस्वारस्यममन्वानैर्वत्स्यथ इति पठ्यमानः पाठः आधुनिकानां पाठः। प्रसविष्यध्वम् इतिवत् ‘भविष्यति काले अत्रैव वासं कुर्वन्तु’ इत्यर्थे लृटो लोटश्च समावेशः वेदेषु समस्तीति निश्चित्य तादृशानामाचार्यप्रयोगाणां वैदिकत्वसमर्थनं प्राज्ञजनमनुरञ्जयति। चमत्करोति च।

**अपूर्वं व्याख्यानम्**

वेदवाक्यानाम् अर्थनिरूपणे न केवलं रूढिरादरणीयेति व्याख्यातृ-संप्रदायः। इमां परम्परामनुसरति गोविन्दव्याख्या। ‘विश्वस्य कर्ता भुवनस्य गोप्ता’ इत्युपनिषद्वाक्ये चतुर्मुखस्य विशेषणद्वयम्। भुवनस्य= लोकस्य कर्ता स्रष्टा, गोप्ता = रक्षकश्च इति प्रतनानां व्याख्या। **‘विश्वस्य =जगतः कर्ता, भुवनस्य= भवनशीलस्य जीवजातस्य गोप्ता= रक्षिता ज्ञानदानेनेति** चन्द्रिका। जीवजातस्य नित्यत्वात् तत्कर्तृत्वं नास्ति ब्रह्मणः, शरीरदानेन

पोषणं केवलम्' । तदुक्तं जगतः कर्ता । जीवजातस्य तु गोप्तैव । नतु कर्तेति । 'वेदान्तकृद् वेदविदेव चाहम्' इतिवत् । वेदान्तानां= ब्रह्मसूत्राणां कर्ता । वेदानां तु नित्यत्वात् वेत्तैव, नतु कर्तेति ।

स्पष्टार्थमपि भाष्यवाक्यं व्याख्यात्यन्तर्गूढदृष्टिरयं व्याख्याता ।

**वेदे रामायणे चैव पुराणे भारते तथा ।**
**आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ॥**

इत्याथर्वणभाष्ये हरिवंशवचनम् । नातिगूढोऽस्त्यत्रार्थः । बालोऽपि अवगच्छति श्लोकभावम् । अथापि सन्त्यत्रापि विद्वद्गोचराणि वेदान्त-रहस्यानि । अतो व्याख्याति गोविन्दाचार्यः । **'यथा वेदे तथा रामायणे च पुराणे च भारते च विष्णुरेव मुख्यतः गीयते । विशन्त्येनं सर्वाणि नामानि वाचकत्वेनेति हि विष्णुरुच्यते । नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति' इति श्रुतेः । न केवलमादावन्ते च मध्ये च प्रकरणशः । किन्तु सर्वत्र वाक्येषु पदेष्वक्षरेषु च । वेदे पुराणे इति समुदाय वचनम् । सर्वेषु वेदेषु पुराणेषु च । यद्यप्यनन्ता वेदाः । तथाप्येको वेदः । अर्थैक्यात् । यद्यप्यष्टादशपुराणानि अथाप्येकं पुराणम् । अर्थैक्यादेव । राजस-तामसत्वेनाभिमतान्यपि पुराणानि सात्विकानां सात्विकमेवार्थम् अवगमयन्ति । केवलं राजसतामसा एव राजसं तामसं वार्थं परिगृह्य पतन्ति । 'सर्वमेकं पुराभवत्' इति हि वक्ष्यति ।**

'वेदे पुराणे' इति व्यासवचसि एकवचनेनेदृशमर्थविशेषं स एव विज्ञातुं ज्ञापयितुं वार्हति योऽत्यन्तं भक्तिभरावनम्रः भगवति बादरायणे । 'चतुर्धावस्थितो देहे परमात्मा सनातनः' इति भाष्यं व्याख्यान् परमात्मा देहे चतुर्धावस्थितः इति व्याख्याय **स च सनादनः नादेन सहित इति सनादनः । श्रुतिगदित इत्यर्थः । सनादन एव सनातनः** इति व्याख्या चित्तमावर्जयति ।

'यथोर्णनाभिः' इत्युपनिषत् । 'जेड' इति **भाषायाम् । स्वस्माद् भिन्नमेव तन्तुजालं स्वोदरात् सृजते पुनः स्वान्तर्गृह्णते=गृह्णीते च तथा**

**परमाक्षरो भगवान् विश्वं सृजति संहरति च।** इति गोविन्दव्याख्या। स्वयं कन्नडदेशीयः 'जेड' इति 'भाषायामि'त्यूर्णनाभिपदं व्याख्यानुपकरोति।

षट्प्रश्नोपनिषदि प्रथमप्रश्ने फलश्रुतिः – तद् ये ह वै प्रजापतिव्रतं चरन्ति ते मिथुनमुत्पादयन्ते। तत्रत्या वामनटीका – ये जनाः प्राजापत्यं व्रतं चरन्ति तद् यथा ऋग्विधानोक्तभङ्ग्या शंनःपुरुषसूक्तयोः सम्पुटशेषप्राशनपूर्वकं विष्णुयोनिसूक्तेनोपस्थाय प्रजापतिं प्रार्थयन्ति ते तत्प्रसादात् सदपत्यम् उत्पादयन्ते इति।

अत्र शिष्यवत्सलो गोविन्दाचार्यः सम्पुटहोम-शेषप्राशनविधिं विवृण्वन् उपशतम् ऋग्विधानश्लोकान् प्रदर्शयति। विष्णुयोनिसूक्तं नेजमेषेत्यादि मन्त्रांश्च स्वयं व्याख्याति। सस्वरं मन्त्रं च लिखति। येन अपत्याकाङ्क्षी श्रद्धालुरर्थज्ञानपूर्वकं ऋग्विधानोक्तं कर्म कर्तुं प्रभवेत्॥

शिष्यसन्निधौ उपनिषदं पाठयति स्माचार्यगोविन्दः। अनितरसाधारणी चातुरी अस्योपनिषद्व्याख्याने। पूज्यो गुरुर्विद्यामान्यतीर्थः समादिदेश। गीर्वाण्यां लिपिबद्धां व्याख्यां वितनुहीति। आदेशं शिरसिकृत्यापूरयच्छिष्यो गोविन्दाचार्यः। पाठः खलु सन्निहितानां शिष्याणां केवलं प्रबोधकः। लेखः पुनः पाठकानपि सर्वान् बोधयन् प्रशिक्षयति। षण्णामुपनिषदां व्याख्या पूरिता। अवशिष्टानामपि व्याख्या नाकार्यनेन महात्मनेति क्वचिन्न तृप्यति चेतः। न खलु विद्यते जिज्ञासूनां तृप्तिः। अथाप्यनेन व्याख्यानेन उपनिषदध्ययनस्य मनोहरो मार्गः निष्कण्टकः प्रादर्शीति साभिमानं स्मरामो वयं प्रत्यहमाचार्यगोविन्दम्।

******

# ईशावास्योपनिषद्भावचन्द्रिका

डा. हेच्.के.सुरेशाचार्यः

विद्वदग्रेसरस्य गोविन्दाचार्यस्य तथा तद्विरचितस्य ग्रन्थस्यैकस्य अवलोकनम्।

भारतीयसंस्कृतवाङ्मयं रत्नाकर इवागाधं सत्प्रतिभासते प्राचीनादपि कालात्। अद्यतनेऽपि काले नवीनप्रतिभयोल्लसिताः शास्त्रकाव्यनिष्णाताः सन्त्यनेके। वाङ्मयप्रवाहो निरन्तरमप्रतिबद्धः सन् प्रवहति। अस्मिन् तान्त्रिके युगेऽपि प्राक्तनव्याख्याकारसदृशाः समुपासीतसरस्वतीकाः केचनोपलभ्यते। तेषु विद्वत्तल्लजेषु प्रकाशितासाधारणप्रतिभाशालिषु मध्ये बन्नञ्जेपदोपाह्वः गोविन्दाचार्योऽन्यतमो मालामध्यपतितमाणिक्य इव प्रथितयशाः भाति संस्कृतप्रपञ्चे।

गद्यपद्यचम्पूनाटकादिषु काव्यप्रकारेषु च विरचितानेकप्रबन्धो ब्रह्मसूत्र-भाष्यटीकाटिप्पण्यादिषु, गीता-रामायण-महाभारतादिषु, गहनेषूपनिष-दादिषु च निरन्तरं विहिताध्ययनाध्यापनप्रवचनादिकार्यभारः सर्वत्रापि प्रका शितनवनवीनप्रतिभाप्रभाविभवः, विविधशास्त्रीयविचार मथनेषु च मन्थायितः स्वरचितकाव्यकन्याविलासोल्लासप्रपञ्चनेनावर्जित रसिकजन-सन्दोहः बहुसहस्राधिकप्रवचनसरणीनिर्झरीषु अमृतजीवनासेचनेन प्रसन्नायितसुजनमनोमन्दिर आचार्यगोविन्दः यावज्जीवनं कृष्णसेवाव्याजेन शास्त्रसेवां विधाय शाश्वतीं कीर्तिं सम्पादयामास। तत्प्रतिनिधिभूताः तदीयग्रन्था अद्यापि मार्गदर्शकाः विलसन्ति।

बहवः ग्रन्थाश्च विरचितास्तेन, तदत्र तेषु याज्ञीयमन्त्रोपनिषद् ग्रन्थं तथोपनिषत् प्रास्ताविकं चालम्ब्य स्थूलदृष्ट्या केचन विषया निरूप्यन्ते।

यानि पुस्तकानि तत्प्रकाशितानि लोकदृग्गोचराणि सञ्जातानि तेषु सर्वत्रापि पुस्तकसौन्दर्यं, निर्दुष्टता प्रतिभाति। मुद्रणदोषाणां कणानामपि

छिद्रान्वेषणतत्परैः प्रत्याविष्करणं कष्टायते। सन्देहाजनकतया सुस्पष्टं स्फुटाक्षरैर्मुद्रितं सन्तोषं जनयति सज्जनानाम्।

नाधिकं भाषतेऽयं प्रास्तविके। कृतज्ञतायाः समर्पणप्रसङ्गेतु पुस्तक-प्रकाशने यावदुपकृतं शिष्यैः तत्स्मरणे सहायोल्लेखे च न लज्जायते तच्चित्तम्।

मुक्तकण्ठं प्रशंसति च परोपकारम्। प्रायस्तत एव ते गुरुमपहाय नान्यत्र गच्छन्ति। यावज्जीवमुपसरन्ति च।

किञ्चिदिवात्रोदाहतम् - उपनिषच्चन्द्रिकाग्रन्थे परिशिष्टभागे द्वितीयत्वेन ‘वैदिकछन्दोमीमांसा’ इति निबद्धा। एतस्या आरचने लेखकस्य साहाय्यमाचरितवान् कश्चन प्राज्ञः। ‘आत्मकूर आनन्दतीर्थाचार्यः’ इति अयमपि कवितल्लजः। स्वगुरुणा विरचितं युधिष्ठिरमीमांसकेन ‘वैदिक-छन्दोमीमांसा’ नामकं पुस्तकमानीय गोविन्दाचार्याणां कृते प्रपदौ। महान्तमुपकारमकार्षीदयमिति सहार्दं कृतज्ञतां समर्पयामास लेखकः -तदित्थम्-

‘युधिष्ठिरमीमांसकप्रणीतस्य पुस्तकस्य प्रेषणेनायमानन्दतीर्थाचार्यः बहूपचकार, न शक्यं ‘वयं कृतज्ञा’ इत्युपचारवचनमात्रेण स प्रतिकर्तुम्। चिरमृणिनो वयं वारं वारं तदुपकारं मानयन्तस्तस्य स्मराम’......इत्यादि कथितम्।

अयमंशः लेखकस्य प्रामाणिकतामादर्शयति, अनेन च सहृदयानां मनस्तृप्यति। कड्डीपदोपाह्वेन बदरीनारायणाचार्येन सश्रद्धं कृतोपकारं बहुधा मानयन् तदुक्तानि वचनान्युल्लिखन् सादरमाशीर्वादपुरस्सरं ह्यभिनन्दितवान्।

यद्यप्येतेंऽशा अल्पा एव, तथापि पुस्तकप्रकाशनकाले अल्पोऽप्युपकारो महदायते।

‘उपनिषच्चन्द्रिकेति’ नामधेयं प्रदत्तमस्ति पुस्तकस्यास्य।

उपनिषदां मध्वाचार्यविरचितं भाष्यं तथा वामनपण्डिताचार्येण

नारायणपण्डिताचार्यसूनुना विरचिता टीका, तथा बन्नञ्जे गोविन्दाचार्याणां टिप्पणी भाष्यचन्द्रिका च पुस्तकेऽस्मिन् प्रतिभाति। इदं प्रथमतया वामनपण्डिताचार्यस्य टीका मुद्रिता। एतत् सर्वं सुन्दरमेव वर्तते। तथापि पुस्तकस्य नामधेयं उपनिषच्चन्द्रिकेति भवितुमर्हति वेति मम संशीतिः। 'आनन्दतीर्थभगवत्पादकृतभाष्यभूषिता का भवति? उपनिषन्मात्रमेव, न भावचन्द्रिका भवति किल, विचिन्त्यम्।

अस्मिन् पुस्तके 'छन्दोमीमांसा' इति प्रबन्धः, तथा तारतम्यमीमांसेति च प्रबन्धो बहूपकरोति विदुषां विद्यार्थिनाञ्च। अनेन महोदयेन प्रकाशितानि सर्वाण्यपि पुस्तकानि निदर्शनस्थानालङ्कृतानीति कथनं नातिशयितवचनं भवति।

याज्ञीयमन्त्रोपनिषदमधिकृत्य तट्टिप्पणीमवलम्ब्य च किञ्चिदिव प्रस्तूयतेऽत्र-

ईशावास्योपनिषत् इति- ईशोपनिषदिति चोपनिषदः नामधेयं प्रथितमस्ति। भागवतपुराणादिषूक्तवचनमनुरुन्धानो लेखको तस्या एव याज्ञीयमन्त्रोपनिषदिति नामकरणं चकार। नवावतरणमात्रं न कल्पते दोषाय। आचार्यमध्वस्य भाष्यमिदं प्रथमतया वामनपण्डितार्यविरचितया टीकयालङ्कृतं - भावचन्द्रिकया च शोभितमस्ति। वामनपण्डितस्तु प्रायः मध्वगुरोमुखादेव श्रुतोपनिषदर्थ इति तट्टीकाया महत्वं वर्धते। उपनिषत् पाठविषये मध्वाचार्यस्याभिप्रायः, सहमतिः केति टीकावाक्यादवगम्यते। विशिष्य तादृशांशाः प्रदर्शिताश्च चन्द्रिकायां तथा प्रास्तविकवचने च। टीकायां च नूतनविषयाश्चाविष्कृताः। भावचन्द्रिकायां तु टीकायाः व्याख्यानं सुन्दरं दृश्यते, अपि चोपनिषदः तथा भाष्यस्य च गहनार्थः टिप्पण्यां विस्तृतरूपेण प्रपञ्चितः। मङ्गलाचरणस्य व्याख्याने तु छन्दोविचारः सुदीर्घं प्रस्तावितः। अनुष्टुबादिप्रभेदाश्च सम्यक् निरूपिताः। काण्वानां तथा माध्यन्दिनानां च उपनिषत्पाठा अत्रैवाविष्कृताः वर्तन्ते।

उपनिषन्नामभेदे च कारणं निजगाद गोविन्दार्यः। याज्ञीयशब्दोत्पत्तिरपि प्रदर्शिता। मन्त्राणामर्थस्य च कथने सम्प्रदायमनुरुन्ध्य चिरकालविहिताध्य यनाध्यापनादिनाऽन्तःस्फुटितान् विशेषार्थांश्च बभाणात्र। सुकृतिनो वयं एतावद्विशदव्याख्यानलाभेन, ऋणिनश्चाचार्यगोविन्दमहोदयस्य। 'इशावास्यमिदं सर्वमिति मन्त्रस्य भाष्यटीकानुरोधेन सम्यग्व्याख्यायानन्तरञ्च चन्द्रिकायां विशेषार्थाश्च निरूपिताः। जयतीर्थीयटीकामादृत्य स्वीकृत्य क्वचिद् अर्थभेदे कारणञ्चाह सुसम्बद्धम्।

शाङ्करभाष्यवचनान्युल्लिखन् तत्रत्यास्वारस्यं सुष्ठु प्रदर्शयामास। व्याकरणविशेषाश्च तत्राविष्कृताः विदुषां विद्यार्थिनाञ्च बहूपयोगाय कल्पन्ते। अन्ते मन्त्रार्थश्च सुग्रहाय निबोधितः।

'मा गृधः कस्यस्विद्धनं' इत्यस्य नूतनार्थाः प्रकटिता ये च तेऽपि मध्वार्यसम्मताः सन्ति। तदुक्तमत्र भगवता यद्दत्तं तत्तस्य प्रसाद इति मत्वा भुङ्क्ष्व, तेन यन्न ते दत्तं यदन्यस्मै वा दत्तं तदन्यस्य कस्यचिद्धनमिति मत्वा मागृधः ...... सर्वं धनं भगवदधीनमिति। इत्यादि प्रपञ्चितम्। ममात्यन्तः स्फुरितोऽत्यमर्थः निबध्नामि। मागृधः- अन्यं प्रति गत्वा मा प्रयाचेत्। कुतः? कस्य धनं स्विद् इत्युत्तरम्। अकयप्रविसंभूमसरवहा विष्णुवाचका इत्युक्तत्वात् एकाक्षरकोषे कस्य = विष्णोरित्यर्थः। एवञ्च जगति विद्यमानं सर्वं धनं विष्णुसम्बद्धम्। एको नैकः सवः कः किमिति विष्णुसहस्रनामस्तोत्रेऽपि 'कः' इति विष्णुनामत्वमुक्तम्।

तथाच अन्यं प्रति गत्वा मा याचेत्। यदि धनं देवदत्तीयं भवति तर्हि तत्रैव प्रयाचेत्, न यज्ञदत्तस्य निकटे, तद्वदिहापि धनं सर्वं कस्यचिद् किल- भगवत्सम्बद्धं किल - तथाच तत्रैव प्रयाचेत् मा गृध इतरत्रेत्यर्थः।

द्वितीयमन्त्रे - 'कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः' इत्यत्र चन्द्रिकाव्याख्यानेऽयमंशः स्फुटं निरूपितः। 'शतं समाः' शतं वर्षाणीति नार्थः। अत्र शतशब्दः पूर्णत्ववचनः। एतदत्यन्तमावश्यकं लेखनियमस्ति।

अन्यथा मन्त्रमिमं स्वायम्भुवमनुः स्वात्मानमाह इति लिखितम्, अन्यान् प्रत्यपि उक्तं स्यात्, तथापि - कृतत्रेताद्वापरादिषु किं मानवानामायुःप्रमाणं किं शतं वर्षाण्येव? कथमिदं सङ्गच्छते, अतः शतशब्दोऽत्र पूर्णत्ववचन इत्येव वक्तव्यम्। नामं सङ्ख्यावचनः यः शताधिकाः समा यदि जीवति सोऽपि शतं समा जीवतीति वक्तुं पार्यते। यावज्जीवति पुरुषः तावतीः समाः कर्माणि कुवन्नेव जीवेदित्यर्थः समीचीनो भवति। व्याख्यातासु सर्वास्वपि उपनिषत्सु विशेषार्थानामुल्लेखनं दृश्यते - तत्वजिज्ञासुभिरवश्यं ग्रन्थाश्चेमे पठनीयाः तत्र तत्र तत्त्वप्रदीपकाकारस्य, जयतीर्थमुनेश्चभिप्रायविशेषाः सुष्ठूपपादिताः चन्द्रिकायाम्।

विद्वद्भिः विद्यार्थिभिश्च बन्नञ्जे गोविन्दाचार्यमहाभागस्य पुस्तकानि कदाचिदवलोकितानि चेत् लेखकस्य अध्ययनवैशाल्यम् प्रतिभागाढता च विज्ञाता भवति। लेखकस्य प्रयत्नः साफल्यम् अवाप्नोति। उपनिषदन्ते स्वीयपरिचयं, गुरोश्च प्रशंसा श्लोकद्वारा प्रकाशिता।

****

# श्रीविष्णुसहस्रनामस्तोत्रस्य नामचन्द्रिकाव्याख्या

डा.स्वामी जपसिद्धानन्दः

बन्नञ्जे इत्युपाह्वयानां गोविन्दाचार्याणाम् अनेकाः कृतयः। वेदे वेदाङ्गेषु वेदान्तेषु न्यायव्याकरणादिशास्त्रेषु च व्युत्पन्नाः ते सुरसरस्वतीं सुदीर्घकालं समाराधयामासुः। व्यासङ्गे व्यापृतचित्तैः कृताः कृतयः अध्येतॄणाम् अध्यापकानां च उपकृतये भवन्ति। श्रीविष्णुसहस्रनामस्तोत्रस्य नामचन्द्रिका व्याख्यानं तत्र अन्यतमत्। अस्य व्याख्यानस्य संक्षेपतः सम्मर्शः अत्र विधित्सितः।

श्रीमन्महाभारते शतसाहस्र्यां संहितायाम् आनुशासनिके पर्वणि विद्यते भीष्म-युधिष्ठिर-संवादः। तत्र महात्मना भीष्मेण साक्षात् भगवतः वासुदेवस्य समक्षं श्रीविष्णोः दिव्यं नामसहस्रकं भक्तिभावम् उपारूढेण उज्जगे। विलसति अविरला सहस्रनामपरम्परा पुराणादिषु। तथापि इदमेव स्तोत्रं मन्त्रत्वेन आद्रियते मनीषिभिः। चित्तशुद्धिद्वारा परमपुरुषार्थसाधनम् इदं स्तोत्रम् इहलोके अपि योगक्षेमाय कल्पते। वैद्यकीयपारम्परासु ज्वरादिनिवारणे प्रयुज्यते। उत्पातेषु अस्य पाठः शान्तिकरः इत्युच्यते। एवं च आध्यात्मिकस्य आधिभौतिकस्य आधिदैविकस्य च तापस्य उपशामकत्वेन प्रेक्षावतां नितराम् उपास्यमिदम् इत्यत्र नास्ति संशीतिः।

श्रीमच्छङ्करभगवत्पादप्रभृतयः जगद्गुरवः इदं श्रीविष्णुसहस्रनामस्तोत्रम् आदरेण व्याचख्युः। पथिप्रदर्शकान् तान् आचार्यान् अनुगम्य उपरिष्टाद् आगताः विद्वांसः तन्माहात्म्यम् उपागम्य तद्व्याख्याने आत्मानं व्यापारयामासुः। तत्रेयं विद्वत्तल्लजानां बन्नञ्जे-गोविन्दाचार्याणाम् अर्वाचीना नामचन्द्रिका व्याख्या। प्रत्येकं व्याचिख्यासुः स्वं स्वं दर्शनम् आस्थाय व्याकुरुते। श्रीशङ्करभगवत्पादानां विष्णुसहस्रनामस्तोत्रभाष्यम् अद्वैत-सिद्धान्तानुशायि। पराशरभट्टस्य श्रीभगवद्गुणदर्पणं विशिष्टाद्वैतानुसारि।

दिव्यस्तोत्रे अस्मिन् आदौ विशत्युत्तरशतं नामानि (‘विश्वम्’ इत्यतः ‘अमृतः’ इत्यन्तम्) चतुर्व्यूहात्मनः भगवतः परवासुदेवपराणि, ततः पञ्चविंशतिः (‘शाश्वतः स्थाणुः’ इत्यतः ‘भोक्ता’ इत्यन्तम्) सङ्कर्षण-प्रद्युम्नानिरुद्धव्यूहपराणि इति अभिप्रैति पराशरभट्टः। वरारोहः महातपाः इत्यनयोः नाम्नोः मध्ये भगवद्व्यूहस्य विस्तृतं निरूपणम् उपलभ्यते तद्व्याख्याने[1]। सत्यसन्धतीर्थस्य द्वैतमतानुगामि व्याख्या प्रसिद्धा। नामचन्द्रिका अपि द्वैतवेदान्तानुयायिनी। द्वैतदर्शनपरत्वे अपि अस्यां सर्वसाधारण्येन स्वीकरणीयानि विद्यन्ते भूयांसि तत्त्वानि इति इयान् विशेषः।

भूमिकाम् आरभ्य आन्तम् अनुभूयते वैशिष्ट्यम् नामचन्द्रिका-व्याख्यायाः। उपक्रमे उपस्पृष्टाः विषयाः प्रत्याययन्ति प्रतिभां प्रणेतुः। ‘शब्दतः अर्थतश्च प्रमृष्टा भूमिका’ इति स्वयं प्रतिज्ञातं ग्रन्थकृता। एतर्हि निदर्शनमुद्रया बिन्दुशः उदीर्यन्ते अधस्ताद् कतिपयान्येव विशिष्टस्थलानि-

1.विष्णुसहस्रनामस्तोत्रस्य महत्त्वे चतुरः प्रधानहेतून् श्रीमध्वाचार्योक्तान् उल्लिख्य प्रसादयति मनः व्याख्याता आदावेव।

2.विश्वशब्देन उपक्रमस्य उपपादनमपि उपोद्बलयति प्रागल्भ्यं व्याख्यातुः। उपपत्तौ उपन्यस्तानि चत्वारि कारणानि सारतः यथा -

- विष्णोः सर्वपदवाच्यत्वात् सर्वार्थकेन विश्वशब्देन समारम्भः समञ्जसः।
- विश्व-विष्णुशब्दौ विशधातोः निष्पद्येते - विशति इति विश्वम्, विशति इति विष्णुः इति। निर्वचनैक्यात् विष्णुपदव्याख्यानभूतेन विश्वशब्देन उपक्रमः उपपद्यते।
- उपासारहस्यं तृतीयो हेतुः। जाग्रदवस्थाप्रेरकः देवः अकारवाच्यः। तस्य विश्वम् इति अन्यतमं नाम। विघ्ननिवारकस्य विनायकस्य

---
1. पृ.११७

बिम्बरूपः सः। अतः विश्वनाम्नः प्रथमोपादाने निरन्तरायत्वं निरन्तरस्मरणम् इति फलद्वयं सिद्ध्यति।

- वाक्शुद्धिकरः वाग्दोषहरश्च परशुरामः स्तूयते विश्वपदेन। 'विश्वरूपं हरिणं जातवेदसम्' इति श्रुतेः। अभीष्टम् अतः तद्ग्रहणम् आदौ इति तुरीयं कारणम्।

3.विश्वम् इति क्लीबलिङ्गप्रयोगस्य औचित्ये प्रवर्तितः विचारश्च अवधेयः। व्याख्यान्तरेषु 'तदशिष्यं संज्ञाप्रमाणत्वात्' इत्यादिना समाहितम्, अत्र तु स्त्रीपुन्दोषराहित्यात् भगवतः नपुंसकलिङ्गशब्देन निर्देशः युक्तः इत्युक्तम्। अनुपदमेव पुंस्त्वविशिष्टस्य विष्णुशब्दस्य निवेशोऽपि श्रुत्या समर्थितः। अन्यत्रापि नाम्नां लिङ्गव्यत्ययः 'रूपं रूपं प्रतिरूपो बभूव' इति कठश्रुत्या समुचितं समीक्षितः।

नामानि शतकेषु विभज्य व्याख्यातानि। यथावसरम् अवतारितानि शास्त्रान्तराणि व्याख्यायाः उपादेयत्वम् उपोद्बलयन्ति। अन्यत्र विरललभ्यानि शास्त्रवचांसि अत्र लब्धावसाराणि इत्येतदपि अन्यतमं वैशिष्ट्यम्।

4.विश्वम् इति प्रथमस्य नाम्नः विंशत्यधिकं शतम् अर्थाः प्रत्यपादिषत। नान्यत्र इयान् व्याख्याविस्तरः दृश्यते।

5.असकृत् पठितस्य एकस्यैव नाम्नः अर्थः भिद्यते। भिद्यन्ते च तदर्थप्रकाशे दोषज्ञाः इत्यतः विपुलं सम्पद्यते व्याख्यानसाहित्यम्। तथाहि - पुरुषः, धाता, प्रणवः, दक्षः, सुखदः, यज्ञः, पुण्यः, चक्री इत्येत्प्रभृतीनि नामानि द्विः[1] , विष्णुः, माधवः, अजः, अच्युतः, वसुः, सत्यः, वीरहा,

---

1. पुरुषः - १४, ४०७। धाता - ४३, ९५१। प्रणवः - ४१०,९५७। दक्षः - ४२४, ९१८। सुखदः - ४३१, ८९०। यज्ञः - ४४७, ९७१। पुण्यः - ६९१, ९२६। चक्री - ९०९, ९९५। इमाः नाम्नां संख्याः नामचन्द्रिकायां दर्शिताः संख्याः इति अवधेयम्। शांकरभाष्ये, भगवद्गुणदर्पणे च विद्यते नाम्नां संख्याने भेदः।

वासुदेवः, वीरः इतीमानि त्रिः[1] , श्रीमान्, प्राणदः इति चतुः [2] इत्येवं नामानि आवृत्त्या पठितानि प्रसङ्गेण वाच्यभेदानुरोधेन च। तथाहि अजः इत्यत्र व्याख्या-विशेषः अधः कोष्ठके अदर्शि उदाहरणविधया।

**त्रिः पठितस्य अजः इत्यस्य व्याख्याविशेषाः**

| श्लोकः तत्संख्या च | शांकरभाष्यम् | भगवद्गुणदर्पणम् | नामचन्द्रिका |
|---|---|---|---|
| अजः सर्वेश्वरः. ॥ ९५-तमं नाम | न जायते इति अजः। | तेषां स्वप्राप्तिपरि पन्थि सर्वं स्वयमेव क्षिपति इति अजः। अज गति क्षेपणयोः। अच्। | न कदापि जायते। अथापि अः अप्राकृतः सन् जायते। अजे च ब्रह्मणि नित्य-सन्निहितः॥ |
| अमृत्युः सर्वदृक्. । अजो दुर्मर्षणः. ॥ २०४-तमं नाम | अजति गच्छति क्षिपति इति वा अजः | स्तंभसंभवत्वेन इतरवत् न जायते इति अजः। अन्येष्वपि दृश्यते इति डः। न जायते जनित्र्यां यत् अजः तस्मात् अनेक-जित् इति। | अजं ब्रह्माणम् अजति गच्छति इति अजः। अजति सर्वत्र गच्छति सर्वम् अवगच्छति इति अजः। अजति क्षिपति दुष्टान् तमसि इति अजः। अज गति-क्षेपणयोः। मुक्ता न पुनः जायन्ते येन सः अजः। अजेषु बस्तेषु स्थितश्च अयम्। अकारवाच्यः सर्वजनकश्च॥ |
| अजो महार्हः... ॥ ५२३-तमं नाम | आत् विष्णोः अजायत इति कामः अजः। | अस्मिन् तत्त्वावसाने प्रणवप्रकृतिभूतअकार वाच्यतया स्मर्तव्यत्वात् अजः। अकारवाच्यतया जातः इति। | आत् स्वात्मतः एव स्वयं जायते। आनन्दत्वाद् इत्युक्तः इति वचनाद् आनन्दी सन् एव जायते। आनन्दित्वाद् एव जनयति विश्वम्। आनन्दमयः जनकः। न विद्यते अतः अन्यः जनयिता। अत एव चायम् अधिकः जनकः। अजान्तर्गतः तन्नामा॥ |

1. विष्णुः- २, २५९, ६६१। माधवः- ७२,१६७, ७३९। अजः- ९५, २०४, ५२१। अच्युतः-१००,३१९,५५६।वसुः-१०४,२७१,७००। सत्यः-१०६, २१२, ८७३। वीरहा-१६६,७४५,९२९। वासुदेवः-३३३,६९९,७१३। वीरः-४०२, ६४७, ६६२।
2. श्रीमान् - २२, १७८, २२१, ६१७। प्राणदः - ६५, ३२२, ४०९, ९५६।

विद्यते अस्य व्याख्यातुः प्रातिस्विकं महत्वम् अनल्पम् । अत्र व्याख्यायां प्रायेण स्वकीयं स्वतन्त्रं च चिन्तनं पदं कुरुते । पूर्वे विद्वांसः पारम्पर्यनेमिवृत्तयः परिलक्ष्यन्ते प्रायेण । अयं तु नामचन्द्रिकाकृद् आविष्कृत्य आत्मीयं पन्थानम् अर्थान् व्याचष्टे। तथाहि सन्धाता (२०१) इत्यत्र। कर्मफलैः पुरुषान् सन्धत्त इति सन्धाता इति शाङ्करी व्याख्या। रिपु-द्विप-निष्पेष-भीषणः अपि संधाता प्रणेयानां प्रह्लादप्रभृतीनां संश्लेषयिता इति पराशरभट्टकृते भगवद्गुणदर्पणे । गोविन्दाचार्येण तु इत्थम् अर्थः अकारि -

यं कमपि, यत् किमपि, यत्रकुत्रगतम् अपि परस्परं सन्धत्ते इति सन्धाता । कमपि पतित्वेन, कामपि पत्नीत्वेन, पितृत्वेन, मातृत्वेन, पुत्रत्वेन, सखित्वा-दिना च । कमपि धनेन, कमपि दारिद्र्येण, कमपि विद्यया, कमप्यविद्यया, कामपि रूपेण, कमपि सुखेन, कमपि दुःखेन, कमपि विनयेन, कमप्यहङ्कारेण, वर्णं वर्णेन, पदं पदेन, वाक्यं वाक्येन, वाच्यम् अर्थेन, अर्थं वाचा, भुवं दिवा, सर्वं सर्वेण सन्धत्ते । एवं सन्दधत् सम्यग् लोकान् धत्ते ।

एवमेव, अक्षरः (४८३), गभस्तिनेमिः (४८८), चतुर्व्यूहः (७७०), चाणूरान्ध्रनिषूदनः (८२९) एतत्प्रभृतिषु च स्वोपज्ञं चिन्तनम् उपातिष्ठिपत् । अर्थविस्तारे अपि विहितो यत्नः अविचिन्तितपूर्वान् अर्थान् व्याकुर्वन् स्फुटं प्रत्याययति वैशिष्ट्यम् । इमे अर्वाचीनाः व्याख्याप्रकाराः यद्यपि इतोऽप्यधिकं विचारम् आकाङ्क्षन्ति, तथाऽपि विद्वत्प्रयासोऽयं प्रशंसनीयः इत्येव प्रतीमः । तथाहि आशशंसिरे श्रीमद्विवेकानन्दस्वामिचरणाः वेदानां साम्प्रतिकानि भाष्याणि विधेयानि इति । स्तोत्रस्य शास्त्रीयव्याख्यानेन तदाशंसा कियता प्रमाणेन साफल्यम् अगात् इति प्रतीयते ।

6.निरुक्तस्य शैली अत्र अनुसृता इत्येतदपि अनितरसाधारणं वैशिष्ट्यम् अस्याः व्याख्यायाः । नान्यत्र स्तोत्राणाम् अर्थानुसन्धाने नैरुक्तानां पन्थाः आश्रितः पर्यलक्षि । 'वर्णसाम्येन निर्ब्रूयादिति प्राचां मताश्रया । निरुक्ति-प्रक्रिया सेयं नैव व्याकरणाश्रया ॥' इति स्वयम् ऊरीचकार वैशिष्ट्यं

व्याख्याता। अध्येतृसौकर्यार्थं कानिचन स्थालानि अत्रोदाहृतानि। तथा हि - अप्रमेयः (३२६), शरभः (३५७), पेशलः (९१७), दक्षिणः (९१९) इत्येतत्प्रभृतिषु नामसु निरुक्तशैली सुस्फुटा।

7.नाम्नां व्याख्यागतविशेषे उदाहरणद्वयम् अधः कोष्ठके न्यरूपि।

8.नाम्नां व्याख्याविशेषगतस्य स्वारस्य उदाहरणद्वयम्

| क्रम.सं | शब्दः श्लोकसंख्या च | शांकरभाष्यम् | भगवद्गुणदर्पणम् | नामचन्द्रिका |
|---|---|---|---|---|
| 1 | रुद्रः। रुद्रो बहुशिरा ...॥ ११४-तमं नाम | 1.संहारकाले प्रजाः संहरन् रोदयति इति रुद्रः।<br>2.रुदं राति ददाति इति वा।<br>3.रुः दुःखं दुःख-कारणं वा, द्रावयति इति वा रुद्रः।<br>4.रोदनात् द्रावणाद् वापि रुद्रः इत्युच्यते। | एवं विधरूपविविध -चेष्टितद्रुतहृदयान् सानन्दबाष्पान् कुर्वन् रोदयति इति रुद्रः।'रोदेर्णि लुक् च' इति (उणादि) रक्प्रत्यये णिलोपश्च। | 1.रुक् दुःखं संसारो वा। रुजं द्रावयति इति रुद्रः।<br>2.असतः रोदयति इति रुद्रः।<br>3.रुद्रे गतश्च रुद्रः।<br>4.वेदरुते रतश्च। |
| 2 | कपिलः। ८९९-तमं नाम। 'सनात्सनातन तमः कपिलः... ॥ | बडवानलस्य कपिलः वर्णः इति तद्रूपी कपिलः। | किंरूपः? मध्यस्थ-नीलतोयदविद्युल्लेखो ज्ज्वलवर्णः कपिलः | कपिः सुखपानात्, सर्ये स्थित्वा जलपानाद् वा, लाति च भक्तानिति कपिलः। लाति आदत्ते सर्वं जगत् प्रळयकाले स्वोदर इति वा। कं पिबतीति कपयो मुक्ताः। तान् लाति वा। कपिरिति ब्रह्मवायू। कपिरिति हनुमान्। तौ तं वा लाति। आनन्दरूपः पाता लाता च। रामावतारे कपीन् लातीति वा॥ |

पूर्वोक्तान् बिन्दून् अतिरिच्य अन्यथाऽपि उपकुरुते इयं व्याख्या। तद्यथा अनेकेषां धातूनां पाठभेदस्य उपलब्धिः। तथाहि दक्ष धातुः भगवत्पादभाष्ये गतिहिंसार्थकः आम्नातः, भगवद्गुणदर्पणे तु वृद्ध्यर्थकत्वेन। प्रसिद्धधातु-पाठेष्वपि 'दक्ष वृद्धौ शीघ्रार्थे च' इति 'दक्ष गतिहिंसनयोः' इति वा अर्थनिर्देशः सुलभः। नामचन्द्रिकायां तु अत्र 'दक्ष गतिशासनयोः' इत्येकः, 'दक्ष वृद्धौ शीघ्रार्थे च' इत्यपरश्च पठ्यते। अधिकं जिज्ञासूनाम् अनुसन्धानाय कल्पन्ते एतादृशाः सन्दर्भाः।

एवं भूयांसि विद्यन्ते प्रयोजनानि अस्य नवीनव्याख्यानस्य अध्ययने। शास्त्राध्येतृभिः विष्णुध्यानपरैः भगवद्भक्तैश्च नूनम् उपादेया पाठ्या च इयं व्याख्या। भगवतः श्रीमद्विष्णोः कृपया नामचन्द्रिका चन्द्रिकासंनिभा संनिभृता सुमनोभिः विजयतात् सन्निवासेषु इति सम्प्रार्थ्य विरम्यते विस्तराद् इति शम्।

श्रीश्रीरामकृष्णस्मृतयः

*****

# सर्वमूलग्रन्थसम्पादनम्

डा. ए.वि. नागसम्पिगे

विद्वद्धौरेयैः बन्नञ्जेपदोपाह्वैः गोविन्दाचार्यैः श्रीमदानन्दतीर्थभगवत्पादाचार्योपदिष्टाः ग्रन्थाः सम्यक् शोधिताः। यद्यपि भगवत्पादाचार्यैः न किमपि लिखितम्। तच्छिष्यप्रवरैः पलिमारुमठाधीशैः श्रीमद्धृषीकेशतीर्थ- श्रीमच्चरणैः भगवत्पादमुखनिःसृतः उपदेशामृतः ग्रथितः (लिपिबद्धीकृतः) तथैव श्रीमद्भिः सत्यतीर्थश्रीमच्चरणैः ब्रह्मसूत्रभाष्यं लिखितमित्यपि मध्वविजये श्रूयते। पदवाक्यप्रमाणपारावारपारीणानां श्रीमतां श्रीमज्जयतीर्थमुनीन्द्राणां काल एव सर्वमूलग्रन्थाः नैकैः विलिखिता उपलभ्यमाना आसन्निति तदीयपाठभेद-सूचनपरवाक्यावलोकनेन विज्ञायते। हृषीकेशतीर्थश्रीमच्चरणैः तुळुलिपि-निबद्धा इयं मातृका अद्यापि पलिमारुमठे विलसति।

अष्टादशशतके श्रीमदुत्तरादिमठाधीशाः श्रीमत्सत्यधर्मतीर्थश्रीमच्चरणाः श्रीकृष्णदर्शनार्थं रजतपीठपुरमागत्य श्रीकृष्णदर्शनं विधाय मातृकामिमाम् अवलोकयामासुरिति तदीयग्रन्थादेवावगम्यते। इयञ्च मातृका श्रीमदानन्द-तीर्थभगवत्पादाचार्यविनेयप्रवरैर्विलिखिता कालबलेन गलिता च। अधुना भागवततात्पर्यनिर्णयात्मको भागः हृषीकेशतीर्थीयमूलकोशे नोपलभ्यते; तथाऽपि पेजावरमठगतेन प्राचीनकोशेन, पलिमारुमठीय-रघुरत्नतीर्थयति-लिखितकोशान्तरेण च पाठनिर्णयः गोविन्दाचार्यैः कृतः। तथैव आचारप्रस्थाने सदाचारस्मृतिमपहाय अपरे ग्रन्थाः अधुना हृषीकेशतीर्थीयकोशे नोपलभ्यन्ते। पलिमारुमठाधीशैः रघुवर्यतीर्थैः लिखितकोशानुसारेण पाठनिर्णयः गोविन्दाचार्यैर्व्यधायि।

सर्वमूलसंशोधनाप्रसङ्गे एतावत्कालपर्यन्तं विदुषामज्ञातौ भगवत्पादा-चार्यप्रणीतौ ग्रन्थप्रवरौ न्यासपद्धति-तिथिनिर्णयनामानौ इदंप्रथमतया संशोध्यात्र निवेशितौ इति महतः प्रमोदस्य विषयः। गोविन्दाचार्यास्तु भगवत्पादाचार्येषु विद्यमानया श्रद्धया इमां मातृकामवलोक्य विदुषामध्ययनार्थं

अयं ग्रन्थः प्रदेय इति अहोरात्रं तदवलोकनेन आदौ लिपिबद्धमकार्षुः। अनन्तरं श्रीपद्मनाभतीर्थभट्टारक-नरहरितीर्थ-त्रिविक्रमपण्डिताचार्य-नारायणपण्डिताचार्य-वामनपण्डिताचार्यप्रभृतिभिः भगवत्पादाचार्योपसदैः विनिर्मितां प्राचीनां व्याख्यां समवलोक्य पाठशोधने महान्तं यत्नमकार्षुः।

नैतदतिरोहितं विदुषां यत् अष्टशतमानात् प्राग् विलिखिता मातृका तत्रतत्र अस्पष्टा-त्रुटिता-क्रिमिदष्टा च भवतीति। मातृकाया अध्ययनमेव यदा दुष्करं; किमु शोधनम्!। एतादृशप्रसङ्गे श्रीगोविन्दाचार्या असाधारणेन वेद-वेदाङ्ग-व्याकरण-वेदान्तशास्त्रवैदुष्येण नितान्तया श्रद्धया च १९६५-१९८० पर्यन्तं प्रायः पञ्चदशवत्सरपर्यन्तं एकाकी सन् शोधकर्मणि व्यापृता आसन् इति विषय-विषजलाशयमग्नैः सम्भावयितुमपि न शक्यते।

मया तु तैः शोधिताः सर्वमूलग्रन्थाः न सामस्त्येन पठिताः। तत्रतत्र ईषदेव अपठमहम्। तत्रानुभूताः गुणाः दोषाश्च यथामति विदुषां पुरत उपस्थाप्यन्ते। तत्र पञ्चमे सम्पुटे विष्णुतत्त्वविनिर्णये बन्नञ्जेगोविन्दाचार्यैः मातृकाशोधनसन्दर्भे पद्मनाभतीर्थभट्टारकविरचिता प्राचीनटीका तथैव नारायणपण्डितैर्ग्रथिता तत्त्वमञ्जर्यभिधा प्राचीनटीकाऽपि समवलोकिता। विदुषां विद्यावैशद्याय तत्रतत्र उल्लिखिता।

यथा- 'सदागमैकविज्ञेयम्' इत्यत्र तदीयैरेव वाक्यैः नारायण-पण्डिताचार्याणाम् आशयः सङ्गृहितः- 'सदागमा निर्दोषागमाः। दोषाः त्वज्ञानमूलत्वादयः। सदागमैरेकविज्ञेयं प्रधानविज्ञेयम्। यद्यपि सदागमैः कर्मदेवतादिकमपि विज्ञेयम्; तथाऽपि तत्र महातात्पर्याभावान्नारायण एव मुख्यज्ञेय इत्यर्थः। अथवा सर्वचेतनाचेतनेभ्य एकत्वेन मुख्यत्वेन ज्ञेयम्। एकशब्दः प्रधानेऽपि प्रसिद्धः- 'एकः प्रधान उद्दिष्टः' इति। अथवा, सदागमेनैकेनैव विज्ञेयम्; नतु दुरागमेन। नापि सदागमाननुगृहीतप्रत्यक्षानुमानाभ्याम्। तयोराभासत्वनियमात्' इति।

उत्तरत्र 'साम्पराये इति' श्रुतिगतस्य पदस्य 'सम्पराये' इत्यपि प्राचीन-

कोशपाठः विद्यमान उल्लिखितः, व्याख्यानावसरे त्रिविक्रमपण्डिताचार्याणां 'सम्यक् परस्मिन् नयनम्' इति व्याख्यानमुल्लिखितम्।

तथैवोत्तरत्र 'अपौरुषेयवाक्याङ्गीकारे न किञ्चित् कल्प्यम्' इति भगवत्पादीयवचनम्। तत्र पादटिप्पण्यां प्राचीनटीकाकाराणां पद्मनाभ-भट्टारकाणां व्याख्या समुल्लिखिता(पृ-१२)। एवमान्तं प्राचीनटीकायाः उल्लेखः कृतः विदुषां तोषदायको भवति।

प्राक्तनग्रन्थेषु मूलपाठः अनवधानेन अन्यथैव मुद्रितः। परन्तु स पाठः नातीव समीचीनः। अत्र मुद्रितानि भगवत्पादाचार्यवचनानि- 'प्रत्यक्षा-नुमानसिद्धत्वे च भेदस्य तद्विरोधादेव अप्रामाण्यमभेदागमस्य। तेनाभेदागमस्य प्रामाण्याभावे नानुवादकत्वं भेदवाक्यानाम्। नहि बलवतोऽनुवादकत्वम्। दार्ढ्यहेतुत्वात्'। (मा-रा-सं, सभा- उडुपि-पृ-३४१)

अत्र गोविन्दाचार्याः 'तेनाभेदागमस्य प्रामाण्याभावे नानुवादकत्वमिति मुद्रितः पाठः प्रामादिक एव तेनाभेदागमस्याप्रामाण्याभावे इति हि पठनीयम्'(पृ-१६) इति स्वाशयमाविष्कुवन्ति। अयमत्र प्रसङ्गः- अद्वैतवादिनः वदन्ति- जीवेश्वरभेदः प्रत्यक्षसिद्ध एव। अभेदस्तु न प्रत्यक्षादि प्रमाणसिद्धः। अपि तु वेदैकसमधिगम्यः। अत एव वेदोक्तस्य अद्वैतस्य अपूर्वता। भेदस्य तु प्रत्यक्षसिद्धत्वेन तत्प्रतिपादकानामागमानां प्रत्यक्षसिद्ध-भेदानुवादकत्वेन न प्रामाण्यमित्युक्तम्। तत्रोक्तं भगवत्पादाचार्यैः- नहि जीवपरमात्मानौ प्रत्यक्षानुमानवेद्यौ इति पूर्वमुक्तम्। यदि जीवेश्वरभेदः प्रत्यक्षानुमानसिद्ध इत्युच्यते अद्वैतवादिभिः, तर्हि प्रत्यक्षानुमानसिद्धस्य भेदस्य निराचिकीर्षया प्रवृत्तस्य अद्वैतवाक्यस्य प्रत्यक्षविरोधादेव अप्रामाण्यम् दुष्परिहरम्। भेदवाक्यानामनुवादकत्वं प्रतिपादयता भेदस्य प्रत्यक्षानुमानसिद्धत्वमङ्गीकरणीयमेव। असिद्धस्यानवदितुमशक्यत्वात्। एवञ्च भेदस्य प्रत्यक्षानुमानसिद्धत्वे तद्विरोधादेवाभेदागमस्याप्रामाण्यं सुदृढम्। अतः भेदागमानुवादकत्वव्युत्पादनं अभेदागमाप्रामाण्यमेव

निश्चाययतीति व्यर्थोऽयं प्रयासः। अत्रैवमाशङ्क्येत- प्रत्यक्षं हि सम्भावितदोषं दुर्बलम्। अपौरुषेयस्तु आगमः पुरुषदोषनिबन्धनदोषाभावादेव स्वत एव प्रमाणम्। तस्मात् नागमसिद्धोऽभेदः प्रत्यक्षविरोधेन त्याज्य इति। अत्रोच्यते- भेदवाक्यस्यापि वेदत्वादेव प्रबलत्वात् प्रत्यक्षादिप्रतिपन्ने भेदे सन्देहेऽपि तत्र प्रक्रान्तानां भेदवाक्यानां निश्शङ्कप्रतिपत्तिहेतुत्वेन भेदप्रतिपादकत्वेऽपि नानुवादकत्वम्। अपिच प्रत्यक्षादिप्राप्तस्य अनुवादे दार्ढ्यहेतुत्वमेव भवति न त्वप्रामाण्यमिति निश्चप्रचम्।

अस्मिन् प्रसङ्गे तेनाभेदागमस्य प्रामाण्याभावे च नानुवादकत्वमिति पाठस्वीकारे अभेदागमस्य प्रामाण्याभावे भेदवाक्यं नानुवादकमित्यत्र हेतुहेतुमावः न स्फुटं प्रतीयते। उत्तरवाक्यं चासङ्गतं प्रतीयते। तस्मात् तेन अभेदागमस्याप्रामाण्याभावे नानुवादकत्वमिति पाठ एव समीचीनः।(पृ-१६)

तथैव 'यतः स रूपतश्चान्यो ........' इति श्लोकोल्लेखसन्दर्भे पाठभेदाः सुष्ठूल्लिखिताः। 'सम्बद्धः स्यादसंहितः' इति पद्मनाभतीर्थभट्टारकपाठः। 'सम्बन्धः स्यादसंहितः' इति पण्डिताचार्यसम्मतः पाठः। पुराणश्लोके विद्यमानः पाठभेदः सर्वोऽपि प्रामाणिक एवेति सम्यगुपपादितम् (पृ-२७)।

तत्रैव उत्तरत्र 'यमन्तः समुद्रे कवयोऽवयन्ति तदक्षरे परमे प्रजाः' इति श्रुतिवचनमुल्लिख्य पद्मनाभभट्टारक-पण्डिताचार्यव्याख्यानुरोधेन 'तदक्षरे' इति पाठ एव समीचीन इति सुष्ठूपपादितम्। यदक्षर इति क्वचित् श्रुतिपाठ- सम्भवेऽपि 'त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि' इत्यत्रेव प्रामादिकता निरूपिता। (पृ-४१)

तत्त्वसङ्ख्यानग्रन्थे भगवत्पादीयं वचनम्- 'नित्याऽनित्यविभागेन द्विधैवाचेतनं मतम्। नित्याः वेदाः, पुराणाद्याः कालः प्रकृतिरेव च। नित्याऽनित्यं त्रिधा प्रोक्तम्' इति। यद्यप्यत्र 'त्रिधैवाचेतनं मतम्' इति मूलपाठः श्रीमज्जयतीर्थश्रीमच्चरणैरादृत उपलभ्यते। तथाऽपि 'द्विधैवाचेतनं मतम्' इति पाठः गोविन्दाचार्यैरादृतः। त्रिधैव इत्यपि पाठः स्वीकर्तुं शक्यत इत्युक्तम्। द्विधैव इति पाठे भरः दर्शितः। 'नित्यानित्यं त्रिधा प्रोक्तम्' इति

भगवत्पादीयमुत्तरवाक्यमेव 'द्विधैवाचेतनं मतम्' इति पाठं विरुणद्धि। या चात्र टिप्पणी गोविन्दाचार्यैः प्रदत्ता सा अंशिरूपेण नित्यत्वम् अंशरूपेण अनित्यत्वं च स्वीकृत्योपपादिता। अपि च तत्रैव पादटिप्पण्यां वेद-काल-प्रकृतीनां नित्यत्वे समानेऽपि त्रैविध्यं कथमित्याशङ्क्य तदुपपादनावसरे 'वेदाः पुराणाद्या इत्याकाशस्तद्गुणश्शब्दश्च गृह्यते। तदिदं कूटस्थमविकारि नित्यम्। नह्याकाश अंशतोऽपि जायते न च विक्रियते' इति पादटिप्पणी दृश्यते।

वस्तुतस्तु तत्त्वसङ्ख्याने तत्त्वविवेकानुसारेण द्विधैवाचेतनमिति वक्तुं शक्यत्वेऽपि भगवत्पादाचार्यैः त्रिधैवेत्युक्तिः, स्वरूपत एवनित्यत्व-प्रकारविशिष्टानां वेद-वर्णाव्याकृताकाशानां सङ्ग्रहार्थम्। अन्यथा कूटस्थ-नित्यानां तेषां स्वरूपपरिचयः न वै भवेत्। वेद-वर्णाव्याकृताकाशानां प्रकारान्तरेणाऽपि अनित्यत्वं(नित्यानित्यत्वम्) कालप्रकृत्यादीनामिव नोपपादयितुं शक्यते। एवं तेषां स्वरूपप्रज्ज्ञापनार्थमेव भगवत्पादाचार्यैः नित्याः वेदाः उपलक्षणया वर्णाव्याकृताकाशे चगृहीते। तस्मादत्र तत्त्व-सङ्ख्याने 'त्रिधैवाचेतनं मतम्' इति पाठस्वीकार एव साधीयानिति भाति।

श्रीहृषीकेशश्रीमच्चरणविलिखिते कोशे भगवत्पादाचार्यैः उल्लिखितत्त्वेन सम्भावितौ द्वौ श्लोकौ गोविन्दाचार्यैः उल्लिखितौ। हृद्यौ च इमौ श्लोकौ विद्वद्भिः आम्रेडितव्यौ-

**चञ्चलोऽयं समानेयो मनोमीनो हरिस्थले।**
**विषयोदकसञ्चारी सुयत्नबळिशाहृतः ॥**

**प्रादेशमात्रं तत्वार्थे जयार्थेऽरत्निमात्रकम्।**
**ख्यातिपूजार्थिनो हस्तमात्रं पत्रमुदाहृतम्'इति ॥** (पृ- ६२)

तथैव १६७ पृष्ठे विद्यमानौ इमौ श्लोकावप्यनुसन्धेयौ-

**श्रुत्वा तद्दिनमारभ्य दशाहमशुचिर्भवेत्।**
**पितरौ तु मृतौ स्यातां दूरस्थोऽपि च पुत्रकः ॥**

अधुनाऽनुष्ठानेऽयं प्रकारः नास्ति।

**अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत्।**
**संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुद्ध्यति ॥ ज्ञातिविषयमेतत्।**

**तृतीये सम्पुटे पुराणप्रस्थाने-**

**पार्थिवाद् दारुणो धूमस्तस्मादग्निस्त्रयीमयः।**
**तमसस्तु रजस्तस्मात् सत्त्वं यद् ब्रह्मदर्शनम्' ॥ १.२.२५**

अत्र गोविन्दाचार्यैः विलिखिता पादट्टिप्पणी विदुषामतीव मनस्तुष्टिदा भवतीत्यत्र न सन्देहगन्धः। 'पार्थिवात् काष्ठादान्तरिक्ष्यः मेघात्मा धूमस्ततोऽपि स्वर्ग्योऽग्निस्त्रयीमय उत्तमः। एवमूर्ध्वगतिहेतुत्वात्तमसो रज एव उत्तमं रजसोऽपि सत्त्वमिति। 'यद्यपि धूमेनाऽव्रियते वह्निः। तथाऽपि मेघरूपधूमः दीपाच्छादकदारुफलकवत् प्रतिबन्धको न भवति विरलावयवत्वेन सूर्यचन्द्राद्याच्छादकत्वाभावात्। तेन दारुणः सकाशादुत्तमः' इति प्राचीन-टीकायामर्थान्तरमप्युक्तम्। दृष्टान्ते दार्ष्टान्तिके चाभिमानिविवक्षया चेदमुत्तमत्वं बोध्यम्'।

अभिमानिविवक्षया परिग्रहणे च पृथिव्यभिमानी शनिः पञ्चविंशति-कक्ष्यास्थः। धूमाभिमानी पर्जन्यः विंशकक्ष्यास्थः। अग्निः पञ्चदशकक्ष्यास्थ इति तारतम्यमवधेयम्। तद्वदिह तमोऽभिमानिनः रुद्राद् रजोमानी चतुर्मुखः श्रेष्ठः। ततः सत्वाभिमानी विष्णुरुत्कृष्ट इति ज्ञेयम्।

प्रथमस्कन्धे तृतीयेऽध्याये भगवतः विष्णोः नैकानि अवताररूपाणि उपदिष्टानि। तत्र कौमाररूपं किमिति न ज्ञायते। भगवत्पादाचार्या अयं चतुर्मुखसूनुभिन्न इति ब्राह्मवचनेन अप्रतिपत्तिविप्रतिपत्ती निराचक्रुः। अत्र गोविन्दाचार्या अनेन भगवत्पादीयव्याख्यानेन 'कौमारं चतुस्सनरूपम्' इति वदन्तः निरस्ता इति, अत्र नैकेषां श्लोकानां परकीयैः कृतामपव्याख्यामुल्लिख्य भगवत्पादाचार्यकृतव्याख्यानेन तेषां निरासः भवतीति निरूपितवन्तः।

अष्टमस्कन्धे एकोनविंशेऽध्याये 'यद्यप्यसावधर्मेण' इति श्लोकव्याख्या-नावसरे भगवत्पादीयं भाष्यवचनं सूत्रप्रायमिति मन्वानाः गोविन्दाचार्याः नैकधा नैकविधशङ्कापरिहारपरतया महत्या प्रतिभया व्याचक्रुरिति अतिरोहितं विदुषाम्। विद्वत्तल्लजाः, गोविन्दाचार्यकृतपादटिप्पण्याः समवलोकनेन मुदमाप्नुयुरिति तदीयान्येव वाक्यानि पुरत उपस्थापयामि-

**यद्यप्यसावधर्मेण मां बध्नीयादनागसम्।**
**तथाऽप्येनं न हिंसिष्ये भीतं ब्रह्मतनुं रिपुम्॥**(भागवतम्)

**बलिरप्यसुरावेशात् स्तुवन्नपि जनार्दनम्।**
**आक्षिपत्यन्तरा क्वापि प्रह्लादो नित्यभक्तिमान्॥**

इति ब्रह्माण्डे(तात्पर्यम्)।

'ननु बलिर्विष्णुभक्तः। स कथं तस्मिन् भीतिं वैरं च पश्यति- 'भीतं ब्रह्मतनुं रिपुम्' इति ? आह- बलिरप्यसुरावेशात्। यद्यपीदं तात्पर्यवचनं नैतच्छ्लोकमात्रव्याख्यानाय प्रवृत्तम्। किन्तु आदशमाध्यायादेकविंशपर्यन्तम् अध्यायनिकायगतप्रमेयविवरणम्। अत एवैतदन्ते प्राचीनकोशेष्वध्याय-पूर्तिर्न पठ्यते। तथाहि- बलिर्देवैः सह युद्धं चकारेति दशमे चतुर्दशे चाध्याये श्रूयते। तत्कथं विष्णुभक्तो विष्णुभक्तैः सह युद्धं चकार? आह-बलिरप्यसुरावेशात्। तेनाध्यायद्वयं व्याख्यातम्।

दशम एव चाध्याये बल्यादीन् दैत्यान् वञ्चयित्वा विष्णुर्देवानमृतं पाययामासेत्युच्यते, 'येन सम्मोहिता दैत्याः पायिताश्चामृतं सुराः' इत्येकादशे रुद्रवचनं च। तत् कथं विष्णुः स्वभक्ताय नामृतं ददौ ? आह-बलिरप्यसुरावेशात्। तदेवमध्यायद्वयं व्याख्यातम्।

द्वादशे चाध्याये बलेर्बन्धः श्रूयते- 'योऽसौ भगवता बद्धः सुतले पुनः'(१४) इति। यदि प्रीतः कथं बबन्ध? नहि बन्धः प्रीतिलिङ्गम्। अत एव चतुर्दशे- 'बलेः पदत्रयं भूमेः कस्माद्धरिरयाचत। भूतेश्वरः कृपणवल्लब्धार्थो

ऽपि बबन्ध तम्' इति परीक्षिदप्याक्षिपतीव। नह्यनागसो बन्धनं युक्तमिति। आह- बलिरप्यसुरावेशात्। एतेनासुरावेशफलं बन्धनमित्यध्याय-द्वयं विवृतम्। एतेनैव 'बबन्ध वारुणैः पाशैर्बलिं सुतेऽहनि क्रतोः'(२०-२६) इति गरुडकृतं बलिबन्धनं च व्याख्यातम्।

तथा चतुर्दशेऽध्याये 'प्रह्लादमामन्त्र्य नमश्चकार'(१४-७) इति प्रह्लादानुमत एव बलिर्देवान् जिगायेति श्रूयते। किं प्रह्लादोऽप्यसुरावेशात् स्वपौत्रस्य देवविजयमन्वमन्यत ? नेत्याह- प्रह्लादो नित्यभक्तिमान्। नहि नित्यभक्तस्य प्रह्लादस्य देवविजयोऽभिमतः। किन्तु बलेरसुरावेशं भाविनं च भगवत्सङ्कल्पं विज्ञाय तूष्णीम्भाव एवानुमतिर्नाम। तथा, विंशेऽध्याये- 'तथाऽहमप्यात्म-रिपोस्तवान्तिकं दैवेन नीतः प्रसभं त्याजितश्रीः'(४५) इति प्रह्लादवदहमपि रिपोरपि तव पादपद्मं प्रपद्य इति बलिराह। किं तर्हि प्रह्लादोऽपि नरसिंहं रिपुमेव मन्यमानो भयादेव शरणमियाय ? नेत्याह- प्रह्लादो नित्यभक्तिमान्। किं तर्हि विष्णुमहिमानं जानन्नपि बलिस्तं रिपुत्वेन गणयति ? आह- बलिरप्यसुरावेशात् स्तुवन्नपि जनार्दनम्। आक्षिप्यन्तरा कापि। तथाहि भगवतैव स्फुटमुक्तं विंशाध्यायान्ते- 'तत्र दानवदैत्यानां सङ्गात् ते भाव आसुरः। दृष्ट्वा मदनुभावं वै सद्यः कुण्ठो विनंक्ष्यति'(७१) इति। तदेतदपि ब्रह्माण्डवचनेन समाख्यातं भगवत्पादेन। तदेवं बलिसम्बद्धं कथाजातमेकेनैव श्लोकेन व्याचख्यावित्यपूर्वं कौशलं गुरुतमाग्रण्यो भगवतो भाष्यकारस्य' इति। अत्र गोविन्दाचार्यप्रदत्ता पादटिप्पणी सर्वेषां मोदावहा भवति।

श्रीभागवते एकादशस्कन्धे एकादशेऽध्याये- 'सत्यस्य ते स्वदृश आत्मनः.. विमोहितधियः'(११.७.१७) इति श्लोकव्याख्यानावसरे भगवत्पादीयं वचनम्- 'ब्रह्मणस्त्वंशरूपेषु भारत्या ज्ञानवर्जनम्' इति। अत्र मूलश्लोके ब्रह्मपदवाच्यानाम् ऋजूनां शतगणप्रवेशात्प्राक् अपरोक्षज्ञानाभावः मोह अभिहितः। रीत्यन्तरेण मोह उपपादितः 'अंशरूपेषु ज्ञानवर्जनम्' इति। अत्र ब्रह्मपदेन वायुः तत्पत्नी च गृह्येते। तयोः मूलरूपे यावद्ज्ञानं

तस्य अवताररूपेषु वर्जनं ज्ञानह्रास इति गोविन्दाचार्याः व्याचक्षते। तथाहि तद्वचनानि- 'अथ ब्रह्मा वायुः। तस्य भारत्याश्च अंशरूपेषु अवतारेषु मूलरूपे यावत् तावतो ज्ञानस्य वर्जनं ज्ञानह्रास इति यावत्। स एव च तस्य तस्याश्च मोहो नाम। भारत्या सह ब्रह्मणो वायोरिति वा। हनुमदादिषु वाय्ववतारेषु विप्रकन्यादिषु भारत्यवतारेषु च मूलरूपापेक्षया किञ्चिदिव ज्ञानह्रासो विद्यत इत्यर्थः' ।(भा.ता. सम्पुट-३, पृ- ६४३)

ज्ञानह्रासपदेन य अर्थः आपाततः प्रतीयते स एव गोविन्दाचार्यैः विवृतः। स तु न समीचीन इति भाति। यतो हि पण्डिताचार्याः मूलरूप इव अवताररूपेष्वपि ज्ञानसौशील्यादयो गुणाः परिदृश्यन्त इति व्याख्यातवन्तः। मूलरूप इव अवताररूपेऽपि ज्ञानह्रासाभावः अनेन विज्ञेयः। तथाहि पण्डिताचार्यवचनानि- 'तत्त्वविद्याचार्यवर्याणां मूलरूप इव सर्वरूपेष्वपि सौबल्यसालक्षण्य- सौशील्यादिगुणाः परिदृश्यमाना दृश्यन्ते'। भगवती श्रुतिरपि एतमेवार्थमाह- 'बट् तत् दर्शतमित्थमेव निहितम्' इति। सर्वज्ञकल्पाः श्रीमट्टीकाकृत्पादाचार्याः व्याचचक्षिरे- 'कीदृशं तस्य मूलरूपम्, कथं भूतानि च तानि मूलरूपाणि इत्यत उक्तम्- बडित्यादि ॥ यस्य तन्मूलरूपं बट्-बलात्मकं, दर्शतं ज्ञानरूपं च। न केवलं मूलरूपमेवं किन्तु यस्य अवतारेषु निहितं मूलरूपमित्थमेव' इति।

**देवानां तु नृजातानाम् अल्पं व्यक्तं भवेद्बलम्।**
**इच्छया व्यक्ततां यान्ति वायोः, अन्येषु तच्च न ॥**

इति महाभारततात्पर्यनिर्णयवचनानुरोधेन वाय्वतिरिक्तानां गरुडशेषादि-देवानां मूलरूपे यावद्ज्ञानं यावती शक्तिः तदवताररूपे नास्ति। कालबलात् पितृ-मातृदोषतः स्वकर्मतो वा अभिभवश्रवणात्। तथाहि 'गुणाश्च कालात् पितृमातृदोषतः स्वकर्मतो वा अभिभवं प्रयान्ति' इति। वायोस्तु मूलरूप इव अवताररूपेऽपि ज्ञानशक्त्यादयो गुणाः विद्यन्त एव परन्तु ते न स्वेच्छया व्यज्यन्ते। हरिप्रीतये विद्यमाना अपि ज्ञानादयो गुणाः अवताररूपेषु

स्वेच्छया न सम्यग् आविष्क्रियन्ते। एतेन मूलरूप इव अवताररूपमपि वायोः पूर्णमेव न तत्र अवतारेषु ज्ञानह्रासः विद्यत इति विज्ञेयम् ॥

**सम्पुटम्-१**

गीताभाष्यं-गीतातात्पर्यसहितानि भगवत्पादाचार्यप्रणीतव्याख्याचतुष्ट योपेतानि ब्रह्मसूत्राणि चेति आहत्य षड् ग्रन्थाः प्रथमसम्पुटे गोविन्दाचार्यैः मुद्रापिताः। यदहं अस्मिन् विषये विलेखितुमुद्यतः तदा विद्वतल्लजेन डा. वीरनारायणाचार्य पाण्डुरङ्गी महोदयेन विलिखितां 'अनुव्याख्यानब्रह्मसूत्र भाष्ययोः पाठभेदविचारः' इति शोधपत्रिकाम् अपठम्। अत्र च संशोधनदृष्ट्या नैके अपूर्वाः विषयाः विद्वद्वर्येण वीरनारायणाचार्येण निरूपिताः विद्यन्ते। एतस्याध्ययनेनैव विद्वांसः कृतिनो भवेयुः। नेतः अधिकं वक्तव्यमस्ति। तथापि द्वित्रा विषयाः मया प्रस्तूयन्ते-

१. गोविन्दाचार्यैः व्याख्यानेषु प्रवचनेषु च हृषीकेशतीर्थीयसर्वमूलपाठः त्रिविक्रमपण्डिताचार्यधृतः ब्रह्मसूत्रभाष्यपाठश्च समीचीनः। श्रीमज्जयतीर्थ-श्रीमच्चरणैः धृतः मूलपाठः नातीव शुद्धः इति तत्रतत्र गोविन्दाचार्यैः व्याहृतम्। अत्र चिन्तनीयम्- भगवत्पादाचार्याणां शताधिकाः शिष्याः तदानीमासन्निति 'शतसङ्ख्याः शतसङ्ख्यमन्वगच्छन्' इति मध्वविजयवचनेनावगम्यते। तेषु नैके विद्वांसः यतयो वा सर्वमूलग्रन्थान् लिखितवन्तस्स्युः। तदानीं क्वचन पाठभेदः अनवधानात् भवत्येव। परन्तु हृषीकेशतीर्थीयपाठे तत्त्वप्रदीपा-चार्योपदर्शितपाठे च भेदः तत्रतत्र विद्यत एव इति वीरनारायणाचार्येण सदृष्टान्तं प्रतिपादितम्। कुत्रचित् टीकापाठः हृषीकेशतीर्थीयसंवादी विद्यते। क्वचित् हृषीकेशतीर्थीयपाठे दोषाः सन्तीति गोविन्दाचार्याः स्वयमङ्गीचक्रुः। तथैव विद्वद्धौरेयाः श्रीहयवदनपुराणिकमहाभागाः विद्वत्तजाः बाळगारु श्रीरुचिराचार्याश्च हृषीकेशतीर्थीयपाठे दोषानादर्शिवन्तः। श्रीमज्जयतीर्थ-पूज्यचरणैः आचार्यरचितेषु विभिन्नग्रन्थेषु चतुर्दशसु स्थलेषु पाठभेदाः निर्दिष्टाः। यथा अनुव्याख्याने षट्, गीताभाष्ये पञ्च, गीतातात्पर्ये एकः,

विष्णुतत्त्वविनिर्णये एकः, प्रमाणलक्षणे एकः इति आहत्य चतुर्दश एव। विस्तारः वीरनारायणाचार्यशोधप्रबन्ध एव द्रष्टव्यः। अपि च गोविन्दाचार्याः सुधाचार्यधृतः 'भेद एव गवाश्वयोः' इति पाठः न समीचीनः। हृषीकेश-तीर्थीयकोशानुसारेण 'भेद एव गवश्वयोः' इत्येव मूलपाठः। तस्मात् 'गवाश्वयोरिति प्रमादपाठः मूलकोशेष्वदर्शनात्' इति सुधापाठस्सम्भाव्यते इत्युक्तम्। तत्र वीरनारायणाचार्येण व्याकरणशास्त्रे अद्वितीयपरिश्रमिणां श्रीवत्साङ्काचार्याणां प्रो. वेङ्कटराजशर्मणां, प्रो. महाबलेश्वरभट्टानां च आशयविशेषः प्रकाशितः। यत्र श्रीजयतीर्थीयपाठस्यैव साधुत्वं समर्थितम्।

तत्त्वप्रदीपग्रन्थः श्रीमट्टीकाकारैः परमादरेणावलोकित इत्यत्र न सन्देह-गन्धः। एतत् तत्त्वप्रकाशिकाभावदीपव्याख्याध्ययनशीलानां विदुषां नातिरोहितम्। गोविन्दाचार्यैः तत्त्वप्रदीपशोधनं प्रकाशनञ्च २०१६ वत्सरे विहितम्। तत्र स्वोपज्ञं व्याख्यानञ्च योजितम्। तदीयव्याख्याने तेषां शास्त्रे विद्यमानः असाधारणः श्रमः विशिष्य वेदाङ्गादिषु विद्यमानं पाटवञ्च विदुषां मोदावहं भवति। तत्र विद्यमानाः द्वित्राः विषयाः प्रस्तूयन्ते-

जन्माधिकरणे- नवतिदेवानां निरूपणावसरे तत्त्वप्रदीपे 'भृगुश्चैवानि-रुद्धश्च' इति पाठापेक्षया 'विधुश्चैवानिरुद्धश्च' इति पाठस्वीकार एव साधीयानिति निपुणतरं प्रपञ्चितम्। (पृ-१७८)

प्राणाधिकरणे- बन्नञ्जेगोविन्दाचार्यैः 'अङ्कं श्रिता श्रीः वक्षसि लक्षणभूता लक्ष्मीः' इति तत्त्वप्रदीपपाठः उल्लिखितः। श्रीमट्टीकाकृत्पादास्तु 'वक्षःस्थला-श्रिता श्रीरिति सम्प्रदायविदः' इति वदन्ति। आपाततः तत्त्वप्रदीपकाराणां टीकाकाराणां च विरोध इव प्रतीयते। अविरोधोपपादनप्रकारः ज्ञानिभिः प्रदर्शित एव। टीकाकाराणां व्याख्यानन्तु बहुप्रमाणोपेतमिति विदुषां नातिरोहितम्। तथाहि श्रीभागवते-

१. 'वक्षसि लक्षितं श्रिया' (२.९.१६), २. 'स्वस्याः श्रियः सजगतो जनको जनन्याः वक्षोऽधिवासमकरोत्' (८.८.२४), ३. 'को नाम

विष्ण्वनुपजीवक आस यस्य नित्याश्रयादभिहितापि रमा सदा श्रीः' इति महाभारततात्पर्यनिर्णये(१५.५) श्रियः हृदयाश्रितत्वमुक्तम्। समर्थितं च एतत् श्रीमद्वादिराजपूज्यचरणैः। तात्पर्यनिर्णये 'मेङ्कगायाः श्रियोऽहम्' इत्यत्र(२०.७२) श्रीपदेनोक्ता पूर्वप्रकृता यज्ञनाम्नी। एवञ्च बहुप्रमाणसत्वात् टीकाकारीयं व्याख्यानं समीचीनमित्येव वक्तव्यम्। विवक्षाभेदेन 'अङ्कं श्रीवत्सचिह्नमाश्रिता श्रीः' इति सैव हृदयस्था सर्वलक्षणसम्पन्ना लक्ष्मीः इत्यर्थकरणे न विरोधगन्धः। एवञ्च सर्वत्राऽपि व्याख्यातृषु अविरोधसम्पादनं चन्द्रिकाचार्याद्युपदिष्टदिशा विज्ञेयम्।

प्रथमसूत्रपाठभेदनिरूपणप्रस्तावे गोविन्दाचार्याः 'अथातो ब्रह्मजिज्ञासा' इत्येव सूत्रपाठः न्यायविवरणे, तत्त्वप्रदीपे, हृषीकेशतीर्थीये, सन्न्यायरत्नावल्यां च दृष्टः। (पृ-२५४) तस्मात् प्रतिसूत्रमाद्यन्तयोः ओङ्कारोच्चारणम् अशास्त्रीयम् असाम्प्रदायिकं च इति व्याहरन्ति। तथाहि तद्वचनानि- 'पृथगुच्चारणमपि प्रथमसूत्र एव नोत्तरसूत्रेष्वपि। 'स्रवत्यनोङ्कृतं ब्रह्म' इति वचनस्य ग्रन्थारम्भमात्रविषयत्वात्। अत एव सम्प्रदायविदो हृषीकेशतीर्थादयोऽपि अनोङ्कृतान्येवोत्तरसूत्राणि लिलिखुः। सम्प्रदायप्रदस्य भगवत्पादस्य श्रीमुखादेव हि ते साक्षाद् विदितसम्प्रदायाः। तस्मादशास्त्रीयोऽयमनार्यसम्मतश्च सम्प्रदायः, यत् प्रतिसूत्रमाद्यन्तयोरोङ्कारेण सम्पुटीकरणं नाम। अत एव सूत्रेणैकवाक्यतया भाष्यं पपाठ। तद् यथा- 'तद्धेतुव्यपदेशाच्च, को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यादिति' इति। अन्ते पठने कारणं तु तत्रैवोक्तम्- एवं स्थितेऽप्यहो बभ्रमुरेव पण्डितम्मन्याः प्रतिसूत्रमोङ्कारमाम्रेडयन्तः' इति।(पृ-४३५)

गोविन्दाचार्याणामाशयः भगवत्पादाचार्य-प्राचीनटीकाकाराद्याशयविरुद्ध इति विदुषामतिरोहितम्। तथाहि भाष्य-टीकावचनानि-

**१. तत्र ताराथमूलत्वं सर्वशास्त्रस्य चेष्यते।**
**सर्वत्रानुगतत्वेन पृथगोङ्क्रियतेऽखिलैः ॥**

इति श्रीभगवत्पादाचार्यैः श्रीमदनुव्याख्याने आदिमसूत्रस्य ताराथमूलत्वं कण्ठत एव प्रतिपादितम्। पृथगुच्चारणं तु उत्तरत्रानुगतिसूचनार्थमिति ज्ञापयितुं 'सर्वत्रानुगतत्वेन पृथगोङ्क्रियतेऽखिलैः' इत्युक्तम्। एवं सन्न्याय-रत्नावलिरपि तथा वदति- ओंकारस्तु स्रवत्यनोङ्कृतं ब्रह्म इत्यादि वचनात् प्रत्यधिकरणावर्तमानत्वात्पृथगुच्चरितो वेदितव्यः' इति।

२. श्रीमन्तः नारायणपण्डिताचार्याः 'सर्वत्र शब्दतोऽपि अनुगतत्वात् ओंकारः पृथगेव उच्चार्यते। नाथशब्दवत् सूत्रे निबद्धः' इति वदन्तः द्वितीयादिसूत्रेषु ओंकारस्य अनुगतिमङ्गीचक्रुः।

३. 'तारश्चाथश्च(ताराथौ) तयोः मूलत्वं क्रमेणादित्वम्।(श्रीसुधा- पृ-१३५) आदौ प्रयुक्तावोङ्काराथशब्दाविति यावत्'।

४. एवं 'प्राप्ते सूत्रयामास भगवानाचार्यः- ॐ अथातो ब्रह्मजिज्ञासा इति'।(श्रीसुधा-पृ-१७५)

५. 'यदुक्तं जीवव्यतिरिक्त ईश्वर एव नास्तीति तत्परिहाराय सूत्रकृतोङ्कारब्रह्मशब्दौ प्रयुक्तौ'।(श्रीसुधा-पृ-१७८)

६. 'ब्रह्मशब्दात् विषयसिद्धावपि ओमित्युक्तिः न केवलं ब्रह्मशब्दात् विषयसिद्धिः, 'ओमित्येतदक्षरं उद्गीथं उपासीत' इत्यादौ गुणपूर्णार्थोङ्कारादपि इति युक्त्यन्तरसूचनाय'।(तन्त्रदीपिका- पृ-५)

**ओङ्कारश्चाथशब्दश्च तस्मात् प्राथमिकौ क्रमात्।**
**तद्धेतुत्वं वदंश्चापि तृतीयोऽत उदाहृतः ॥ इति।**

भाष्योदाहृतस्मृतौ अथातःशब्दतुल्यतया आद्यसूत्रावयवतायाः उक्तत्वात् अनुव्याख्याने- 'तत्र ताराथमूलत्वम्'इत्यथशब्दतुल्यतयोङ्कारस्याद्यसूत्रावय वत्वोक्तिः युक्ता। एवं च सन्न्यायरत्नावली 'स्रवतीत्यादि श्रुतिप्रापित-साधारणोङ्कारविषया। सुधा तु स्मृतिप्रापिताऽसाधारणोङ्कारविषयेति द्रष्टव्यम्'। (तात्पर्यचन्द्रिका- १/१/१; पृ- १०८)

एवञ्च भगवत्पादाचार्यादारभ्य सर्वे टीकाटिप्पणीकाराः ओङ्कारस्य सम्पुटीकरणं प्रतिसूत्रं सम्यगेव प्रत्यपीपदन्। एवमपि अयमनार्यसम्प्रदायः, भ्रममूलसम्प्रदायः इत्यादि व्याहरणं दोषैकदृत्त्वं विद्योतयति।

एवं गोविन्दाचार्यैः शोधितेषु सर्वमूलसम्पुटेषु गुणाः दोषाश्च दोषज्ञानां प्रतीयन्त इति नातीव वक्तव्यमिति उपरामो विस्तरात्।

****

# हृषीकेशतीर्थीयपाठविचारः

आचार्य वीरनारायण पाण्डुरङ्गी[1]

नरसिंहोऽखिलाज्ञानमतध्वान्तदिवाकरः ।
जयत्यमितसज्ज्ञानसुखशक्तिपयोनिधिः ।।
अभ्रमं भङ्गरहितमजडं विमलं सदा ।
आनन्दतीर्थमतुलं भजे तापत्रयापहम् ।।
यद्विद्याधीशगुरोः शुश्रूषान्या न रोचते तस्मात् ।
अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा ।।
दुर्वादिध्वान्तरवये वैष्णवेन्दीवरेन्दवे ।
श्रीराघवेन्द्रगुरवे नमोऽत्यन्तदयालवे ।।

## ब्रह्मसूत्रभाष्ये हृषीकेशतीर्थीयपुस्तकगतपाठविचारोऽत्र क्रियते

मध्वाचार्यैः प्रायः अष्टशतवर्षेभ्यः प्राक् ब्रह्मसूत्रभाष्यमरचि। तथा गीता-उपनिषदादीनां च भाष्याण्यरच्यन्त। तत्र च ब्रह्मसूत्रभाष्ये (ब्र.सू. भा.) प्रथमतः त्रिविक्रमपण्डिताचार्यैः तत्त्वप्रदीपनाम्नी[2] व्याख्या अकारीति

---

1. I am very much gratefull to Vidyavachaspati Bannanje Govindacharya for his suggestions; Prof. Tirumalacharya who gave valuable inputs for this artical; Prof. Haridasa Bhatta for his suggestions; Pandit Balagaru Ruchiracharya for his suggestions; Dr. A.V.Nagasampige who showed keen interest in this matter and arranged a lecture, in which a live debate was possible, on same topic in Poornaprajna Samshodhana Mandiram where he is Director; Prof.V.Venkataraja Sharma, Prof. V.Srivatsankacharya. Pandit G. Mahabaleshvara Bhatta, who readily gave their views on 'गवाश्वयोः'; Pandit Srinivasa Varakhedi for his suggestions; Dr.T.Ganesan who keenly suggested many things; and all the others for inspiration.
2. अस्य तत्वप्रदीपः, तत्त्वप्रदीपिका, तत्त्वदीपिका, तत्त्वदीप इति वा व्यवहारः। 'तत्त्वप्रदीपाकृतिगोगणेन इति ( म. वि.१.४.)।

'गुर्वाज्ञागौरवाट्टीकां कुर्वन्' ' [1]इत्यादिमध्वविजयादवगम्यते। तत्र पद्मनाभ -तीर्थकृतापि टीकोपलभ्यत इदानीम्। परन्तु तस्याः प्राचीनताविषये विप्रतिपद्यन्ते[2]। तदनन्तरं च जयतीर्थैः तत्त्वप्रकाशिकानाम्नी टीका व्यरचि। तस्याश्च बह्वष्टिप्पण्ण्यः मुद्रिताः अमुद्रिताश्च इदानीं समुपलभ्यन्ते।

अस्य च सूत्रभाष्यस्य बहूनि संस्करणानि समुपलभ्यन्ते। एषु च प्रथमतया टि. आर्.कृष्णाचार्यैः कुम्भकोणे शतवर्षात्प्राक्, अनन्तरं राम-तत्त्वप्रकाशग्रन्थालयात् बेळगांवनगरे प्रायः शतवर्षात्प्राक्, अनन्तरम् उत्तरादिमठात् (१९६०), तथा बन्नजे गोविन्दाचार्यैः बेङ्गळूरु-उडुपीनगरयोः (१९६९-८०), बेङ्गळूरुनगरात् प्रभञ्जनाचार्यैः (१९९९) इति सर्वमूला-न्तर्गततया, तथा पृथक् च भाष्यदीपिकासहिततया चेन्नैनगरे शतवर्षात्प्राक्, तथा भावदीप-तत्त्वप्रकाशिकासहिततया धारवाडनगरे राघवेन्द्राचार्य पञ्चमुखिभिः (१९८१), तथा के.टि.पाण्डुरङ्गीमहाशयैः इदानीं च (१९९८-२००२) बहुभिष्टिप्पणीभिः टीकाभिश्च साकं मुद्रणानि कृतानि समुपलभ्यन्ते। अनुव्याख्यानस्य[3] च पूर्वोक्तसर्वमूलसंस्करणानि विहाय

---

1. म.वि. १५-७२।

2. 'तथा हि नयचन्द्रिकायां नारायण पण्डिताचार्यैः द्विवारं सन्यायरत्नावलेरुल्लेखेऽपि न भाष्यटीकोल्लेखः दृश्यते। तथैव सुधायां 'टीकाकृतः' इति पद्मनाभतीर्थाः जयतीर्थैः उल्लिखिताः। तथापि तत्त्वप्रकाशिकायां यत्र कुत्रापि तदीयव्याख्याया उल्लेखाभावात् तेषां भाष्यटीकाकर्तृत्वे संशयः। तथैव व्यासतीर्थैः, राघवेन्द्रतीर्थादिभिः 'टीकासु च यदस्पष्टं तच्च स्पष्टीकरिष्यते' इति चन्द्रिकावाक्यव्याख्यानावसरे तदीयटीकाया अनुल्लेखाच्च तत्र संशीयते।

3. अनुव्याख्यानम्, अनुभाष्यम् इति नामद्वयमप्यस्य दृश्यते। 'कृत्वा भाष्यानुभाष्येऽहमपि' इति न्यायविवरणे, 'व्याख्यां करोम्यन्वपि चाहमेव' इति अनुव्याख्याने च भगवत्पादैः निर्दिष्टत्वात्। तथा 'तत्कृतां ब्रह्मसूत्राणामनुव्याख्यां यथामति' इति तथा सूत्रानुभाष्य-पददीपनदीपरूपा' इति च पद्मनाभतीर्थभट्टारकैः उक्तत्वात्। 'स्वानन्दतीर्थः परतत्त्व-सूत्रभाष्यानुभाष्ये' इति त्रिविक्रमपण्डिताचार्यैः उक्तत्वात्।

'अनुव्याख्यानसंबन्धदीपिकां प्रारभामहे' इति लिकुचशंकराचार्यः अनुव्याख्यान-

उत्तरादिमठात् पुनश्च सुधया साकं मुद्रणान्तरम् (१९८२) अस्ति। अत्र मुद्रितसुधायाम् अनुव्याख्यानस्य केचन पाठाः कुम्भकोणपाठापेक्षया भिन्नाः इति संदृश्यते सुधादर्शिभिर्विद्वद्भिः।

तत्र भाष्यपाठे टि.आर्.कृष्णाचार्यपुस्तकमेव सर्वेषामुत्तरेषां पुस्तकानां मूलम्। तत्र का मातृका उपायुज्यत इति न ज्ञायते। प्रायः कुम्भकोण-देशीयत्वात्तेषां तमिळदेशे उपलब्धमातृकाः उपयुक्ताः इत्याशङ्क्यते। रामतत्त्व-उत्तरादिमठपुस्तकयोरपि किं मूलमिति न ज्ञायते। प्रायः टि.आर्. कृष्णाचार्यपुस्तकमेव मूलम्। बन्नञ्जे गोविन्दाचार्यपुस्तकस्य तु तैरेवोक्तरीत्या उडुपीस्थपलिमारुमठीया प्राचीना हृषीकेशतीर्थलिखितत्वेन[1] संप्रदायागता एका मातृका, हृषीकेशतीर्थीयानुसारिणी पलिमारुमठीया रघुवर्यतीर्थीया[2], तथा पेजावरमठीया अन्या मातृका प्रतनतरा[3], पलिमारुमठीयरघुरत्न-तीर्थलिखिता अन्या मातृका[4], तथा सोदेमठीया अन्या मातृका[5] अन्याश्च

---

संबन्धदीपिकायाम्, 'अनुव्याख्यासुधाम्भोधो गम्भीरे विहरन्ति ये' इति नारायण-पण्डिताचार्यैः नयचन्द्रिकायाम्, इत्येवं भिन्नभिन्ननामभिः निर्दिष्टत्वात्। सुधायां च असकृत् अनुव्याख्याननाम्नः उल्लिखितत्वात्।

1. 'हृषीकेशतीर्थेन लिखितोऽयं ग्रन्थः' इति ग्रन्थान्ते लिखितं दृश्यते इति गोविन्दाचार्याः।
2. ७ द्र० गो. भूमिका संकीर्णग्रन्थानाम् (भा. ५. पृ.२.), भागवततात्पर्यस्य च। रघुवर्यतीर्थीये एव स्पष्टतया हृषीकेशतीर्थलिखितपाठमवलम्ब्य लिखितम् इति उल्लेखो वर्तते इति। तथा विश्वाधिराजतीर्थलिखिते द्वादशस्तोत्रपुस्तके 'अस्मद् गुरुभिः (विश्वपतितीर्थैः) मूलपाठो नोपलब्धः, तस्मान्मया स लिख्यते' इत्युल्लेखो वर्तते इति च गोविन्दाचार्यैः मम सकाशे उक्तम्।
3. ब्र.सू.भा.गो.पुस्तकम्.पृ.१४१,१७७। मुखेन उक्तं मम सकाशे यत्- सा मातृका पद्माकरालयरामेण लिखितम् इत्युल्लेखेन सहिता वर्तते। यद्यपि सा प्राचीना, तथापि न सर्वथा हृषीकेशतीर्थानुसारिणी। अत्र एव गीताभाष्ये अनुष्ठीय इति ईकारघटितपाठः अस्मिन्नेव पाठे लभ्यते, तत्र हृ.पाठस्य, रघुवर्यतीर्थपाठस्य चानुपलम्भात्।
4. द्र० गो. भूमिका भागवततात्पर्यस्य।
5. मुखेन उक्तम्, अन्यत्र नोल्लिखितम्।

बह्वयः मातृकाः उपयुक्ताः । तत्र हृषीकेशतीर्थलिखितत्वेन संप्रदाया गता एका मातृका इदानीमपि तत्र पलिमारुमठे वर्तते । पेजावरमठीया मातृका, अन्याश्च मातृकाः काः, तासां संख्या वा स्थितिर्वा न ज्ञायते । गोविन्दाचार्यैरपि सर्वत्र प्राचीनकोशे, प्राचीनकोशेषु, कोशान्तरे, कोशान्तरयोः इत्यादिना बढ्यः मातृकाः अनिर्दिष्टाकरं दर्शिताः । ताः काः, तासां स्थितिः का इत्यादेरज्ञातत्वात् तासां विषये किमपि निर्दिष्टं वक्तुं न शक्यते ।

प्रभञ्जनाचार्यैः प्रकाशितस्य सर्वमूलान्तर्गतस्य सूत्रभाष्यसंस्करणस्य तैरुद्घोषितदिशा मातृकाद्वयमुपयुक्तम् । तत्रैका मातृका जयतीर्थगुरुभिः अक्षोभ्यतीर्थैः लिखिता, अन्या च मातृका तच्छिष्यैः लिखिता[1] इति, तथा अन्याश्च बह्व्यः मातृकाः तदीयजयतीर्थमातृकाभाण्डागारे वर्तमानाः उपयुक्ताः, तथैव सर्वाण्यपि मुद्रितानि भाष्यपुस्तकानि पाठान्तरनिर्देशार्थमुपयुक्तानि इति च तैरुल्लिखितम् । परन्तु मया इदानींतनकूडलीक्षेत्रस्थाक्षोभ्यतीर्थमठाधिपतीनां सकाशे विचारणे कृते अक्षोभ्यतीर्थीयत्वेन उद्घोषिता मातृका वस्तुतः अक्षोभ्यतीर्थैः न लिखिता, किन्तु राघवेन्द्रतीर्थसमकालिकैः अक्षोभ्यतीर्थपीठारूढैः बिच्चगत्ति रामचन्द्रतीर्थैः लिखिता इति ज्ञातम् । एवं च रामचन्द्रतीर्थानां कालः क्रि. श १६७० इति निश्चितत्वात्, तदीयमातृकायाः कालोऽपि स एवेति निश्चीयते । एतज्ज्ञात्वा च मया एतद्विषये अनुयुक्तैः प्रभञ्जनाचार्यैः अपि एतदभ्युपगम्य आगामिनि सर्वमूलतेलुगुसंस्करणे रामचन्द्रतीर्थलिखितत्वेनैव सा मातृका उल्लिख्यते इति प्रत्यज्ञायत । तथा प्रभञ्जनाचार्यैरुपयुक्तायाः अन्यस्याः मातृकायाः विषयेऽपि इदानींतनबाळिगारु अक्षोभ्यतीर्थपीठारूढैः रघुभूषणतीर्थैरुक्तम्- सा मातृका प्रायो द्विशतवर्षदेशीया तेषां मठे विद्यमाना, पूर्वं तैः इदानींतनपलिमारुमठाधीशानां विद्याधीशतीर्थानां हस्ते दत्ता, विद्याधीशतीर्थसकाशाच्च प्रभञ्जनाचार्यहस्तं प्राप्ता सा इति । तस्मात्तदुपयुक्तं मातृकाद्वयमपि इदानीमुपलभ्यते । परन्तु तयोः प्राचीनतमत्वाभावात्, अनेकापपाठयुक्तत्वाच्च नातीव प्रामाणिकता युक्ता ।

---

1० भूमिका पृ.१४. सर्वमूलग्रन्थाः, व्यासमध्वसेवाप्रतिष्ठानम्, बेङ्गळूरु.१९९९.

चेन्नैनगरात् प्रकाशितं भाष्यदीपिकायुक्तं भाष्यपुस्तकं[1] तु कीदृश-मातृकामूलमिति न ज्ञायते। पञ्चमुखिप्रकाशितं भावदीपतत्त्वप्रकाशिकोपेतं पुस्तकं यद्यपि तद्भूमिकोक्तरीत्या अनेकमातृकाधारेण संशोधितम्, तथापि तत् कुम्भकोणपुस्तकं वा गोविन्दाचार्यपुस्तकं वा अनुसरति। तत्र विशिष्य उल्लेखार्हाः पाठभेदाः न सन्ति। पाण्डुरङ्गिप्रकाशितपुस्तकेऽपि तथैव। दौर्भाग्यवशात् प्रायः सर्वेऽपि कन्नडभाषानुवादा अपि न समीचीनं पाठमालम्बिरे।

तस्मात् गोविन्दाचार्यपुस्तक-प्रभञ्जनाचार्यपुस्तकयोरेव अत्र मुख्यतः पाठभेदोल्लेखित्वात् तदाधारेणैव विचारः प्रवर्तनीयः। तत्र प्रभञ्जनाचार्य-पुस्तकेऽपि महत्तराः पाठभेदाः न सन्तीति न तत्रापि मुख्यतो विचारः, किन्तु गोविन्दाचार्यपुस्तकमूल एवायं विचारः। अत्र च गोविन्दाचार्यप्रकाशितस्य हृषीकेशतीर्थीयानुसारिपाठस्य (हृ. पाठ), जयतीर्थविरचिततत्त्वप्रकाशिका दृतपाठस्य (ज.पाठ) च महान् भेदो वर्तते। कानिचन सूत्राणि हृ. पाठे न सन्ति[2], कानिचन च अन्यथा पठितानि। भाष्येऽपि महानत्र भेदो विदृश्यते इति। अत्र च उभयोः पाठयोः समीचीनत्वाङ्गीकारे तयोः दृश्यमानस्य सूत्रभाव- अभावादिरूपस्य वैलक्षण्यस्य सूत्रपाठभेदस्य च नारायणावतारस्य भगवतः बादरायणस्य सूत्रकर्तुः अनेकविधसूत्रकृत्त्वे पर्यवसानप्रसङ्गेन भगवति दोषवत्त्वापादकत्वेन विचारणीयता। उभयोः पाठयोः दृश्यमानस्य भाष्यपाठभेदस्य च समीचीनताङ्गीकारे यद्यपि स एव दोषः, तथापि भाष्ये अनुव्याख्याने च पाठभेदास्सन्तीति प्राचीनव्याख्यास्वेव[3] दृश्यते। तस्मान्नायं

1. 'बेङ्गळूरुनगरात् प्रकाशितं तदन्यदेव यत् भाष्यदीपिकाप्रकाशनसमित्या प्रकाशितम्।
2. ''युक्तेश्च' इति सूत्रं ज. पाठे 'ज्ञोऽत एव' इत्यधिकरणे वर्तते (२-३-१०-१८), परन्तु हृ. पाठे नास्ति, तद्वाक्यं भाष्यत्वेन पठ्यते (द्र० गो.टि. पृ.९७)। तथा 'दर्शनात्' इति प्र. पाठः (३-२-१७-३३), 'दर्शनात्तु' इति हृ. पाठः। 'आप्रायणात्' इति प्र.पाठः (४-१-७-१२), 'आप्रयाणात्' इति हृ. पाठ इत्यादि परिशिष्टे द्रष्टव्यम्।
3. अनुव्याख्याने 'द्वौ भूतसर्गौ भूपात्र' इति नयचन्द्रिकापाठः, 'द्विविधो भूतसर्गोऽत्र' इति अन्येषां पाठः। द्र० गो.टिप्पणी भाष्यपुस्तके पृ.१८२।

दोषावहः। तथापि सर्वेषां भाष्यपाठभेदानां समीचीनत्वाङ्गीकारे, तदनुसारेण सूत्रपाठेऽपि तथात्वप्रसङ्गेन तत्परिहाराय कः पाठः युक्ततर इति विचारणीयं विद्वद्भिः। यदि च सूत्रेषु पाठभेदास्सत्या इत्यङ्गीक्रियते तर्हि अद्वैतिनाम्, विशिष्टाद्वैतिनां चोपरि अपपाठकल्पनादिदोषापादनम् आनन्दतीर्थ-भगवत्पादानां टीकाकाराणां च अयुक्तं स्यात्, तथा च तथैव गीतादिष्वपि पाठभेदानां समीचीनत्वाङ्गीकारे तत्रापि दोषापादनं न युज्यते इति अवश्यविचारणीयता अस्य।

अत्रेदं विचारणीयम्। क्वचिदपि काले आचार्यहस्तलिखिता मातृका नावस्थानमलभत। प्रायश्शिष्यहस्तैरेव तैर्लेखितमिति मध्वविजयाद् अवगम्यते[1]। तत्र 'सत्यतीर्थ इह भाष्यमालिखत्' इत्युक्ता मातृकैव अतिप्राचीना इति निश्चप्रचमपि इदानीं तस्याः स्थितिः का इति केनापि न ज्ञायते। परन्तु पलिमारुमठे हृषीकेशतीर्थलिखितत्वेन परंपराप्राप्ता मातृका सुरक्षिततया[2] पूज्यते, यां चोपयुयुजिरे गोविन्दाचार्याः। उत्तरादिमठेऽपि पूजार्थमुपयुक्ता अतीव प्राचीना एका मातृका वर्तते, या च आचार्यैः पद्मनाभतीर्थानां सकाशे दत्ता, परन्तु निरन्तरसंचारेण तस्याः अतीव अन्तिमा दशा दृश्यते, कानिचन चूर्णान्येव दृश्यन्ते, नैव च पठितुं शक्यते इति इदानींतनोत्तरादिमठाधीशैः सत्यात्मतीर्थैः मम सकाशे उक्तम्। उडुपीनगरे अष्टसु मठेषु प्राचीनाः बहवः मातृकाः संरक्षिताः वर्तन्ते। परन्तु कियती तेषां प्राचीनता इति विचारणीयम्। एतासां साहाय्येन पाठनिर्धारणं शक्यते।

तथापि पाठभेदनिर्धारणे अतीवोपयुक्ताः व्याख्या एव। तत्र भाष्यपाठ-

---

1 'सत्यतीर्थ इह भाष्यमालिखत्' (९-१३), 'चतुरश्चतुरश्शिष्यान् लीलयाऽलेखयत्खलु' (१५-८९), 'स्थैर्यार्थं सपदि स लेखयांबभूव' (१६.४५) इति मध्वविजये। प्रायः आचार्यकाले एव भाष्यस्य बह्वयः मातृकाः तैस्तैर्विद्वद्भिः उपायुज्यन्त इति 'क्षणदासु विचक्षणस्स वीक्ष्य प्रचुरप्रज्ञमनोज्ञशास्त्रसारम्' (१३-६७) इत्यादिमध्वविजयाद् अवगम्यते।

2. परन्तु तस्याः तालपत्रमय्याः मातृकायाः इदानींतनपद्धत्यनुसारं संरक्षणार्थं तैलादिलेपनेन इदानीं स्थितिः अतीव क्षीणा वर्तते इति कर्णपरंपरया ज्ञायते।

निर्धारणे [1]तत्त्वप्रदीपिका, पद्मनाभतीर्थविरचितत्वेन प्रख्याता सत्तर्कदीपावळी, तत्त्वप्रकाशिका, तस्याः टिप्पण्ण्यः, वेदगर्भनारायाणाचार्यकृत भाष्यार्थमञ्जरी च अत्र उपयोक्तुं शक्यन्ते। अनुव्याख्यानपाठनर्धारणे च सन्यायरत्नावळी, नयचन्द्रिका, सुधा, सुधाटिप्पण्ण्यश्च उपयुज्यन्ते। तथा इदानीं शतद्वयवर्षप्राक्कालिकी जगन्नाथतीर्थवरचिता भाष्यदीपिका अपि बहून् पाठभेदानुल्लिखन्ती तन्निर्धारणे साहाय्यकमाचरेत्।

अत्र सुधादृतपाठः सु. पाठः, जयतीर्थादृतपाठः ज. पाठः, हृषीकेशतीर्थादृतः पाठः हृ. पाठः, वेदगर्भनारायणाचार्यादृतः वे.पाठः, प्रभञ्जनाचार्यप्रकाशितपुस्तकस्थः अक्षोभ्यतीर्थीयत्वेनोक्तः पाठस्तु वस्तुतः रामचन्द्रतीर्थीयत्वात् रा.पाठः, कुम्भकोणनगरमुद्रितसर्वमूलपुस्तकानुसारिभाष्य - पाठः अनुव्याख्यानपाठश्च प्र.पाठः इति चिह्निताः।

अत्र च गोविन्दाचार्यैः प्रायः पञ्चाशद्वर्षाणि निरन्तरमिदमेव शृणुमो यद् प्रचलितपाठः सुधादृतपाठश्च बहुदोषयुक्तत्वात् अग्राह्यः, किन्तु प्राचीनमातृकानुसारी तत्त्वप्रदीपानुसारी च हृ. पाठ एव स्वीकार्य इति। सत्यमेव प्र. पाठे बहुदोषास्सन्तीति, ये च कालक्रमेण सर्वत्रापि मातृकापरम्परायाम् अवश्यभाविनः, ये च दोषाः सूक्ष्मतया टीकाटिप्पण्ण्यादिदर्शिभिः विद्वद्भिः परिहर्तुं शक्यन्ते एव। परन्तु सर्वेषामपपाठानां मार्जने न क्षमाः टीकाः

---

1. एते पद्मनाभतीर्थाः अस्मत्पूर्वजाः आचार्याणां साक्षाच्छिष्याः सन्यायरत्नावळी-सत्तर्कदीपावळीति ग्रन्थद्वयकर्तारः। तत्त्वप्रदीपिकाराः त्रिविक्रपण्डिताचार्याः आचार्याणां साक्षाच्छिष्याः। नयचन्द्रिकाकर्तारः नारायणपण्डिताचार्याः आचार्याणां साक्षाच्छिष्यत्रि विक्रपण्डिताचार्यशिष्याः। नयचन्द्रिकायां नारायणपण्डिताचार्यैः 'सन्यायरत्नावलयः सन्यायामृतबिन्दवः। श्रीमत्तत्त्वप्रदीपाश्च सन्तु नश्शरणप्रदाः॥' इति उल्लिखितः सन्यायामृतबिन्दुपदोक्तः ग्रन्थः कः इति न ज्ञायते। या कापि प्राचीनटीका स्याद्वा। अथ वा लिकुचशंकराचार्यकृता न्यायविवरणसंबन्धदीपिका तथोक्ता स्यात्। सुधाकर्तारस्तु अक्षोभ्यतीर्थशिष्याः तत्त्वप्रकाशिकाकर्तारश्च। वेदगर्भनारायणाचार्यास्तु रघूत्तमतीर्थपरमगुरुरघुनाथतीर्थानां शिष्याः प्रायः सार्धचतुश्शतवर्षप्राक्कालिकाः।

टिप्पण्यश्च प्रायष्टिप्पणीनां टीकाव्याख्यानपरत्वात्, टीकानां च सुधादीनां प्रतिपदव्याख्यानरूपत्वाभावात्। वेदगर्भीया टीकैव प्रतिपदव्याख्यारूपा वर्तते इति कृत्वा सात्रोपयुज्यते। परन्तु हृषीकेशतीर्थीयपाठस्य कियता अंशेन ग्राह्यत्वमित्यत्रैव विप्रतिपत्तिः। अनेकत्र तत्त्वप्रदीपिकादृतपाठापेक्षया भिन्नत्वात्[1], बहुत्र जयतीर्थीयटीकादृतपाठापेक्षया भिन्नत्वात्। जयतीर्थैः अष्टादशानाम् आचार्यकृतग्रन्थानां टीकाः रचिताः। तत्र तैः कीदृशः पाठ आदृतः सः न त्यक्तुं शक्यते, स अवश्यं मूलपाठत्वेनैव स्वीक्रियते। अन्येषां ग्रन्थानां विषये अस्तु वा हृ. पाठस्यादरः, कथमंत्र, यत्र प्राचीनमूलकोशाधृत-जयतीर्थीयटीकाव्याख्यानसंप्रदायः जागरूकः।

तत्र सूक्ष्मतया विचार्यमाणे सति, सूत्रभाष्ये दृश्यमानाः पाठाः केचन हृ. पाठानुवर्तिनः दृश्यन्ते, तथापि न सर्वांशेन हृ.पाठानुवर्ती प्र. पाठः। यतः सूत्रभाष्ये तत्त्वप्रकाशिकायाः प्रतिपदव्याख्यारूपत्वाभावात् बहुत्र टीकादृतः पाठः क इति न निश्चीयते। परन्तु अनुव्याख्याने सुधायाः प्रतिपदव्याख्या-रूपत्वात् तत्र अनुव्याख्यानपाठः कः इति प्रायः सर्वत्र ज्ञायते एव। तत्र गोविन्दाचार्यैः यत्र यत्र अनुव्याख्याने प्र.पाठस्य हृ.पाठस्य च वैलक्षण्यं वर्तते अत्र तत्सर्वं निर्दिष्टम्। तेषां स्थलानां, तत्र सुधादृतपाठस्य च परीक्षणे सुधासंमताः हृ.पाठाः प्रतिशतम् अष्टादशैव भवन्ति। अन्यत्र प्रतिशतं विंशतिस्थलेषु न निर्णेतुं शक्यते, अन्यत्र च प्रतिशतम् अष्टषष्टिस्थलेषु सुधायाः पाठाः हृ. पाठापेक्षया भिन्नाः दृश्यन्ते[2]। तथैव सूत्रभाष्येऽपि अनेकत्र तत्त्वप्रकाशिकादृतपाठाः हृ. पाठापेक्षया भिन्नाः दृश्यन्ते। तस्मात् 'तदनेन येऽत्र एतादृशपाठभेदा उल्लिखिताः हृषीकेशतीर्थजयतीर्थयोः, हृषीकेशतीर्थपण्डिताचार्ययोर्वा,

---

1. तत्संख्याः भाष्ये प्रथमाध्यायप्रथमपादे दर्शिताः अत्र । अनुव्याख्याने सर्वे अपि सुधाविरुद्धाः पाठाः प्रदर्शिताः परिशिष्टे।

2. द्र० परिशिष्टम्। अनुव्याख्याने आहत्य २८० हृ. पाठभिन्नेषु प्र. पाठेषु सुधासंमतपाठाः ५०, अनिर्णीताः पाठाः ८५, प्रायः अन्ये पाठाः केवलं पदयांः पूर्वापरीभावादयः, च-तु-हि-शब्दभेदाः इत्यादिरेव।

वस्तुतस्तत्र पाठभेद एव नास्ति, स्वकपोलकल्पितबालिश तर्कमूलोऽयं भेद इति सर्वे व्याख्याता व्याख्याता' इति गोविन्दाचार्यवचनं[1] विद्वदुपेक्षामर्हति इति अतिरोहितमेव एतत्पठितॄणाम्।

किंच जयतीर्थैः आचार्यरचितेषु विभिन्नेषु ग्रन्थेषु प्रायः पञ्चदशासु स्थलेषु पाठभेदाः निर्दिष्टाः। यत्र च पाठभेदाः सन्ति ते तैरुल्लिखिताः। ते च समग्रे अनुव्याख्याने षट्, गीताभाष्ये पञ्च, गीतातात्पर्ये एकः, विष्णुतत्त्वनिर्णये एकः, प्रमाणलक्षणे एकः, इति केवलं पञ्चदशैव[2]। एतेन संशीयते केवलं जयतीर्थकाले तावन्त एव पाठभेदाः आसन्, कालक्रमेण च परिवृद्धा इति। जयतीर्थैः अनुव्याख्यानादौ अल्पतरा अपि पाठभेदा उल्लिखिताः। यदि च इतोऽप्यधिकतया तत्र पाठभेदा अभविष्यन् नूनमेव तैः उदलेखिष्यन्त। नोल्लिखिताः, तस्मान्नासन्निति। तत्र च आहत्य पञ्चदशपाठेषु नव पाठाः ह. पाठे दृश्यन्ते।

किंच अनेकत्र ह. पाठस्यायुक्तता वर्तते इति स्वयं गोविन्दाचार्यैः[3], तथा हयवदनपुराणिकमहाशयैः[4], बाळगारु रुचिराचार्यैश्च[5] प्रदर्शितम्। किंच हृषीकेशतीर्थीयेऽपि कानिचन पत्राणि गलितानि[6]। गीताभाष्यं नोपलब्धम्, ऋग्भाष्यं कर्मनिर्णयापराख्यः खण्डार्थनिर्णयश्च तथा। भागवततात्पर्यं तथा। कृष्णामृतमहार्णव-तन्त्रसारसंग्रह-यतिप्रणवकल्प-जयन्तीनिर्णय-

1. एतस्य निबन्धस्य विषये तैः लिखिते पत्रे।
2. द्र० परिशिष्टे।
3. द्र० सूत्रभाष्ये गोविन्दाचार्यटिप्पणी। तत्र तत्र मूलकोशे स्खलनसंभावना दर्शिता। यथा पृ. ७, १०, २२,३८, ५४,७७,१०४,१२९, १३५, १५२, १६०, १६२, १६४,१७४, १७६, १८०, २१४, २१५, २१७, २२२, २२५, २२७।
4. द्र० हयवदनपुराणिकानाम् अप्रकाशितं पत्रम् एतद्विषये। तैः बहुत्र स्थलेषु कथं ह. पाठोऽयुक्त इति कर्मनिर्णयादिषु दर्शितम्।
5 द्र गीताभाष्ये प्रमेयदीपिकासहिते तत्प्रकाशिते (२००२) पृ. ४८५-६।
6 हृषीकेशतीर्थीये कुत्र कुत्र पत्रं गलितमिति स्पष्टतया न ज्ञायते। तथापि गो. टिप्पणीभिः क्वचित् स्थलेषु तथा ज्ञायते। यथा सू. भाष्ये १३५, १६२, १९१,२२७ एतेषु पृष्ठेषु।

न्यासपद्धति-तिथिनिर्णायाख्याश्चाचारग्रन्था नोपलब्धाः। तत्र तैः अन्य-मातृकाधारेण पाठनिर्णयः कृतः। तत्र कथं मूलपाठनिर्णयः इति विचारणीयम्।

तथा अनेकत्र ह. पाठे भिन्नपाठता दृश्यते। 'प्रमाणं निर्णयाय स्युः' इति अनुव्याख्याने पठितमेव वाक्यं 'प्रमाणनिर्णयाय स्युः' इति कथालक्षणे पठ्यते। तथा 'आदनासः' इति अनुव्याख्याने (पृ.१७६), 'आदघ्नासः' इति पठ्यते बृहद्भाष्ये (पृ. २६५)। वकार- बकारयोश्चायं भेदः स्फुटतरः, 'हरेरनुव्रताः' इत्यनुव्याख्याने (पृ.२०४), 'हरेरनुब्रताः' इति बृहद्भाष्ये (पृ. २६०), छान्दोग्यभाष्ये च (पृ.३४१)। अत एव वकार - बकारयोः भेदोऽत्र न परिगणितः, यथा 'बाह्यं बाहकमित्यपि ' इति अनुव्याख्याने (पृ. ९), तथा लकार-ळकारयोरपि, मात्रयापि अर्थभेदाकरणात्।

किंच अत्र प्रदर्शयिष्यमाणरीत्या प्रायः अनेकत्र स्थलेषु ह. पाठः तत्त्वप्रदीपादृतपाठापेक्षया भिन्नो वर्तते, ततोऽप्यधिकस्थले जयतीर्थादृत-पाठापेक्षया भिद्यते इति यत्र प्राचीनटीकासाहाय्येन तदादृतपाठो निश्चेतुं शक्यते, तत्र प्राचीनमूलकोशाधृतटीकादृतपाठभिन्नत्वात् टीकानुयायिनां जयतीर्थादृतपाठ एव ग्राह्यः। यत्र तु प्र. पाठे अयुक्तता वर्तते इति निश्चितं भवेत्, तत्र प्र. पाठत्यागस्यावश्यकत्वेऽपि अन्यत्र ह. पाठ एव मूलपाठ इत्युद्घोषणं निरर्थकमेव, जयतीर्थादृतपाठस्यापि मूलकोशाधृतत्वेन मूलपाठत्वात्।

तत्र तत्त्वप्रकाशिका तत्त्वप्रदीपिकानुवर्तिनी स्थलद्वये त्रिविक्रम-पण्डिताचार्यान् संप्रदायवित्त्वेन उल्लिखति। यथा 'अत एव प्राणः' इति सूत्रे, 'धृतेश्च महिम्नः..' इति च सूत्रे[1]। तत्र च तत्त्वप्रदीपिकां विहाय अन्यः व्याख्यासंप्रदायः नास्ति सूत्रभाष्ये, पद्मनाभतीर्थीयग्रन्थस्य संदेहग्रस्तत्वात्। तस्मात् तत्त्वप्रकाशिकायाः तत्त्वप्रदीपिकापूरकत्वेन तदनुकूलत्वात् प्रायः तदीयविषयाः तत्त्वप्रदीपस्थाननुकुर्वन्ति। अत एव यत्र तत्त्वप्रकाशिका दीर्घं

1. ब्र.सू. १-१-९-२२, १-३-५-१६।

भाष्यस्थं श्रुतिवाक्यमुपादत्ते तद्वाक्यं श्रुतिस्थत्वेन तत्त्वप्रदीपानुमतमेवेति अनुमीयते[1] ।

1. तत्र तत्त्वप्रकाशिकायाः तत्त्वप्रदीपस्य च क्वचित्स्थले विरोधाभासपरिहारस्तु एवम् यथा 'अत एव प्राणः' इत्यत्र श्रीलक्ष्मीभेदनिरूपणप्रसङ्गे टीकायां 'वक्षःस्थलाश्रिता श्रीः इति संप्रदायविदः' इत्युक्तेऽपि तत्र तत्त्वप्रदीपानुरोधेन 'वक्षसि लक्षणभूता लक्ष्मीः, अङ्काश्रिता श्रीरिति संप्रदार्थाविदः' इति भाव्यम्, अन्यथा टीकावाक्यस्यैव अपूर्णत्वापत्तिः। श्री लक्ष्म्योः भेदस्य वक्तुमुद्यतटीकायां केवलं श्रिय एवं स्वरूपकथनात्। तत्र उल्लिखितसंप्रदायविदोऽपि तत्त्वप्रदीपकारा एवेति च स्पष्टम्। तस्मात् नास्ति तत्त्वप्रदीप-तत्त्वप्रकाशिकयोर्विरोध इति विभावनीयम्। परन्तु सर्वत्र व्याख्यासु 'वक्षःस्थलाश्रिता श्रीः इति संप्रदायविदः' इति वाक्यस्यैव व्याख्यानं वर्तते। तदेतत् विचारणीयं पुरतः।

एवं स्थितौ तत्त्वप्रदीपतत्त्वप्रकाशिकयोरवलोकनेन बहुत्र भाष्योदाहतश्रुतिवाक्यानि दीर्घानि दृश्यन्ते, यानि ह्. पाठे ह्रस्वानि दृश्यन्ते। तत्त्वप्रकाशिकायां दीर्घस्य पाठस्य व्याख्यानं यथा 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इति प्र. पाठः । ह्. पाठे तु 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्' इतिपर्यन्तमेव पठ्यते। उत्तरः सर्वोऽपि भागो न पठ्यते। अत्र तत्त्वप्रकाशिकायां 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इति पर्यन्तमपि श्रुतिः व्याख्याता, समित्पाणिः इत्यादिश्चोत्तरभागो न व्याख्यातः। 'नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इति श्रुतिभागस्य व्याख्यानरूपा त.प्र.एवम् - 'स च मोक्षादितरत्र निर्विण्णो विज्ञानार्थं गुरुमेवाभिगच्छेत्। यस्मान्नित्यपुमर्थो मोक्षः कर्मादिना न सिध्यति तस्मादित्यर्थः। अत्रापि विज्ञानपदेनोत्तमाधिकारित्वं सूचितम्' इति। अत्र च टीकायां स्पष्टतया भाष्योदाहता श्रुतिपङ्क्तिः व्याख्याता दृश्यते। तदुत्तरश्च 'समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इति भागः टीकायां न व्याख्यातः इति स नास्ति भाष्ये, परन्तु 'अत्रापि विज्ञानपदेनोत्तमाधिकारित्वं सूचितम्' इति टीकया 'विज्ञानार्थम्' इत्यादिपदानि भाष्ये वर्तन्ते इति तु स्पष्टमेव। यतः 'अत्रात्मनीत्युक्त्या मध्यमाधिकारित्वं सूचितम्' इति पूर्वटीकायां भाष्यस्थात्मनि पदेन मध्यमाधिकारित्वसूचनस्य पूर्वत्र व्याख्याततया, तत्सहपठताया एतट्टीकाया अपि भाष्यस्थ विज्ञानार्थम्' इति पदव्याख्यानरूपताया वाच्यत्वात्। तदेवं पूर्णा श्रुतिः ह्. पाठे नास्ति, ज. पाठे तु वर्तते।

भाष्येऽविद्यमानमपि पदं प्रकृतार्थसमर्थनाय टीकायां व्याख्यातम् इति गोविन्दाचार्यपक्षस्तु 'अत्रापि विज्ञानपदेनोत्तमाधिकारित्वं सूचितम्' इति टीकया अपहस्तितः। न हि भाष्येऽपठितेन विज्ञानपदेनोत्तमाधिकारित्वं सूचयितुं शक्यते।

तस्मात् जयतीर्थादृतः मूलपाठः, तदीयमूलकोशश्च अन्य एव, हृ. पाठस्तु तेषां न मूलपाठः इति निर्णीयते। हृ. पाठोऽपि साक्षादाचार्यशिष्यलिखितत्वात् प्रमाणमेव। तथापि न सः जयतीर्थानां संमतः पाठः इति परिशिष्टावलोकनं न स्पष्टम्। तत्र हृ.पाठ- ज.पाठयोः तादृशपाठभेदानां कारणम् आचार्यैरेव कालान्तर अन्यथा अन्यथा प्रसङ्गानुसारेण व्याख्यानमेव भवेत्। सर्वथा न

---

'आत्मनीत्युक्त्या' इति पूर्वटीकाया इव अत्रापि भाष्यस्थविज्ञानपदेन तत्सूचितम् इत्येव तदर्थः ग्राह्यः इति पूर्वमेवोक्तत्वात्। भाष्येऽपठितेनापि श्रुतिस्थेन तत्सूचनं चेत् बहवोऽर्थाः भाष्येऽपठितैः श्रुतिस्थैः पदैः सूचिता भवेयुः किं विज्ञानपदेन उत्तमाधिकारित्वमात्रम् इत्यादिप्रश्न-समाधानाक्षमतया परास्तम्।

तत्त्वप्रदीप-हृ.पाठयोः पाठभेद एव नास्तीति गोविन्दाचार्यवचनं तु भेदाभाव-प्रदर्शनेन विना साहसिकं स्पष्टतया व्याख्यायन्ते वचनानि तत्त्वप्रदीपे, न तानि भाष्यस्थानि किन्तु प्रकृतार्थसमर्थनाय तत्त्वप्रदीपकारैरेव व्याख्यातानि इति वचनस्य नास्त्यूहं विना अन्यन्मूलम्।

अथ चिन्त्येत। 'स्वाप्ययात्' इति सूत्रे 'पूर्णमदः पूर्णमिदम्' इत्येव हृ. पाठः। समग्रः श्लोकस्तु तत्त्वप्रकाशिकायां तत्त्वप्रदीपे च व्याख्यातः। तथापि नायं तत्त्वप्रदीपसंमतः पाठः। यदि संपूर्ण वाक्यं भाष्ये उदाहृतं भवेत् तर्हि तत्त्वप्रदीपे पुनः तस्य समग्रश्लोकस्य पठनं व्यर्थमापद्येत इति। तस्मात् भाष्ये आदिभाग एवोपात्तः, तत्त्वप्रदीपे तु व्याख्या-सौकर्यायैव समग्रोऽपि भागो उपात्तः, व्याख्यातश्च। तस्मात् तत्त्वप्रदीग-हृ.पाठयोः पाठभेद एव नास्तीति।

तत्रेदं प्रतिचिन्त्यते। यद 'पूर्णमदः पूर्णमिदम्' इत्येतावदेव भाष्यम्, न तु पूर्णं, तदा भाष्यस्य उद्देश्यमेव न सिध्येत्। 'स्वाप्ययात्' इति सूत्रव्याख्यानाय खलु प्रवृत्तमिदं भाष्यं स्वाप्ययप्रदर्शनाय 'पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते' इति श्रुतिवचनं यदि नोपादद्यात् तर्हि व्यर्थमेव भविष्यति। अयं चाचार्यक्रमः सर्वत्रापि दृश्यते, यः यद्यपि लघु भाष्यम्, तथापि यावत्प्रतिपादयितुमिष्टं तत्प्रतिपादनाय तावन्तं श्रुतिभागमुपादत्ते इति। तत्त्वप्रदीपे तु भाष्योपात्तस्यापि श्रुतिभागस्य पुनरुपादानम् अनेकत्र दृश्यते। यथा 'अतश्चायनेऽपि दक्षिणे' इति सूत्रे (४-२-९-२१) भाष्य उपात्तोऽपि 'महर्लोकादिगन्तारः' इति श्लोकः पुनः पठितः। तथा 'तन्निर्धारणार्थनियमस्तदृष्टेः..' इति सूत्रे (३-३-२५-४३) 'श्रुत्वा मत्वा' इत्यादिनातर्कवचनं च। तस्मात् तत्त्वप्रदीपशैली एव सा इति निश्चयेन नानेन तस्य भाष्यस्थत्वबाधः।

तेषामर्थभेदकारणता। ये च अर्थभदकारिणः पाठभेदाः सूत्रेषु वा भाष्ये वा तेषां तु निर्णयः कर्तुं शक्यते एव।

ज.पाठ-हृ.पाठयोः विप्रतिपत्तिस्थानानि कानिचनैव भवन्ति। यथा अनुव्याख्याने आहत्य २८० हृ. पाठभिन्नेषु प्र.पाठेषु सुधासंमतपाठाः ५०, अनिर्णीताः पाठाः ८५, प्रायः अन्ये १४५ पाठाः केवलं पदयोः पूर्वा-परीभावादयः, च-तु-हि-शब्दभेदाः इत्यादिरेव। तस्मात् वस्तुतः तत्र सु. पाठ-हृ.पाठयोर्विरोधो नास्ति। केवलं क्वचित् सूत्रपाठे, अन्यत्र च क्वचित् विरोधो वर्तते। तत्र विरोधशान्तिप्रकारः एवं चिन्त्यते। तद्यथा

**'भेद एव गवाश्वयोः'**

'ऐक्यप्रतीत्यभावेन भेद एव गवाश्वयोः' इति अनुव्याख्याने प्र.पाठः। अत्र च सुधायाः मुद्रितपाठे एवम् 'गवश्वयोरिति प्रमादपाठः। मूलकोशेष्व-दर्शनात्' इति।

अत्र च शेषवाक्यर्थचन्द्रिकानाम्नी सुधाव्याख्या एवम् गवाश्वयोरिति। न च 'गवाश्वप्रभृतीनि' च इति सूत्रे 'प्रभृतीनि' इति शब्दरूपापेक्षनपुंसकनिर्दे शानुरोधेन गणपाठे यादृशानि शब्दरूपाणि पठितानि तादृशानां साधुत्व-मात्रस्यात्र विधानात् गणे च गवाश्वप्रभृतीनां शब्दरूपाणां कृतावङादेशानां कृतैकवद्भावानामेव च पठितत्वेन गवाश्वमित्येव भाष्यतट्टीकयोर्वक्तव्यत्वात् गवाश्वयोरित्यकृतैकवद्भावप्रयोगः कथमिति वाच्यम्। गणपाठे पठितशब्द-रूपाणां कृतैकवद्भावत्वस्य प्रायिकत्वेन, कृतावङादेशत्ववत्तस्यानियततया तथाप्रयोगसंभवात्। अत एव

> **अथासत्यपि सामान्ये स्यादपोहस्य कल्पना।**
> **गवाश्वयोरयं कस्मादगोपोहो न कल्यते ॥[1]**

1. श्लो वा अपोहवादे श्लो.७६ । परन्तु इदानीम् मुद्रितव्याख्यासु (न्यायरत्नाकरे शर्करिकायां च ) तादृशं समर्थनं नोपलभ्यते। काशिकायां तथा समर्थनाभावेऽपि द्विवारं गवाश्वयोः इति शब्दप्रयोगो दृश्यते (श्लो, ६९, ७६ अडयारस्थमातृकायाः मम सकाशे विद्यमानप्रतिकृतौ)।

इत्यपोहवादश्लोकवार्तिकस्थप्रयोगस्तट्टीकाकृता तस्य प्रायिकत्वाभ्युप-गमेन समाहितः इति द्रष्टव्यम्[1] ।

अत्र हृ. पाठे 'ऐक्यप्रतीत्यभावेन भेद एव गवश्वयोः' इति पाठः । अत्र च पादटिप्पण्यां गोविन्दाचार्यैः एवं लिखितम् यद्यपि सुधायां 'गवश्वयोरिति प्रमादपाठः । मूलकोशेष्वदर्शनात्' इति पठ्यते । तदनुसारेण च 'गवाश्वयोः' इत्येव मूलपाठ इति प्रतीयते। किन्तु श्रीहृषीकेशतीर्थीये मूलकोशे अधोक्षजतीथयसंप्रदायानुसारिणि पेजावरमठीये प्रतनतरे च मूलकोशे, तदन्येषु च सर्वेषु कोशेषु 'गवश्वयोः' इत्येव पठ्यते । न क्वापि 'गवाश्वयोः' इति । तेन चायमेव मूलपाठ इति निश्चीयते । तदनुसारेण च 'गवाश्वयोरिति

1. 'शे. वा. चन्द्रिकायाः शेषस्त्वेवम् यद्वा गौश्चाश्वश्च इति गवाश्वशब्दद्वन्द्वस्य कृतावङादेशस्य कृतैकवद्भावस्य साधुताया अनेन विधानात् तादृशद्वन्द्वपक्षे गवाश्वयोरित्यस्यानुपपत्ति-प्रसक्तावपि गवाश्वं च गवाश्वं च गवाश्वे इति गवाश्वशब्दद्वन्द्वस्य अनेन तथाऽसाधुत्वाविधानात् घटयोरितिवत् गवाश्वयोरिति निर्देशस्योपपन्नत्वात् । गवश्वयोरिति पाठस्य प्रमादागतत्वे युक्तिमाह- मूलकोशेष्विति । उपलक्षणं चैतत् । 'अवङ् स्फोटायनस्य' इति यदा अवङ् न प्रवर्तते, तदा 'एङः पदान्तादति' इति पूर्वरूपप्रसङ्गेन पशुद्वन्द्वविभाषया गोऽश्वस्य गोऽश्वयोः इत्येव, 'सर्वत्र विभाषा गोः' इति प्रकृतिभावपक्षे गोअश्वस्य, गोअश्वयोः इत्येव प्रयोगप्रसङ्गेन अवादेशमाश्रित्य तथा पाठस्यासंभवदुक्तिकत्वादित्यपि द्रष्टव्यम् । – इति व्याख्यातम् ।

श्रीनिवासतीर्थीयनाम्नि सुधाव्याख्याने ● ननु कथं प्रामादिकत्वम् । गो अश्व इति स्थिते ओकारस्यावादेशे गव् अश्व गवश्व इति भविष्यतीति चेत् सत्यम्। विशेष विधानपर्यालोचनया एतत्पाठस्य प्रामादिकत्वम् । तथा हि 'अवङ् स्फोटायनस्य' (अचि परे गोः अवङ् वा स्यात्) गो अग्रं गवाग्रम् इति दर्शनात् । प्रकृतेऽपि गो अश्व इति स्थिते अचि परे गोरवङादेशे ङकारलोपे गव अश्व इति जाते अकः सवर्णदीर्घे 'गवाश्व' इति रूपसिद्धिः । न च गोः अवङादेशस्य विकल्पविधानात् गवश्वमित्यपि भविष्यतीति कथं प्रामादिकत्वमिति वाच्यम् । स्वमते विकल्पत्वेऽपि स्फोटायनमते तु तस्य नित्यत्वमेवेति न दोषः इति व्याख्यातम् । परिमळनाम्नि सुधाव्याख्याने एवम् – यथाश्रुतमूलानुवादेन वा मुले तु व्यत्ययो बहुलम् इति समाधिः प्रागुक्तो ज्ञेय इति भावः गवाश्वप्रभृतीनि च इत्येकवद्भावमनाश्रित्य (वा?) गवाश्वयोरित्युक्तम् । इति व्याख्यातम् ।

प्रमादपाठः। मूलकोशेष्वदर्शनात्' इत्येव सुधापाठः संभाव्यते। क्वचिच्च मुद्रिते पुस्तके तथैव पाठो दृश्यते।

ननु तर्हि कथं 'गवश्वयोः' इति। 'गवाश्वप्रभृतीनि' इति किल पाणिनिरभाणीत्। मैवम्। नायं 'गवाश्वप्रभृतीनि' इति सूत्रस्य विषयः यद् 'गवाश्वयोः' इति। यतस्तत्रैकवद्भावोऽभिमतः। तथा हि पतञ्जलिः- 'गवाश्वप्रभृतिषु यथोच्चारितं द्वन्द्ववृत्तं द्रष्टव्यम्। गवाश्वम्, गवाविकम्, गवैडकम्' इति। कैयटोऽप्याह - 'गणे यादृशाः पठितास्तादृशानामेवेदं कार्यमेकवद्भावलक्षणं भवति' इति, 'एतेन गणपाठरूपं विवक्षितमित्युक्तं भवति' इति च। यदि चात्र विभाषा स्यात् तदा 'अवङ् स्फोटायनस्य' इत्यनेनैव रूपसिद्धौ 'गवाश्वप्रभृतीनि' इति पुनर्योगकरणमेव व्यर्थं स्यात्। तेन पाणिनिमतानुसारेण 'गवाश्वयोः' इति द्विवचनं दुरुपपादमेव।

नन्वस्तु। तावता 'गवश्वयोः' इति कथम्? । गवय इति यथा तथा तद्वत् सेत्स्यति। गां सादृश्येनायते इति हि नैरुक्ताः निर्वदन्ति । गामञ्चतीति गवचि इत्यपि। 'एङः पदान्तादति' इति पूर्वरूपमपोद्य यथा तत्राव् भवति तद्वदत्रापि।

ननु का गमनिका। व्याकरणान्तरमिति ब्रूमः। तथा हि सारस्वतं व्याकरणं 'गवादेरवर्णागमोऽक्षादौ वक्तव्यः। गवाक्षश्च गवेन्द्रश्च गवाग्रं च गवाजिनम्। स्वैरमक्षौहिणी प्रौढ एते प्रोक्ता गवादयः।।' इति। एतेन ज्ञायतेऽक्षेन्द्राग्राजिनेष्वेव अवर्णागमो भवति, नाश्वादाविति। तेनैतद्रीत्या 'गवश्वयोः' इत्येव भवति, न 'गवाश्वयोः' इति। अक्षौहिणी इत्यत्राप्यवर्णागममनभ्यनुजानता भगवता आचार्येण तात्पर्यनिर्णयादौ सर्वत्र अक्षोहिणी इत्येवासकृत् प्रायुज्यत इत्यप्यत्र स्मर्तव्यम् - इति गोविन्दाचार्यैः प्रतिपादितम्।

परन्तु तन्न समीचीनम्। तथा हि सारस्वतव्याकरणरीत्यापि 'गवाश्वौ' इत्येव रूपम्। तत्रैतत्कारणम्'इतरेतरयोगे द्विवचनम्' इति सारस्वतं वचनम् (का.सं. सी. पृ. २४९)। तथा अन्यत्रापि सारस्वते 'यत्र द्वित्वं बहुत्वं च

स द्वन्द्व इतरेतरः। समाहारः स विज्ञेयः यत्रैकत्वं नपुंसकम्॥' इति (हृ. सं.सी.पृ.८०)। तस्मात् यत्र समाहारद्वन्द्वः तत्रैव एकवद्भावो भवति। यत्र तु इतरेतरद्वन्द्वः तत्र द्वित्वं वा बहुत्वं वा अभिमतम्। अत्र च 'गवाश्वयोः' इत्यस्य इतरेतरयोगद्वन्द्वत्वात् द्विवचनमेव सारस्वतव्याकरणरीत्या । पाणिनिरीत्यापि अत्र द्विवचनमेवेति उपरिष्टाद्वर्तमानश्रीवत्साङ्काचार्यलेखेन ज्ञायते।

किंच सारस्वतव्याकरणे यद्यपि 'गवादेरवर्णागमोऽक्षादौ वक्तव्यः। गवाक्षश्च गवेन्द्रश्च गवाग्रं च गवाजिनम्। स्वैरमक्षौहिणी प्रौढ एते प्रोक्ता गवादयः।।' इत्युक्तं, तथापि गवाक्षादिपदानामुपसंख्यानत्वात् गवाश्व-पदेऽपि अवर्णागमो भवत्येव[1]। तथा हि तत्र प्रसादव्याख्या (का.सं. सी. पृ. ४३) - वस्तुतस्तु वक्तव्यत्वात् वाशब्दाद्वा गवाक्षः गवेन्द्रः इत्यत्र नित्यम्। गवेशः गवीशः इत्यत्र वा (विकल्पेन इत्यर्थः)। गोऽग्रे, गोऽजिनम् इत्यत्र न, किन्तु 'एदोतोऽतः' इति अवर्णलोपः। गोअग्रं, गोअजिनम् इति प्रकृतिभावोऽपि। प्रौढ इत्यत्र अवर्णागमस्य बहिरङ्गेणापि प्रथमं सन्धिविधान -सामर्थ्यात् नित्यत्वाच्च। प्रौढः, प्रौढिः। भारौहः। स्वैरम्। स्वैरिणी। अक्षौहिणीत्यादयः प्रयोगतोऽनुगन्तव्याः इति। तेन यद् गोविन्दाचार्यैरुक्तं सारस्वतव्याकरणे गवाग्रादिषु क्वचिदेव अवर्णागमः न तु गवाश्वादौ, तेन 'गवश्वयोः' इति रूपसिद्धिरिति तत् सारस्वतव्याकरणानवगममूलकमिति निश्चीयते[2]।

1. अवर्णागमः इति न अवर्णरूप आगमः, किन्तु अवर्णस्य आगमः। स्वैरम् इत्यादिषु ऐकारागदर्शनात्। तथा गवाश्वयोः इत्यत्र अकारागमः।
2. अत्रेदमवधेयम्।सारस्वतव्याकरणभूमिकायां यद्यपि तत् व्याकरणं क्रि.श.पञ्चमशताब्दीयेन अनुभूतिस्वरूपाचार्येण रचितमिति लिखितम्, तथापि तत्र मम संशय एव। अस्य च व्याकरणस्य संस्करणद्वयं वर्तते। प्रथमं काशीसंस्कृतसिरीस् १११, अपरं हरिदास-संस्कृतसिरीस् ४ इति। तत्राद्ये चन्द्रकीर्ति-प्रसादनामकं व्याख्याद्वयं मनोरमाटिप्पणी च न्यवेशयन्त। अपरस्मिन् तु लघुपुस्तके केवलं मूलं लघुटिप्पणी लघुहिन्दी अनुवादश्च वर्तेते। द्वितीयपुस्तकावलोकनेन तु गवाक्षादिपदानामुपलक्षणता न ज्ञातुं शक्यते, तस्मात्

किं च अत्रैव वैयाकरणमूर्धन्यानां वेंकटराजशर्मणां श्रीवत्साङ्काचार्याणां महाबलेश्वरभट्टानां च अभिप्रायः परिशिष्टे निवेशितः। तत्र च आद्यद्वये 'गवाश्वयोः' इति प्रयोगस्य साधुतैव समर्थिता। अन्त्ये च यद्यपि नास्य साधुत्वं समर्थितं, तथापि आद्यद्वयप्रदर्शितरीत्या तत्साधुत्वं शक्यनिश्चयमेव। गोविन्दाचार्याशयविषये तु अन्त्येऽपि स्पष्टमेव।

तस्मात् वस्तुतः अनुव्याख्याने 'गवाश्वयोः' इत्येव पाठः, 'गवश्वयोः' इति तु पाठः प्रमादगलितः इति।

## क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्

'क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्' (१-३-९-३५) इति प्र. पाठः । 'क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्' इति ह. पाठः। तत्त्वप्रदीपे तु सूत्रप्रतीकग्रहणे 'क्षत्रियत्वगतेः' इत्येव वर्तते। परन्तु ह.पाठेऽपि 'क्षत्रियत्वा वगतेश्च' इति भाष्यवचनात् भवति सन्देहः। सूत्रानुसारिणा हि भाष्येण भाव्यम्। तत्त्वप्रकाशिकायां न स्पष्टम्।

## एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः

'एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः' (२-१-४-१३) इति प्र. पाठः। 'एतेन शिष्टाऽपरिग्रहा अपि व्याख्याताः' इति ह.पाठः । अत्र मायावादिभिः 'शिष्टापरिग्रहाः' इति पाठमङ्गीकृत्य शिष्टैः अपरिग्रहः = न परिगृहीताः इति व्याख्यानं कृतम्। तच्च अनुव्याख्याने सुधायां च निरस्तम्।

तत्र यदि 'शिष्टा अपरिग्रहाः' इत्येव सूत्रपाठः जयतीर्थाभिमतः स्यात् तदा 'शिष्टापरिग्रहाः' इत्यपपाठकल्पनं मायावादिनामुपरि आरोपितं भवेत्। न चैवम्। तस्मात् 'शिष्टाऽ परिग्रहाः' इत्येव सूत्रपाठः। तदर्थश्च शिष्टाः अपरिग्रहाश्च इति। अनया च परम्परया प्र. पाठः प्रारब्धो भवेत् इत्यनुमीयते।

तदवलोकनपूर्वकं गोविन्द ।चार्याणामेतल्लेखनं स्यादिति मन्ये। परन्तु सारस्वतव्याकरणे 'प्राचुर्यविकारप्राधान्यादिषु मयट्प्रत्ययो भवति' इति अन्नमयादिशब्दानामाचार्य कृतव्याख्यासमर्थनं दृश्यते।

**'युक्तेश्च'**

'युक्तेश्च' इति सूत्रं ज. पाठे 'ज्ञोऽत एव' इत्यधिकरणे सूत्रत्वेनोपात्तम् (२-३-१०-१८)। परन्तु हृ. पाठे अन्यत्र कोशेषु च 'युक्तेश्च' इत्येतद्वाक्यं भाष्यत्वेन पठ्यते (द्र० गो.टि. पृ.९७)। तत्त्वप्रदीपिका चात्र बहुलं संवदते। 'अविनष्टा एवोत्पद्यन्ते[1] इति विरुद्धमिति न मन्तव्यमित्याह युक्तेश्च इति। तामेव युक्तिं प्रकटयत्युत्तरभाष्येण। शरीरसंयोगापेक्षया उत्पत्तिर्युज्यत इत्यर्थः' इति तद्ग्रन्थात्। तत्त्वप्रकाशिकायां तु 'नन्वनादिनित्यस्य जीवस्य उत्पत्तिः श्रुतावपि कथं युज्यते? नित्यत्वमभ्युपेत्य उत्पत्तिवचनस्य, वन्ध्यात्वमभ्युपगम्य मातृत्ववचनेन साम्यात् इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे युक्तेश्च।' इति स्पष्टमेव सूत्रत्वं तदभिमतं दृश्यते।

अयमत्र समाधानप्रकारः। सूत्रमेवेदं 'युक्तेश्च' इति। सूत्रत्वादेव आचार्यस्य 'नित्यस्यापि हि जीवस्थोपाध्यपेक्षयोत्पत्तिर्युज्यते' इति तद्विवरणमुपपद्यते। अन्यथा तु 'युक्तेश्च' इति पदमत्र भाष्ये व्यर्थमापद्येत। 'नित्यस्यापि हि.... युज्यते' इत्यनेनैव युक्तिप्रदर्शनसंभवेन 'युक्तेश्च' इत्यस्य वैयर्थ्यात्।

आचार्यस्यैवेयं शैली यत् सूत्रोक्तस्य भाष्येण विवरणम्। यथा 'युक्तेः शब्दान्तराच्च' (२-१-६-१९) इति सूत्रस्य 'साधनानां साधनत्वं यदात्माधीनमिष्यते। तदा साधनसंपत्तिरैश्वर्यद्योतिका भवेत्॥ इत्यादेः साधनान्तरेणापि सृष्टिर्युक्ता । अद्भ्यः संभूतो हिरण्यगर्भ इत्यष्टौ इति शब्दान्तराच्च' इति व्याख्यानम्। न हि तत्रत्यभाष्यशैल्याः अत्रत्य-भाष्यशैल्याश्च मात्रयापि विशेषोऽनुभूयते। उभयत्रापि युक्तेः इत्यस्य भाष्ये व्याख्यादर्शनात्।

---

1 पूर्वम् उडुपीनगरमुद्रिते तत्त्वप्रदीपपुस्तके तु बहुत्र बोल्ड् (लिपिपीनत्व) चिह्नम् उपयुक्तं, तत्तु तत्त्वप्रदीपिकायाः बहुत्र भाष्यगर्भत्वात् तत्सूचनार्थम्। के.टि. पाण्डुरङ्गीमुद्रिते तु पुस्तके तन्नास्ति।

कथं तर्हि तत्त्वप्रदीपिका। इत्थम्। 'अविनष्टा एवोत्पद्यन्ते विरुद्धमिति न मन्तव्यमित्याह - युक्तेश्च इति। तामेव युक्तिं प्रकटयत्युत्तरभाष्येण' इति खलु तद्ग्रन्थस्य वचनविन्यासः। न हि तत्त्वप्रदीपिका सूत्रव्याख्यानरूपा, किन्तु भाष्यव्याख्यानरूपा। तथा च 'न मन्तव्यमित्याह- युक्तेश्च' इत्येतेन वाक्येन 'युक्तेश्च' इत्येतद्वाक्यावतरणिकादानपरतया प्रतीयमानेन 'युक्तेश्च' इत्यस्य भाष्यत्वशङ्का भवेत्। अनन्तरं च 'तामेव युक्तिं प्रकटयत्युत्तरभाष्येण' इत्यनेन च सा शङ्का उपोद्बलिता भवति।

परन्तु तत्त्वप्रदीपिकायां बहुलमेतादृशं दृष्टं तस्याः सूत्रावतरणिकादान-रूपत्वम्। यथा 'स्याच्चैकस्य ब्रह्मशब्दवत्' (२-३-१-५) इति सूत्रे 'अनित्यानीत्युक्तत्वात् प्राणश्रद्धयोः प्रलयेऽपि परावरप्रतिभानाद्भागश एवोद्भवाभिधानम्। आकाशे त्वव्याकृतस्य प्रदेशशब्दितस्यानादित्वात् उत्पत्तिमन्ति चानुत्पत्तिमन्ति च इति कथम् इत्यत आह -स्याच्चैकस्य ब्रह्मशब्दवत् इति' इति तत्त्वप्रदीपिकायाः 'स्याच्चैकस्य ब्रह्मशब्दवत्' इति सूत्रव्याख्यानपरता इव दृश्यते। परन्तु तद्वस्तुतः तत्सूत्रस्य अवतरणिकादानम्, सूत्रभाष्यस्य बहुत्र सूत्राक्षरसंबद्धतया सूत्रमपि स्वस्मिन्नन्तर्भावयतः भाष्यस्य अवतरणिकादानं च। न तु वस्तुतः सूत्रव्याख्यानपरता[1]। तस्मात् 'न मन्तव्यमित्याह - युक्तेश्च' इति पूर्ववाक्यस्य भाष्यावतरणिकापरत्वेन सूत्र-व्याख्यानपरत्वप्रयुक्तसंशायकत्वे निरस्ते, तदुत्तरस्य 'तामेव युक्तिं प्रकटयत्युत्तरभाष्येण' इति वाक्यस्यापि संशायकता स्वयमेव निरस्ता

1. भाष्यस्य सूत्राक्षरसंबद्धतायाश्च बहुत्र उदाहरणानि भवन्ति। यथा 'शास्त्रयोनित्वात्' इति सूत्रे यद्यपि इदानीम् 'अनुमानतोऽन्ये न कल्पनीयाः। शास्त्रयोनित्वात्। नावेदविन्मनुते तं बृहन्तं सर्वानुभुमात्मानं सांपराये औपनिषदः पुरुषः इत्यादिश्रुतिभ्यः' इति पठ्यते। तथापि अत्र 'अनुमानतोऽन्ये न कल्पनीयाः। नावेदविन्मनुते तं बृहन्तं सर्वानुभुमात्मानं सांपराये औपनिषदः पुरुषः इत्यादिश्रुतिभ्यः शास्त्रयोनित्वात्' इत्यन्वयः। 'इत्यादिश्रुतिभ्यः शास्त्रयोनित्वात्' इति खलु भाष्यस्य सूत्राक्षरेण अन्वयः। एवं तत्त्वप्रदीपे प्रथमस्य द्वितीये 'विवक्षितगुणोपपत्तेश्च' इति सूत्रभाष्यव्याख्याने प्रसिद्धार्थत्वात्सूत्रभाष्ययोरेकीभावः' इत्युक्तम्। एवं सर्वत्र भाष्ये।

भवति। न हि 'उत्तरभाष्येण' इत्येतावन्मात्रेण पूर्वस्थस्य सर्वस्य वाक्यस्य सूत्रत्वं शङ्कार्हं भवेत्। एवमेव बहुत्र तत्त्वप्रदीपिकायाः सूत्रावतरणिकादानं दृश्यते। यथा 'प्रतिज्ञाहानि०....' (२-३-१-६), 'यावद्धिकारं तु.... '(२-३-१-७) इत्यादौ।

किञ्च अत्र 'उत्तरभाष्येण' इत्यस्य सिद्धान्तभाष्येण इत्यर्थः। तथा च प्रयुक्तं तत्त्वप्रदीपिकायां 'चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः' इति सूत्रे (३-१-१०)

**'न यज्ञादिकृतो** यज्ञादिफलं **गमनागमनम्**। चरणशब्दस्य यज्ञाद्यतिरिक्तविषयत्वात्। तत्र प्रमाणमाह-**आचार** इति पूर्ववादी। **उत्तरभाष्यस्यायमर्थ**... इत्यादि।

अनेकत्र चैतादृशं दृष्टं तत्त्वप्रदीपिकायां यथा 'तदापीतेः संसारव्यपदेश्शात्' (४-२-६-८) सूत्रे 'नैतावता साम्यमिति **संबन्धभाष्येण**' इति। तथा ' आकाशस्तल्लिङ्गात्' (१-१-८-२२) इति सूत्रे अनेन **संगति भाष्येण** संशयबीजसूचनपरोऽपि...' इत्यादि।

अत्र च 'उत्तरभाष्येण' इत्यस्य संगतिरेवं - यद्यपि 'युक्तेश्च' इत्येतत् न पृथगधिकरणम् इति न तत्र पृथक्पूर्वपक्षप्रसङ्गः। तथापि प्रत्येकसूत्रीयपूर्वपक्षः सर्वत्राविशिष्टः। तं च सूचयति त्रिविक्रमाचार्यः 'अविनष्टा एवोत्पद्यन्ते इति विरुद्धमिति न मन्तव्यमित्याह- युक्तेश्च इति'। यद्यपि अस्मिन् सूत्रे न पृथक्पूर्वपक्षो दृश्यते। तथापि पूर्वसूत्रीयभाष्ये **'अविनष्टा एवोत्पद्यन्ते'** इत्यनेन तं सूचयति। अनन्तरं च तादृशपूर्वपक्षं निरसितुं सूत्रं 'युक्तेश्च' इति। तस्य च विवरणं सिद्धान्तभाष्येण इत्याह 'तामेव युक्तिं प्रकटयत्युत्तरभाष्येण' इति। तस्मादत्र 'उत्तरभाष्येण' इत्येतदन्यार्थे प्रयुक्तं पदं स्वीकृत्य अन्यार्थे उपयोगः न समीचीन इति विभावनीयम्।

तस्मात् नात्र तत्त्वप्रदीपिकासंवादः। ह. मातृकायाश्च अनेकत्र स्खलितत्वेन निश्चितत्वात् अत्रापि स्खलितत्वाङ्गीकारो युक्त एव।

किंच न्यायविवरणसूचितमिदं सूत्रम्। तथा हि 'न चानादित्वाज्जीवस्य पराधीनविशेषाप्राप्तिः। इदं सर्वमसृजत इति सर्वस्मिन् संगृहीतत्वात्। पराधीनविशेषवत्त्वेऽप्यनादित्वस्याविरोधात्' इति न्यायववरणम्। अत्र चान्तिमेन वाक्येन 'युक्तेश्च' सूत्रोक्ता युक्तिः विव्रियते।

यद्यपि शांकर-रामानुजभाष्ययोः नेदं सूत्रमस्ति। तथापि बहुत्र तद्विसंवादस्योपलम्भात् नात्र तत्संवादाभावो दोषः। एवं सर्वत्रापि ऊह्यम्[1]।

तत्र जयतीर्थैः स्थलद्वये मूलकोशोल्लेखः कृतो दृश्यते। तस्मात् तदीयसूत्रत्वनिश्चयस्य मूलकोशमूलकतया नाप्रामाण्यशङ्का। न हि आचार्यस्यानन्तरं चत्वारिंशत्संवत्सरेष्वेव[2] सूत्रान्तरप्रक्षेपावकाशः।

**'स्मरणाच्च'**

'स्मरणाच्च' इति सूत्रं (३-१-१३-२३) हृ.पाठे भाष्यत्वेन पठ्यते। जयतीर्थैस्तु सूत्रत्वेन पठ्यते। 'तृतीये शब्दावरोधः संशोकजस्य' इति पूर्वसूत्रस्य 'तृतीये तृतीयतमसः श्रवणादेव शब्दानुसारेण संशोकजमोहप्राप्तिस्मरणाच्च। महातमस्त्रिधा प्रोक्तमूर्ध्वं मध्यं तथाधरम्। श्रवणेनैव मूर्च्छादिरधरस्य यतो भवेत्। तस्मान्न विस्तरेणैतत्कथ्यते राजसत्तम। इति कौर्मे' इति भाष्यस्य हृ. पाठः। अत्र अन्तिमवाक्ये 'संशोकजमोहप्राप्तिः' इति विच्छिद्य पठित्वा अनन्तरं च 'स्मरणाच्च' इति सूत्रं पठित्वा तद्व्याख्यानतया 'महातमः' इति स्मृतिः व्याख्यायते जयतीर्थैः।

1. शाङ्कर-रामानुज-मध्यभाष्येषु सूत्रादिक्रमस्य विषये द्र० श्रीभाष्यश्रुतप्रकाशिकायाः वीरराघवाचार्याणां भूमिका पृ.३०-३२, १९६७।
2. बि. एन्. के. शर्मविरचिते द्वैतवेदान्तेतिहासे। पृ. २४५, १९८३ अत्र पुस्तके आचार्याणां कालः १२३८-१३१७। जयतीर्थपीठाधिपत्यकालः १३६५-८८ इति निर्दिष्टम्। तस्मात् १३१७ वर्षात् अनन्तरं जयतीर्थोत्पत्तिकालं (गरीयसा पक्षेण १३४५ वर्षम्) यावत् तयोर्व्यवधानम्। जयतीर्थपीठाधिपत्यकालपर्यन्तं व्यवधानस्वीकारेऽपि चत्वारिंशद्वर्षाण्येव व्यवधानं भवति ।१२००-१२६७ इत्येव आचार्यकाल इति पक्षेऽपि शतं वर्षाणामेव अवधानं न महत्।

अत्र गोविन्दाचार्यैः अन्यत् किमपि गमकं न प्रदर्शितम् अस्य वाक्यस्य असूत्रत्वे। तथापि अत्रैवं शङ्काबीजानि।

'स्मरणाच्च' इत्यस्य पृथक्सूत्रत्वे 'तृतीये शब्दावरोधः संशोकजस्य' इति सूत्रे श्रुतिवाक्यस्य वा स्मृतिवाक्यस्य वा युक्तेर्वा अनुदाहरणेन कथमिदं भाष्यं श्रुत्यादिविहीनमिति शङ्का भवेत्। तत्परिहाराय च 'स्मरणाच्च' इत्यत्र उदाहृता कौर्मस्मृतिः अस्मिन्नेव सूत्रे भवेत् इत्यपि शङ्का भवेत्। यत आचार्यस्येयं शैली या सूत्रस्य श्रुत्यादिमूलकत्वेन सूत्रितार्थे श्रुतिस्मृतियुक्ति-संवादिताप्रदर्शनमिति। यद्यत्र श्रुत्यादिकं नास्ति तत्र चान्यत् किमपि योजनीयमिति शङ्का भवति। तथा अत्रापि।

किंच तत्त्वप्रदीपिकायां सर्वेषामपि सूत्राणां कण्ठतो ग्रहणं कृतम्, नात्र 'स्मरणाच्च' सूत्रस्य कण्ठतो ग्रहणं तत्र दृश्यते, किन्तु मूर्च्छादिपदव्याख्यानमेव दृश्यते इति 'स्मरणाच्च' इत्यस्य सूत्रत्वे शङ्का भवति।

तथापि आचार्यैः अनेकत्र स्वोक्तार्थे श्रुत्याद्यनुदाहरणमपि दृष्टम्। यथा 'न वा विशेषात्' (३-३-१३२२) इति सूत्रभाष्ये किमपि श्रुत्यादिकं नास्ति। किन्तु 'दर्शयति च' इत्युत्तरसूत्रेणैव तद्दर्शितम्। तथा 'असार्वत्रिकी' (३-४-२-१०) इत्यत्र किमपि नास्ति। तदुत्तरस्मिन् 'विभागश्शतवत्' इत्यत्रैव श्रुत्यादिकं दर्शितम्। तथा 'आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते' (३-४-७-४६) सूत्रे किमपि नास्ति। तथा बहुत्र[1] श्रुत्याद्यनुदाहरणं दृश्यते। परन्तु तेषु स्थलेषु युक्तयः उक्ताः।

तदेवं 'तृतीये..' इति सूत्रे प्रथमतः स्वाभिमतमर्थमुक्त्वा अनन्तरसूत्रेण स्मृतिप्रदर्शनमिति नास्ति श्रुत्याद्यनुदाहरणदोषः।

किंच तत्त्वप्रदीपिकायां 'तृतीये तमसि श्रुतमात्र एव तच्छब्दानुसारेण संशोकजस्य अत्यन्त दुःखोद्भूतस्य मोहस्य अवरोधः प्राप्तिः' इति व्याख्यानात्

1. यथा पञ्चमुखिपुस्तके तृतीयाध्याये पृ.१३५, १४९, १६८, १७७, १९९, १९४, २०७, २०९, २१८, २१९, २५८,२८०,२८, ३२२ इत्यादिषु ।

'प्राप्तिः' इत्येव भाष्यं निश्चीयते, न तु 'प्राप्तिस्मरणाच्च' इति।

तत्त्वप्रदीपिकायामपि केषांचित् सूत्राणां तद्भाष्याणां च विवरणमेव नास्ति। यथा 'अग्न्यादिगतिश्रुतेः....' (३-१-४), 'स्मर्यतेऽपि च लोके' (३-१-१५-२०)। तथा अन्यत्र बहुषु स्थलेषु। क्वचिच्च सूत्रव्याख्याने कृतेऽपि तत्र सूत्रं कण्ठरवेणागृहीत्वा तत्रत्यानां केषांचित्पदानां व्याख्यानं दृश्यते। यथा 'दर्शनात्' (३-२-१६-३३) इत्यत्र। तत्र च सूत्रं न कण्ठतः उपात्तम्, परन्तु 'अदृष्टत्वम्' इत्यादीनां भाष्यस्थपदानां व्याख्यानं दृश्यते।

तस्मात् तत्त्वप्रदीपिकायां सूत्रस्य कण्ठतोऽनुपादानं न अस्य सूत्रत्वप्रतिक्षेपे कारणं भवति। किन्तु मूलकोशानुसारेण जयतीर्थैः अस्य सूत्रत्वेन परिगणनात् ह्. पाठेऽपि 'संशोकजमोहप्राप्तिः' इति विच्छिद्य पठित्वा अनन्तरं च 'स्मरणाच्च' इति सूत्रतया पठनीयम्।

अन्यमतीयभाष्यकारैः अस्यानुपादानमपि न दोष इत्युक्तमेव पुरस्तात्।

**'दर्शनात्'**

'दर्शनात्' इति प्र.पाठः (३-२-१६?-३३), 'दर्शनात्तु' इति ह्. पाठः। परन्तु 'दर्शनात्तु' इत्येव सूत्रम्। वाक्यार्थमुक्तावल्यां 'तुरवधारणे' इति व्याख्यानात्।

**'अन्यथात्वं च शब्दादिति चेन्नाविशेषात् '**

'अन्यथात्वं च शब्दादिति चेन्नाविशेषात्' (३-३-२-७) इति यद्यपि सूत्रस्य मुद्रितः प्र. पाठः। चशब्दो नास्ति ह्. पाठे। तथापि कुत्रापि तस्य व्याख्यानाभावात् नात्र गोविन्दाचार्यदर्शितदिशा पाठभेदावसरः।

**'प्रदानवदेव हि तदुक्तम्'**

'प्रदानवदेव हि तदुक्तम्' (३-३-२६-४४) इति प्र.पाठः। हिशब्दो नास्ति ह्.पाठे। 'प्रदानवदेव तदुक्तम्' इत्येव सूत्रपाठः सुधायां

तत्त्वप्रकाशिकायां च हिशब्दस्य व्याख्यानाभावात्। प्रत्युत कुम्भकोण मुद्रितानुव्याख्याने मुद्रितसुधायां शे. वा. चन्द्रिकायां च हिशब्दादर्शनाश्च। वाक्यार्थमुक्तावल्यां हिशब्दाव्याख्यानाच्च। तस्मात् ह्. पाठः जयतीर्थसंमतः।

## 'शब्दश्चातोऽकामचारे'

'शब्दश्चातोऽकामचारे' (३-४-४-३१) इति मुद्रितः प्र. पाठः। 'शब्दश्चातोऽ कामकारे' इति ह्. पाठः। परन्तु सर्वत्र व्याख्यासु चकारघटित एव पाठो व्याख्यातः, नात्र किमपि विरुद्धं गमकं पश्यामः। यद्यपि 'कामकारेण चैके' (३-४-४-१५) इति सूत्रे ककारघटितः पाठः। तथापि तत्र स्पष्टं 'कामकारः कामितकरणम्' इति तत्त्वप्रदीपिकायां व्याख्यानात् तथात्वाङ्गीकारेऽपि नात्र स्पष्टं तथावगम्यते। 'न कामचरितं चरेत्' इति श्रुत्यनुसाराच्च।

## 'आ प्रायणात्तत्रापि हि दृष्टम्'

'आ प्रायणात्तत्रापि हि दृष्टम्' इति ज. पाठः (४-१-७-१२), 'आ प्रयाणात्' इति ह्.पाठः। 'प्रायणान्तमोकारमभिध्यायीत' इति श्रुत्यनुसारेण 'प्रायणात्' इति भाव्यमिति भाव्यते। तत्त्वप्रदीपे 'यावन्नारायणं प्रति प्रयाणात्मको मोक्षः' इति दर्शनेऽपि तस्यार्थप्रदर्शनपरत्वोपपत्तेः न विरोधः। अथ वा तत्त्वप्रदीपिकानुसारेण 'प्रयाणात्' इति सूत्रपाठेऽपि न विरोधः। जयतीर्थैः 'प्रायणात्' इत्यनुदाहरणात्। शांकररामानुजभाष्ययोः 'प्रायणात्' इति दर्शनस्य विनिगमकत्वं तु नास्ति।

## 'तदपीतेः संसारव्यपदेशात्'

'तदपीतेः संसारव्यपदेशात्' (४-२-६-८) इति प्र. पाठः। 'तदापीतेः संसारव्यपदेशात्' इति ह्. पाठः। अत्र तत्त्वप्रदीपे 'आ समन्ताद् अपीतिः आपीतिः' इति आपीतिशब्दो व्याख्यातः। तत्त्वप्रकाशिकायां न स्पष्टम्। परन्तु न तेन 'तदापीतेः' इति पाठः तत्त्वप्रकाशिकाविरुद्ध इति वक्तुं शक्यते।

'तदिति' इति प्रतीकग्रहणेऽपि 'तदापीतेः' इत्यनेन विरोधाभावात्। अत एव वाक्यार्थविवरणनाम्नि व्याख्याने 'सूत्रे तदापीतेः इति आ अपीतेः इति पदच्छेदः। तस्यां सम्यगपीतिमत इत्यर्थः' इति तदर्थवर्णनं दृश्यते। परन्तु अन्यव्याख्यानेषु भावदीपादिषु 'तदपीतेः' इति पाठो दृश्यते। वाक्यार्थ-मुक्तावल्यां तु प्राचीनभाष्यव्याख्यातृमते तदापीते' इति सप्तमी इति अन्यत्र निरूपितम् इत्युक्तम्। तत्कथम् इति न ज्ञायते।

**'अतश्चायनेऽपि हि दक्षिणे'**

'अतश्चायनेऽपि हि दक्षिणे' (४-२-९-२१) इति प्र पाठः। हिशब्दो नास्ति हृ. पाठे। परन्तु तत्त्वप्रदीपिकायां हिशब्दो दृश्यते। अन्यत्र विसंवादविषयेषुस्थलेषुतत्त्वप्रदीपिकायांप्र.पाठापेक्षया विलक्षणपाठदर्शनेऽपि अत्र प्र. पाठसंमतपाठदर्शनेन प्र. पाठ एव तत्त्वप्रदीपाभिमत इति चिन्त्यते। नापि तत्त्वप्रकाशिकायां हिशब्दव्याख्या दृश्यते। तस्मात् हृ. पाठे हिशब्दः प्रमादेन त्यक्त इति संभाव्यते।

## ब्रह्मसूत्रभाष्ये प्रथमाध्याये प्रथमपादे पाठभेदविचारः

अत्र प्र.पाठः प्रचलितपाठः । हृ.पाठः हृषीकेशतीर्थीयः। रा.पाठः राम-चन्द्रतीर्थीयः (पूर्वमयमेव अक्षोभ्यतीर्थीयपाठत्वेन निर्दिष्ट आसीत्।)। वे. पाठः वेदगर्भनारायणाचार्यधृतः। अत्र प्रभञ्जनाचार्यप्रकाशितं सर्व-मूलान्तर्गतं सूत्रभाष्यपुस्तकं गृहीत्वा एव भाष्यपृष्ठाङ्काः निरूपिताः सन्ति। भावदीपस्य पृष्ठाङ्काः आर्.एस्.पञ्चमुखिप्रकाशितपुस्तकस्य। अन्यटिप्पणी-कृतां पृष्ठाङ्काः के. टि. पाण्डुरङ्गीप्रकाशितपुस्तकस्य। बृहदारण्यकादि-ग्रन्थपृष्ठाङ्काः गोविन्दाचार्यप्रकाशितपुस्तकस्य।

अत्र तु अस्मत्सुहृद्भिः रुचिराचार्यैः पुनः काश्चन सूचनाः दत्ताः एतद्विषये। तदनुसारेण क्वचित्परिवर्तनं कृतम्। क्वचिच्च विप्रतिपत्तिरपि प्रदर्शिताऽधस्ता टिप्पण्याम्। तेभ्यः कार्तज्ञ्यमावेदयामि।

१. पृ. ४ 'ज्ञानं संस्थाप्य भगवान् क्रीडते पुरुषोत्तमः' इति प्र. रा.वे. पाठाः। परन्तु ह्. पाठः 'क्रीडते परमेश्वरः' इति। अत्र कैरपि व्याख्यातृभिः किमपि नोक्तमिति' 'परमेश्वरः' इति पाठस्साधुरिति चिन्त्यते। अथ वा उभयमपि समीचीनम्।

2. पृ.5. कश्चाथश्च तयोर्विद्वन्कथमुत्तमता तयोः' इति प्र. रा.वे. पाठाः। ह्.पाठस्तु 'कश्चार्थस्तु' इति। प्र पाठे चकारवैयर्थ्यात् ह्.पाठः समीचीन इति चिन्त्यते। सर्वदर्शनसंग्रहेऽपि 'कश्चार्थस्तु' इत्येव दृश्यते। भाष्यदीपिकायामपि तुशब्दघटितः काचित्कः पाठः उद्धृतः।

३. पृ.६ अधमश्शमादिसंयुक्तो मध्यमस्समुदाहृतः' इति प्र.रा.वे. पाठाः। 'मध्यमस्स उदाहृतः' ह्. पाठः। उत्तरत्र उत्तमाधिकारिलक्षणेऽपि तच्छब्दश्रवणात् अयमेव समीचीनो भाति। टीकायां न स्पष्टम्।

४. पृ.६ परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्। नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इति प्र.रा.वे. पाठः। ह्.पाठे तु 'नास्त्यकृतः' 'ब्रह्मनिष्ठम्' इत्यन्तं नास्ति। अत्र टीकाकुद्भिः सर्वस्यापि वाक्यस्य व्याख्यानकरणात् प्र.पाठस्स्वीकार्य एव। `समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इति भागस्तु जयतीर्थरव्याख्यातत्वात् नास्ति।

5.पृ. ६ 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इति प्र.रा.वे पाठाः। ह्.पाठे तु 'तस्येष' इत्युत्तरार्धं न पठ्यते। टीकायाम् उत्तरार्धमपि व्याख्यातमिव दृश्यते। तस्मात्तदेव ग्राह्यम्। तत्त्वप्रदीपेऽपि उत्तरभागो व्याख्यातः।

६. पृ.६ इत्यादिश्रुतिभ्यश्च' इति प्र. रा. वे. पाठाः। ह्. पाठे 'इत्यादिश्रुतिश्च' इति। भावदीपे तु 'एतेन भाष्ये इत्यादिश्रुतिभिश्च इत्यस्य अधिकारश्चोक्त इति पूर्वेणान्वयः सूचितः' इति व्याख्यातम्।

७. पृ.६. 'स्त्रीशूद्रब्रह्मबन्धूनां तन्त्रज्ञानेऽधिकारिता' इति प्र.रा.वे. पाठाः। 'तन्त्र' इति स्थाने 'तत्र' इति पठ्यते हृ. पाठे। परन्तु टीकायां 'तन्त्रं पञ्चरात्रादि इति तन्त्रशब्द एवादृतः। हृ. पाठे प्रमादेन नकारो गलितः स्यात्। प्रथमतः अन्त्यजानां नामज्ञानाधिकारकथनम्, अनन्तरं सच्छूद्रादीनां पञ्चरात्राद्यधिकारकथनम् अनन्तरं त्रैवर्णिकानां वेदाधिकारकथनम् इति हि क्रमः। न तु स्त्रीशूद्रादीनामपि वेदाधिकारपरं तत्, सन्दर्भानानुगुण्यात्। वेदाधिकारस्याप्रसक्तेश्च, उत्तरत्र त्रैवर्णिकानां वेदोक्त इत्यनेन हि वेदाधिकारः प्रस्तुतः, न तु ततः पूर्वतनवाक्ये । तस्मात् तत्र इति पाठमवलम्ब्य तस्यार्थकथनं न समीचीनतां भजते। 'अधिकारता' इति वे .पाठः अर्शआद्यजन्तत्व-स्वीकारात्।

8.पृ. ७. 'न तु ग्रन्थपुरः सर' इति प्र. रा. पाठौ। हृ. पाठे 'न च ग्रन्थ'' इति। वे पाठे 'न हि ग्रन्थ'' इति। प्र. रा. पाठौ प्रामादिकौ इति संभाव्यते। तुशब्दद्वयस्यास्वारस्यात्। हृ.वे.पाठयोरन्यतरो ग्राह्यः।

९. पृ. ७. 'बृहत्संहितायाम्' इति प्र. पाठः। रा. हृ. पाठयोस्तु 'ब्रह्मसंहितायाम्' इति पठ्यते। तत्र किमपि निश्चेतुं न शक्यते। तादृशसंहिताया इदानीमनुपलभ्यमानत्वात्। परन्तु 'बृहद्ब्रह्मसंहिता' इति इत्येका संहिता संहितानामसु डेनियल् स्मिथ् महाशयेन स्वीयग्रन्थे निर्दिष्टा वर्तते। तदनुसारेण उभयमपि समीचीनं भवेत्। यथा तथा वास्तु, ग्रन्थोऽयं पञ्चरात्रान्तर्गतः।

१०. पृ.८. आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति समग्रं पठ्यते प्र. रा. पाठयोः। हृ.पाठे तु 'द्रष्टव्यः' इतिपर्यन्तम्। टीकायां तु समग्रं वाक्यं व्याख्यातमिव दृश्यते। तस्मात्तत् ग्राह्यमेव। तत्त्वप्रदीपेऽपि श्रोतव्य इत्यंशः उदाहृतः।

११ पृ.८ 'यमन्तः समुद्र कवयोऽवयन्ति यदक्षरे परमे प्रजाः। यतः प्रसूता जगतः प्रसूती तोयेन जीवान्व्यससर्ज भूम्याम्' इति समग्रं पठ्यते प्र.

रा.वे पाठेषु। हृ.पाठे तु अवयन्ति' पर्यन्तमेव। तथैव वाक्यार्थमञ्जर्यां टीकाव्याख्यायाम् 'अवयन्ति इति पर्यन्तमेव भाष्यपाठः' इत्युक्तम्। तथा टोकायां उत्तरभाग न व्याख्यातः। तस्मात् प्र. रा. वे पाठाः न ग्राह्याः।

१२ पृ. 'तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्' इति समग्रं पठ्यते प्र. रा.वे. पाठेषु। हृ. पाठ 'तदेवर्तं तदु सत्यमाहुः' इति न पठ्यते। टीकायामपि न व्याख्यातः पूर्वभागः। तस्मात् प्र.रा वे पाठाः न ग्राह्याः।

१३. पृ.९ 'भाल्लवेयश्रुतिः' इति प्र.रा.वे. पाठाः। 'भाल्लवेयश्रुतेः' इति हृ. पाठः। हृ. पाठ एव ग्राह्यः, तत्र हेत्वाकाङ्क्षासत्वात्।

१४. पृ ९ 'यो देवानां नामधा एक एव तं संप्रश्नं भुवना यन्त्यन्या' इति प्र. रा. वे पाठाः। 'तं संप्रश्नम्' इत्याद्युत्तरभागः हृ. पाठे नास्ति। वाक्यार्थमञ्जर्यामपि 'तं संप्रश्नम्' इत्यादि भाष्ये नास्तीत्युक्तम्। नापि टीकायां व्याख्यातम्। हृ. पाठ एव ग्राह्यः।

१५. पृ. ९ 'इत्येवशब्दान्नान्येषां सर्वनामता' इति प्र. रा. पाठौ। 'इति चैवशब्दात् न चान्येषां सर्वनामता' इति हृ. पाठः। अत्र 'इति चैवशब्दात्' इति युक्तमेव[1]। पूर्वमेव अन्यत्र नामानि न सन्ति, जगतः उत्पत्तिमत्त्वात् इत्युक्तत्वेन, तत्समुच्चायकत्वात्। परन्तु 'न चान्येषाम्' इत्यत्र चशब्दकृत्यं न भासते।

१६. पृ.९ 'अजस्य नाभावध्येकमर्पितं यस्मिन्विश्वानि भुवनानि तस्थुः। इति विष्णोर्हि लिङ्गम्' इति प्र.रा.वे.पाठाः। हृ. पाठे तु 'अजस्य नाभो इति तस्य हि लिङ्गम्' इति। अत्र श्रुतिः समग्रतया टीकायां न व्याख्याता[2]। अजस्येति प्रतीकधारणस्यैव कृतत्वात्। विष्णोः इति पदस्य स्थाने 'तस्य' इति पाठस्तु प्राचीनपाठत्वात् ग्राह्यः। नात्र किमपि विनिगमकम्।

---

1 नानेन इत्येवशब्दात् इति प्र. पाठस्यायुक्तता प्रतिपाद्यते, किन्तु अयोगव्यवच्छेद एव।

2 समग्रतया टाकायां श्रुतिव्याख्यानाभावात् 'पद्मनाभत्वलिङ्गादयं विष्णुरेव इति टीकावाक्य-पर्यालोचनयापि नैतच्छ्रुतिग्रहणं पूर्णतया भाष्ये सिध्यति ।

१७.पृ.९ ‘न च प्रसिद्धार्थं विनान्योऽर्थो युज्यते’ इति प्र. रा.वे. पाठाः। न च प्रसिद्धार्थं विना अन्यो युज्यते’ इति हृ. पाठः। टीकायां तत्त्वप्रदीपे च तथैव पाठः।

१८. पृ. ९ परो दिवा पर एना पृथिव्या इति समाख्या’ इत्येतावन्मात्रमेव प्र. रा.वे. पाठेषु पठ्यते। हृ. पाठे ‘इति च समाख्या’’ चशब्दमात्रमधिकम्। परन्तु टीकायां तत्त्वप्रदीपे च ‘एतावती महिना संबभूव’ इत्यंशोऽपि व्याख्यातः। नात्र विनिगमकम्।

१९. पृ. ९ ‘यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्’ इति प्र.रा.वे.पाठाः। हृ.पाठे ‘तं ब्रह्माणम्’ इत्याद्यंशः नास्ति। परन्तु टीकायां व्याख्यातः। उपात्तश्च तत्त्वप्रदीपे।

२०. पृ.९ प्रसिद्धत्वात्सूचितत्वाच्चास्यार्थस्य’ इति प्र. रा. पाठौ। हृ.पाठे ‘अस्य’ इत्यंशो नास्ति। वेदगर्भीये न स्पष्टम्। हृ. पाठस्साधुस्संभाव्यते। टीकायामपि ‘अर्थस्य’ इत्येव पाठः।

२१. पृ. ९ ‘न चेतरग्रन्थविरोधः ‘ इति प्र. रा. वे. पाठाः। ‘न चेतरग्रन्थैर्विरोधः’ इति हृ. पाठः। तत्त्वप्रदीपे तथा।

२२. पृ.११ ‘यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मेति’ इति समग्रं पठ्यते प्र. रा.वे. पाठेषु। हृ. पाठे ‘भूतानि जायन्ते’ इति पर्यन्तमेव पाठः। परन्तु सर्वोऽप्यंशः टीकायां व्याख्यातः। उपात्तश्च तत्त्वप्रदीपे। तथा तत्त्वप्रदीपे ‘यो नः पिता’ इति ऋच इव अपरस्यापि ऋग्द्वयस्य व्याख्यानं दृश्यते। तदपि भाष्यान्तर्गतं वा संदिह्यते। अथ वा भाष्यार्थोपपादनाय व्याख्यातं भवेत्। नैतावता तत्त्वप्रदीपतत्त्वप्रकाशिकयोर्विरोधः।

२३. पृ. ११ ‘नावेदविन्मनुते तं बृहन्तं सर्वानुभूमात्मानं सांपराये’ इति प्र. रा. वे. पाठाः। ‘बृहन्तम्’ इत्यन्तमेव पठ्यते हृ. पाठे। परन्तु टीकायां

तत्त्वप्रदीपिकायां च व्याख्यातः स भागः ।

२४.पृ.११ 'इत्यादिश्रुतिभ्यः' इति प्र. रा. पाठौ । 'इत्यादिश्रुतिः' इति ह्. पाठे । तत्त्वप्रदीपानुगुणः ह्. पाठः । 'शास्त्रयोनित्वे प्रमाणमाह-नेत्यादि' इत्यवतारितत्वात् । नात्र विनिगमकम् ।

२५. पृ.१२ 'महाकौर्मे' इति प्र. पाठः । 'कौर्मे' इति ह्. पाठे समीचीनम् । रा. पाठः कीदृशः इति न ज्ञायते । पञ्चमुखिपुस्तकमुद्रणरूपत्वा त्तस्य पुस्तकस्य । पञ्चमुखिपुस्तकं ह्. पाठ-प्र. पाठाभ्यां संकीर्णम् ।

२६. पृ.१२ 'शक्यत्वाच्चानुमानानाम्' इति रा. पाठः न साधुरिव भाति । 'अनुमानाम्' इति प्र.ह्. पाठौ ।

२७. पृ.१३ 'विकल्प्योऽपोह्य इत्यहम्' इति प्र. रा. वे. पाठाः । 'विकल्प्यापोह्य इत्यहम्' इति ह्. पाठः । सः तत्त्वप्रदीपादृतः । टीकायां तु किमिति स्पष्टतया न ज्ञायते । 'विकल्प्यापोह्यः' इति पाठस्तु टीकाया अविरुद्ध एव । तत्त्वप्रदीपानुसारित्वात् टीकायाः । नात्र किमपि विनिगमकम् ।

२८. पृ.१४ 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' इति पूर्णं पठ्यते प्र. रा.वे. पाठेषु । ह्. पाठे 'निवर्तन्ते' इतिपर्यन्तमेव । तथैव तत्त्वप्रदीपे । टीकायामपि न व्याख्यातः उत्तरभागः ।

२९. पृ.१४ 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्' इति समग्रं पठ्यते प्र. रा.वे. पाठेषु । ह्.पाठे तु 'अस्पर्शम्' इति पर्यन्तमेव । तत्त्वप्रदीपे तु नोपात्ता, न व्याख्याता च इयं श्रुतिः । टीकायां तु 'अशब्दमित्यादेः' इति प्रतीकं गृह्यते । आदिपदेन कियत्पर्यन्तं ग्राह्यमिति न निश्चीयते ।

३०. पृ.१४ 'येन वागभ्युद्यते' इति प्र. रा. वे. पाठेषु वर्तते । ह्. पाठे नास्ति । एतत्पूर्वतनभागोऽपि टीकायां न व्याख्यातः, नापि तत्त्वप्रदीपे ।

३१. पृ.१४ 'येन श्रोत्रमिदं श्रुतम्' इति प्र.रा.वे.पाठेषु दृश्यते । ह्.

पाठे नास्ति। टीकायामेतत्पूर्वतनभागस्तु उपात्तः। नायमुपात्तः। तत्त्वप्रदीपे सर्वोऽपि भागः नोपात्तः।

३२. पृ.१४ 'इत्यादेर्न' इति प्र पाठः। 'इत्यादिभिर्न' इति हृ. रा. पाठौ। परन्तु भावदीपे 'इत्यादिभिर्न तच्छब्दगोचरमिति भाष्यं व्यनक्ति यत इति।' इति व्याख्यानात् तथा 'भाष्ये बहुवचनोक्तावपि प्रत्येकं साधकत्वद्योतनाय श्रुतेरित्येकवचनोक्तिः' इति वचनाच्च इत्यादिभिर्न इति पाठः सर्वसंमत इति भाति।

३३. पृ.१४ 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति' इति पूर्णं पठ्यते प्र.रा.वे.पाठेषु। हृ.पाठे 'तपांसि सर्वाणि' इत्यादि उत्तरार्धं नास्ति। परन्तु टीकायां तत्त्वप्रदीपे च व्याख्यातस्स भागः।

३४.पृ.१५ 'वेदान्तकृद्वेदविदेव चाहम्' इति पठ्यते प्र. रा.वे. पाठेषु। न तु हृ. पाठे । टीकायां तु एतत्पूर्वभागस्य सूचनया उपात्तत्वेऽपि अयं भागः नोपात्तः। प्रकृतानुपयुक्तश्च। वाच्यत्वस्यैव प्रसक्तेः।

३५. पृ.१५ 'इत्यादिश्रुतिस्मृतिभिश्च' इति प्र. रा. पाठयोः । हृ. पाठे 'इत्यादिभ्यश्च' इत्येव पठ्यते। नात्र विनिगमकम्।

३६. पृ.१५ 'पश्यन्तोऽपि न पश्यन्ति' इति प्र. रा.वे. पाठाः। हृ. पाठे 'पश्यन्ति' स्थाने 'जानन्ति' इति। हृ. पाठः ग्राह्यः। अर्थस्वारस्यं विना न विनिगमकम्। पश्यन्तोऽपि न जानन्ति इत्यस्य चक्षुः व्यापारयन्तोऽपि न ज्ञानाश्रया भवन्ति इत्यर्थः।अथवा न निर्णयः।

३७.पृ.१५ 'सोऽनात्मेति सतां मतम्' इति प्र. रा.वे. पाठाः। 'मतम्' इति स्थाने 'मतः' इति पठ्यते हृ. पाठे। नात्र विनिगमकम्।

३८. पृ.१६ सन्दोहे गहने प्रविष्टः' इति प्र. रा. वे. पाठाः। 'सन्दोघे' इति हृ. पाठे। तत्त्वप्रदीपातपाठभिन्नः सः, सन्दोहपदस्य तत्र व्याख्यानात्[1]।

---

1 तथा प्रविष्टो गहने देहमध्ये संदोहनामनि' इति बृहद्भाष्यानुसारेण संदोहे' इत्येव समीचीनमिति रुचिराचार्योक्तिः। परन्तु गो मुद्रिते बृ. उ. भा. पुस्तके संदेहनामनि' इति

परन्तु 'संदोघः कार्यकारणसंघातः' इत्यपि तत्त्वप्रदीपिकायां दृश्यते । गुर्वर्थ-दीपिकायां 'सन्दोघे' इति वर्तते । परन्तु गोविन्दाचार्यप्रकाशित बृहदारण्यक-पुस्तके 'सन्दोहे' इति वर्तते । विचार्यमेतत् । अत्र भाष्यस्य मूलपाठः कः इति न ज्ञातुं शक्यते । यद्यपि आचार्यैः शाखान्तरीयवचनसङ्ग्रहाय बहुत्र शाखान्तरवचनमिश्रितानि प्रसिद्धशाखीयवचनानि उदाहृतानि । तथापि प्रबलेऽत्र आचार्यसाक्षाच्छिष्यव्याख्याने जाग्रति कथं 'संदोघे' इति पाठानुसरणम्? । न हि पण्डिताचार्यैरत्र तादृशं लिङ्गं दर्शितम्, येन शाखान्तरस्थमिदं वचनमिति चिन्तयामः । अनेकत्र च पण्डिताचार्यैः तादृशं लिङ्गं दर्शितम् । नात्र तथा । तत्कथम् ? ।

३९. पृ.१६ 'सोपचारोऽभिधीयते' इति प्र. रा. पाठौ । 'सोपचारः प्रयुज्यते' हृ. पाठः समीचीनो भाति । वेदगर्भीये न स्पष्टम् । 'सोपचारः प्रयुज्यते' इति कोशेष्वपि दृश्यते इति रुचिराचार्योक्तिः ।

४०.पृ.१६ 'वाचो विमुञ्चथ' इति प्र. रा. वे. पाठाः । 'वाचो मुञ्चथ' इति हृ. पाठः । टीकायां तत्त्वप्रदीपे च न स्पष्टम् । प्राचीनः पाठः क इत्यन्वेषणीयम् । सन्यायरत्नावल्यां सुधायां च 'विमुञ्चथ' इत्येव । शांकरभाष्ये भामत्यां च 'विमुञ्चथ' इत्येव पठ्यते । यथा शां. भाष्ये द्यभ्वादिसूत्रे 'यच्चेतत् अन्या वाचो मुञ्चथेति वाग्विमोचनम्' इति, भामती च 'यश्च वाचो विमुञ्चथ इति वाग्विमोकः' इति च[1] । तथैव रङ्गरामानुजीये उपनिषद्भाष्ये तत्कृतविषयवाक्यदीपिकायां च पाठो लभ्यते । श्रीकण्ठादि-भाष्येषु कथमिति द्रष्टव्यम् ।

४१.पृ.१७ 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते इति प्र.रा.वे. पाठेषु । हृ. पाठे तु नास्ति । तत्त्वप्रदीपादृतपाठापेक्षया टीकादृतपाठापेक्षया च भिन्नः सः । तत्रैतस्य व्याख्यातत्वात्[2] ।

---

पठ्यते (बृ. उ.भा.६-४-४३, पृ.३४५) । तत्र प्र पाठः 'संदोह (घ) नामनि' इति । कंसे घवर्णो निवेशितः ।

1. 'द्युभ्वाद्यायतनं स्वशब्दात्' (१-३-९) इति सूत्रे पृ. २७३ निर्णयसागरपुस्तके ।

2. द्र० पूर्वमेवास्य विषये लिखितम् ।

४२.पृ.१७ ‘विलापयति’ इति प्र. रा.वे. पाठाः। ‘विलाययति’ इति ह. पाठः। टीकायां तत्त्वप्रदीपे च न स्पष्टम्। ‘इदं शरीरं भूतेषु विलापयति केशवः’ इति बृ. उ. भाष्ये (पृ.३४०)। तथैव तदभिध्यानादेव तु तल्लिङ्गात्सः’ इति सूत्रे (२-३-७-१३) स ब्रह्मणा विसृजति स रुद्रेण विलापयति’ इति प्र. पाठः। ह.पाठे तु तत्रापि ‘विलाययति’ इति पाठः। परन्तु ‘नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः’ (२-३-९-१७) इति सूत्रे ‘स इदं सर्वं विलाप्यान्तस्तमसि निलीनस्तद्विलाप्य व्युत्तिष्ठते स इदं सर्वं विसृजति विलापयति प्रस्थापयति..’ इत्यादिः प्र पाठः। तत्र ‘विलाप्य’ इति ह. पाठेऽपि पठ्यते। परन्तु ‘विलापयति’ इति तु न पठ्यते, तत्पदमेव नास्ति। तस्मात् विलापर्यात इति पाठः अनुगतो दृश्यते।

४३.पृ.१७ ‘इति स्वस्यैव’ इति प्र.रा.वे.पाठाः। ‘इत्यादि स्वस्येव’ हपाठः स्वीकार्यः। अर्थभेदस्तु नास्त्येव।

४४. पृ.१७ न हि गौणात्मनि निर्दोषस्य लयः’ इति प्र. रा. पाठौ। ‘न हि निर्दोषस्य गौणात्मनि लयः’ इति ह. पाठः तत्त्वप्रदीपसम्मतः। टीकायां न स्पष्टम्।

४५. पृ.१८ ‘प्रायेणान्यत्र प्रसिद्धानाम्’ इति प्र. रा. पाठयोः। ‘प्रायेण’ इति नास्ति ह. पाठे। तत्त्वप्रदीपेऽपि नास्ति। टीकायाः तत्त्वप्रदीपानुसारित्वात् ज. पाठेऽपि नास्तीत्यूह्यते। टीकायां पूर्वमेव एकवारं ‘प्रायेण इत्यस्य कृत्यं दर्शयित्वा ‘पुनः एतत्पादप्रतिपाद्यं दर्शयति- प्रायेण इति’ इति अवतरणिका-दानेनापि नात्र प्रायेण इत्यस्य द्विवारं प्रयोगः टीकासंमतो भासते। एकस्यैव आवृत्त्या व्याख्यानसंभवात्।

४६. पृ.१८ ‘तच्च ब्रह्म’ इति प्र. रा. पाठयोः। ‘तच्च’ इति ह. पाठे। तथैव वेदगर्भीयेऽपि।

४७. पृ.१८ ‘अवयवमात्रस्य ज्ञेयता’ इति प्र. रा.वे. पाठाः। ‘ज्ञेयता’ स्थाने ‘जिज्ञास्यता’ इति वाक्यार्थमुक्तावल्यां पठ्यते। टीकायां किमिति न स्पष्टम् । तत्त्वप्रदीपे ‘ज्ञेयता’ इत्येवादृतमिव प्रतीयते।

४८. पृ.१८ 'इत्यत आह- आनन्दमयोऽभ्यासात्' इति प्र. रा. वे. पाठेषु। परन्तु गुर्वर्थदीपिकायां 'स्वमूलभाष्यसंपुष्टिकायां पृथक्सूत्रपाठाभावात् संगत्यर्थमुदाहृतेत्युक्तम्[1]। यत्र तु पृथक्सूत्रपाठोऽप्यस्ति तत्र तूदाहृतप्रतिज्ञा-भागमित्येव वाक्यं द्रष्टव्यम्' इति लिखितम्। परन्तु तत्त्वप्रदीपे पृथक् सूत्रपाठोऽपि वर्तते। तदनुसारेण टीकायामपि स्यादेव। तथा ह्. पाठेऽपि।

४९. पृ.१८ एवमन्येषामपि' इति प्र. रा. पाठौ। ह्. पाठे 'एवमन्येषाम्' इत्येव पठ्यते। तथैव वे पाठः। तत्त्वप्रदीपे तु अतः एव अन्यदेवतानां च इत्युक्तम्। एवमिन्द्रबृहस्पत्यादीनामपि इति टीकायाम्।

५०.पृ.१८ बृह जातिजीवकमलासनशब्दराशिषु' इति प्र. रा.वे. पाठाः। ह्. पाठे 'बृह' इति नास्ति। तत्त्वप्रदीपादृतपाठापेक्षया टीकादृत-पाठापेक्षया च भिन्नः सः। तत्र तस्योपादानात्।

५१. पृ.१९ न विकारित्वमविरोधश्च' इति प्र. रा. वे पाठेषु। 'न विकारत्वमविरोधश्च' ह्. पाठः तत्त्वप्रदीपसम्मतः। 'नान्नमयादीनां विकारत्वम्' इति तदुक्तेः। तदनुसारेण टीकायामपि तथैव पाठस्संभाव्यते। न विकारित्वमर्थोऽपि तु प्राचुर्यमेवेति निश्चीयते इति टीकायां विकारित्वशब्दप्रयोगेन तथैव पाठस्संदिह्येतापि। तथैव जगतस्त्वविकारत्व उक्तन्यायेन साधिते' इत्यादिसुधायामपि अविकारत्वपदमेव पठितम्।

५२.पृ.२० मन्त्रवर्णलक्षितं परमेव ब्रह्म' प्र. रा. पाठौ। 'मन्त्रवर्ण-लक्षितमेव ब्रह्म' इति ह पाठः टीकादृतपाठापेक्षया भिन्नः। तत्र स्पष्टं परशब्दोपादानात्। तत्त्वप्रदीपपाठस्तु न स्पष्टः।

५३. पृ. २० 'सन्दोहो वासुदेवकः। नारायणोऽथ सन्दोहः इत्युभयत्र सन्दोहशब्दः पठ्यते प्र.रा.वे. पाठेषु। ह्. पाठे 'सन्देहः' इत्युभयत्रापि। भावदीपे 'सन्दोहः' इत्येवोपात्तः। टीकायां किमपि न निश्चीयते।

1. कस्तर्हि इत्याशक्य संगत्यर्थमुदाहृतसूत्रप्रतिज्ञाभागं व्याचष्टे- तदेवेति। इति टीकाया व्याख्यानमेतत्।

५४. पृ. २० इति सूचयित्वा' इति प्र. रा. वे. पाठाः । ते टीकानुगुणाः, सूचना संक्षिप्योक्तिः' इति व्याख्याकृतः । ह. पाठे 'इति सूत्रयित्वा' इति ।

५५. पृ. २१ अथ सोऽभयं गतो भवति' इति प्र. रा. वे. पाठाः । ह. पाठे तु तन्नास्ति । तत्त्वप्रदीपादृतपाठापेक्षया टीकादृतपाठापेक्षया च भिन्नः सः । तत्र तस्य व्याख्याततत्वात् ।

५६. पृ. २१ 'इत्यादिश्रुतिविरोधः' इति प्र. रा. पाठौ । ह. पाठे तु 'इत्यादिविरोधः' इति । वेदगर्भायेऽपि तथैव दृश्यते ।

५७. पृ. २१ 'यतो जगत्स्थाननिरोधसंभवः' इति पठ्यते प्र.रा.वे. पाठेषु । ह. पाठे नास्ति । तत्त्वप्रदीपटीकादृतपाठापेक्षया भिन्नः सः । तत्र तस्य व्याख्यानात् ।

५८. पृ.२१ 'निस्सङ्गेनापि कर्मणा' इति पठ्यते प्र. रा. वे पाठेषु । ह. पाठे तु न । तत्त्वप्रदीपे संपूर्णतया उपात्तोऽपि अयं भागः न व्याख्यातः । नापि टीकायां व्याख्यातः । ह. पाठ एव श्रेयान् ।

५९. पृ.२१ 'जुष्टं यदा पश्यत्यन्यमीशम्' इत्यादि पठ्यते प्र.रा.वे. पाठेषु । 'अन्यमीशम्' इत्यादिरेव ह. पाठे पठ्यते । सः तत्त्वप्रदीप-टीकादृतपाठापेक्षया भिन्नः । तत्र तस्य व्याख्यानात् ।

६०. पृ.२२ 'सर्वान्तर्यामिक : ' इति प्र. रा.वे. पाठाः । 'सर्वान्तर्यामकः' इति ह. पाठः ।

६१. पृ.२२ 'प्रमादात्मकत्वाद्बन्धस्य' इति प्र. रा.वे. पाठाः । 'प्रमादात्मकत्वाच्च बन्धस्य' इति ह. पाठः तत्त्वप्रदीपादृतपाठापेक्षया भिन्नः ।

६२. पृ. २३ 'सोऽश्नुते सर्वान्कामान्' इति प्र. रा. वे पाठाः । ह. पाठे तु नास्ति । तत् टीकाविरुद्धम् ।

६३.पृ.२३ ‘अन्तस्समुद्रे’ इति प्र. रा. वे. पाठाः । हृ. पाठे अन्तः’ इति नास्ति। तत्त्वप्रदीपे तदुपादानात्, टीकायां व्याख्यानाच्च तत्त्वप्रदीप-टीकादृतपाठापेक्षया भिन्नः सः ।

६४. पृ.२४ ‘ब्रह्मान्वविन्दद्दश होतारमर्णे इति प्र. रा. वे. पाठेषु । हृ. पाठे नास्ति। तत् विरुद्धम्। टीकायां व्याख्यानात्, तत्त्वप्रदीप उपादानाच्च।

६५. पृ. २४ विचक्षते मरीचीनां पदमिच्छन्ति वेधसः’ इति प्र. रा. वे. पाठेषु । हृ. पाठे नास्ति । तत्त्वप्रदीप टीकापाठापेक्षया भिन्नः सः। तत्र एतस्य व्याख्यानात्।

६६. पृ. २४ इति चतुर्वेदशिखायाम्’ इति प्र. रा. पाठौ। ‘इति च चतुर्वेदशिखायाम्’ इति हृ. पाठ ग्राह्यः।

६७. पृ. २४. तथा भेदव्यपदेशाच्चान्य’ इति सूत्रे भाष्ये देवानां हृदयं ब्रह्मान्वविन्ददित्यादिभेदव्यपदेशात्’ इतीदानीं पठ्यते। परन्तु भाष्यस्वारस्यात् ‘देवानां हृदयं ब्रह्मान्वविन्दन् इत्यादि इत्येव पाठेन भाव्यम् इति भाति। ‘भेदव्यपदेशात्’ इत्यंशो व्यर्थः। ‘इत्यादि’ इति भाष्यस्य ‘भेदव्यपदेशात्’ इति सौत्रपदेनान्वयसंभवात्। तथैव बहुत्र भाष्याच्च।

६८. पृ.२४ इत्याकाशस्यानन्दमयत्वे’ इति प्र. रा. वे. पाठाः। ‘इत्याकाशस्यानन्दत्वे’ इति हृ. पाठे। न किमपि निश्चीयते।

६९. पृ. २५ ‘परो मात्रया तन्वा वृधान’ इत्येवान्मात्रमेव पठ्यते प्र. रा. वे पाठेषु। ‘न ते महित्वमन्वश्नुवन्ति’ इति सर्वोऽपि भागः पठ्यते हृ. पाठे। नात्र विनिगमकम्।

७०. पृ.२५ तस्यैव हि तल्लिङ्गम्’ इति प्र. रा. पाठौ ‘तस्य हि तल्लिङ्गम्’ इति हृ. पाठे।

७१. पृ.२५ इति ब्राह्म’ इति प्र. रा. पाठौ। ‘इति च ब्राह्मे’ इति हृ. पाठे।

७२.पृ.२७ गायति त्रायति च' इति प्र. रा. पाठौ। 'गार्यात च त्रायति च' इति हृ. पाठे। 'त्रायते चेति पाठान्तरम्' इति वेदगर्भीयम्। तत्त्व-प्रदीपानुगुणः हृ. पाठो दृश्यते। टीकायां न स्पष्टम्। अडयार्मातृकास्थवे. पाठोऽपि तत्त्वप्रदीपानुगुणः।

७३.पृ.२७ 'देवाभिधो ह्यसौ। सर्वलोकाभिधो ह्येषः' इति प्र. रा.वे. पाठाः। उभयत्र हिशब्दस्थाने अपिशब्दः हृ. पाठे समीचीनो भाति।

७४. पृ. २७ 'पाद इति' इति प्र. रा. पाठौ। 'पाद इति च' इति च शब्दोऽधिकः हृ. पाठे । नात्र विनिगमकम्।

७५. पृ. २७ 'इतिवद्भिन्नं च' प्र. पाठः। 'इतिवद्भिन्नं च शब्दात्' इति रा. पाठः प्रामादिक इव भाति।

७६.पृ.२८ 'विष्णुत्वं न विद्यते' इति हृ. रा. पाठो। 'विष्णुत्वं न युज्यते' इति वे पाठः। भावदीपेऽपि तथा। वे. पाठः अर्थानुगुणः शब्दानुगुणश्च।

७७. पृ. २९ 'सर्वशास्तृत्वहेतुतः' इति प्र. रा. वे. पाठाः। 'सर्वशास्तृत्वतो हरिः' इति हृ. पाठः। 'शास्तृत्वतः ' इति भावदीपे प्रतीकं गृह्यते। तदनुसारेण सर्वशास्तृत्वतो हरिः' इत्येव युक्तः इति भाति।

७८. पृ. २९ 'इति पाद्मे' प्र. रा. पाठौ। 'इति च पाद्मे' इति हृ. पाठः।

७९.पृ.३० 'इति ब्रह्माण्डे' प्र. रा. पाठौ। 'इति च ब्रह्माण्डे' इति हृ. पाठः।

तदेवं प्रत्येकशः विचारितेषु पाठभेदेषु एतन्निश्चीयते हृषीकेशतीर्थीय एव वा रामचन्द्रतीर्थीय एव वा न सर्वात्मना मूलपाठ इति। हृ. पाठः अनेकत्र टीकादृतपाठापेक्षया भिन्नः। सप्तदशवारं तत्त्वप्रदीपादृतपाठापेक्षया भिन्नश्च। अत्र निर्दिष्टसंख्यानुसारेण ५,१०,१८, १९, २२, २३, ३३,३८,

४१,५०, ५५,५७,५९,६१, ६३,६४, ६५ इत्येतत्संख्याकाः पाठाः तत्त्वप्रदीपादृतपाठापेक्षया भिन्नाः हृ. पाठे दृश्यन्ते। यद्यपि हृ.पाठः अनेकत्र तत्त्वप्रदीपानुगुण एव। तथापि अनुगुणपाठवत् भिन्नपाठोऽपि बहुत्र दृश्यते। एवं स्थिते कथं तत्त्वप्रदीप-टीकादृतपाठापेक्षया भिन्नपाठस्य मूलपाठता ?

एवमपि यदि हृ. पाठस्य मूलपाठता, तर्हि मूलपाठद्वयं भवेत्। त्रिविक्रम-पण्डिताचार्यैः आचार्याज्ञया टीकाकरणात्, अवश्यं भगवत्पादसम्मततया वाच्यत्वात्। सर्वत्र च तत्त्वप्रकाशिका तत्त्वप्रदीपमनुसरति। क्वचश्च 'इति संप्रदायविदः' इति त्रिविक्रमार्यानुल्लिखति च। नातः टीकायामस्ति दोष-संभावनालेशोऽपि। तथा हृषीकेशतीर्थानामपि आचार्यशिष्यत्वात् तत्पाठः आचार्यसंमतः अवश्यं भवेत्। क्वचिच्च विरोधः प्रामादिको भवेत्। तस्मात् मूलपाठद्वयमङ्गीकरणीयं विद्वद्भिः। यथा च अनेकत्र गोविन्दाचार्यैः स्वकीयपादटिप्पणीषु दर्शितम्।

एवमेव अक्षोभ्यतीर्थीयत्वेन प्रचारम् इदानीमेव प्राप्तः वस्तुतः रामचन्द्रतीर्थीयः पाठस्तु प्रचलित पाठस्यैव शाखाविशेषः। अनेकत्र टीकाननुगुणत्वात्। अनेकत्र प्रामादिकत्वाच्च। पूर्वोक्तरीत्या नापि तस्य पाठस्य अक्षोभ्यतीर्थलिखितत्वे प्रमाणम्।

**उपसंहारः**

तदेवं ज. पाठ-हपाठयोरविरोधसंपादनसंभवात् मूलपाठद्वयं प्राचीन-कालादारभ्य आसीत् इत्यवश्यमङ्गीकर्तव्यम्। तदेवं संकीर्णबुद्धीनाम् अस्माकमाचार्य एवं शरणमित्युपरम्यते। नैतत् परावधीरणया लिखितम्, किन्तु श्रद्धाजाड्यात्। तथोक्तं टीकाकृद्भिः-

**'न वैदुष्यभ्रान्त्या न च वचनचातुर्यकुधिया**
**न मात्सर्यावेशान्न च चपलतादोषवशतः।**
**परं श्रद्धाजाड्यादकृषि कृतिराचार्यवचसि**

स्खलन्नप्येतस्माज्जगति न हि निन्द्योऽस्मि विदुषाम्।।' इति।

यद्विद्याधीशगुरोः शुश्रूषान्या न रोचते तस्मात्।
अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा।।

दुर्वादिध्वान्तरवये वैष्णवेन्दीवरेन्दवे।
श्रीराघवेन्द्रगुरवे नमोऽत्यन्तदयालवे ॥

## १. परिशिष्टम्

**प्र.ह. पाठयोः सूत्रपाठभेदाः**

१. 'क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्' (१-३-९-३५) इति प्र.पाठः। 'क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्' इति ह.पाठः। परन्तु ह. पाठेऽपि 'क्षत्रियत्वावगतेश्च' इति भाष्यस्य सूत्राननुसारित्वप्रसङ्गः। सूत्रानुसारिणा हि भाष्येण भाव्यम्।

२. 'एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः' (२-१-४-१३) इति प्र पाठः। एतेन शिष्टाऽ परिग्रहा अपि व्याख्याताः' इति ह. पाठः।

३. 'युक्तेश्च' इति सूत्रं ज. पाठे 'ज्ञोऽत एव' इत्यधिकरणे वर्तते (२-३-१०-१८)। परन्तु ह. पाठे नास्ति, तद्वाक्यं भाष्यत्वेन पठ्यते (द्र० गो.टि. पृ.९७)।

४. 'स्मरणाच्च' इति सूत्रं ज. पाठे (३-१-१३-२३) । ह. पाठे नास्ति। भाष्यत्वेन पठ्यते।

५. तथा 'दर्शनात्' इति ज. पाठः (३-२-१७-३३), 'दर्शनात्तु' इति ह. पाठः।

६. 'अन्यथात्वं च शब्दादिति चेन्नाविशेषात्' (३-३-२-७) इति यद्यपि सूत्रस्य मुद्रितः प्र पाठः। चशब्दो नास्ति ह. पाठे। तथापि कुत्रापि तस्य व्याख्यानाभावात् नात्र गोविन्दाचार्यदर्शितादिशा पाठभेदावसरः।

७. 'प्रदानवदेव हि तदुक्तम्' (३-३-२६-४४) इति प्र पाठः। हिशब्दो नास्ति हृ. पाठे।

८. 'शब्दश्चातोऽकामचारे' (३-४-४-३१) इति मुद्रितः प्र पाठः। 'शब्दश्चातोऽकामकारे' इति हृ. पाठः।

९. 'आप्रायणात्' इति ज. पाठः (४-१-७-१२), 'आप्रयाणात्' इति हृ. पाठः।

१०. 'समना चासृत्युक्रमादमृतत्वं चानुपोष्य' (४-२-६-७) इति प्र. पाठः। हृ. पाठे तु 'समना' इति पदं 'समानाम्' इति पठ्यते। मुद्रणदोषो भवेत्। न कापि टिप्पणी दृश्यते।

११. 'तदपीतेः संसारव्यपदेशात्' (४-२-६-८) इति ज. पाठः। तदापीतेः संसारव्यपदेशात्' इति हृ. पाठः।

१२. 'अतश्चायनेऽपि हि दक्षिणे' (४-२-९-२१) इति प्र पाठः। हि शब्दो नास्ति हृ. पाठे।

## २. परिशिष्टम्

### जयतीर्थग्रन्थेषु उल्लिखिताः पाठभेदाः

स्वग्रन्थेषु जयतीर्थैरुल्लिखिताः पाठभेदाः प्रायः हृ. पाठे उपलभ्यन्ते। तत्र हृ. पाठस्य पृष्ठसंख्या निर्दिष्टा। आहत्य पञ्चदशपाठभेदेषु नव तत्र लभ्यन्ते।

### ते अनुव्याख्यानन्यायसुधायां षड् यथा

१. 'एतमेव तथा सन्तं शतर्चीत्यादिनामभिः। आचक्षत इति ह्यत्र सन्तमित्यवधारणा।।' सुधा 'अवधारणेति क्वचित्पाठः' (सु. १९१८) ('अवधारणात्' इति हृ. पाठः, पृ.५३)।

२. 'ऐक्यप्रतीत्यभावेन भेद एवं गवाश्वयोः। स एवेति प्रतीतो हि विशेषो

नाम भण्यते ।।' सुधा 'गवश्वयोरिति प्रमादपाठः। मूलकोशेष्वदर्शनात् ।' (सु. ४६९०) ('गवश्वयोः' इति ह्. पाठः, पृ.१४१)

३. 'कर्मक्षयस्तथोत्क्रान्तिमार्गो भोगश्चतुष्टयम्। फलं मोक्ष इति प्रोक्तः क्रमात् पादेषु चोदितः ॥' सुधा 'क्वचित्पाठः प्रोक्तमित्युदितमिति च। तत्र यथास्थान एव इतिशब्दः। आद्ये मोक्षानुवादेन फलचतुष्टयात्मकत्वं। द्वितीये तु विपर्ययेण।' (सु. ५४३९) (अत्र परं ह्. पाठेऽपि एवमेव पठ्यते (२००) क्वाचित्कः पाठः ह्. पाठे नास्ति।)

४. शिरः कराद्यैरपि मुक्तिभाजो युक्ता यतस्ते पुरुषा इदानीम्।

यथेतिपूर्वा अनुमाश्च जोवस्वरूपमङ्गादिकमावयन्ति ।।'

सुधा आवयन्तीति करणे कर्तृत्वोपचारः। आपयन्तीति क्वचित्पाठः' (सु.५६०५)। ('अङ्गादियुगापयन्ति' इति ह्. पाठः, पृ. २०४)

५. 'व्यवस्थितिस्त्वविशेषस्थितिश्च निषेधसामान्यविधिक्रियाणाम्।

विभक्तता चात्वरयैव सिद्धिर्विपक्षसम्प्राप्तिविरोधहेतवः ॥' सुधा 'विपक्ष -सम्प्राप्तिविरुद्धहेतव इति क्वचित्पाठः। तत्र सम्प्राप्तिशब्दः करणसाधनः' (सु.५६१९)। ('संप्राप्तिविरुद्धहेतवः' इति ह्.पाठः, पृ. २०५)।

**६.केवलं तु कथा वादो जल्पोऽर्थादिव्यपेक्षया।**
**सतामेव कथा ज्ञेया वितण्डा त्वसतां सताम् ॥**
**उभाभ्यां साधनं चैव दूषणं वादजल्पयोः।**
**सद्भिरागम एवैकः प्रयोज्योऽभीष्टसाधकः ॥'**

' सुधा 'क्वचित्सतामेवेत्यादिसार्धश्लोको वादजल्पयोरित्यतः परं पठितः। तत एतामेव सङ्गतिमाश्रित्य टीकाकृता तत्रैव व्याख्यातः।' (अत्र एवं क्वाचित्कः पाठः ह्. पाठे नास्ति। स च क्वाचित्कपाठः टीकोल्लिखितप्रकारेण सन्न्यायरत्नावल्यां लभ्यते।)

**गीताभाष्यप्रमेयदीपिकायां पञ्च यथा-**

१. 'कामः स्वल्पः कादाचित्कोऽपि इति मूलपाठः' (६.२४, पृ.२९६[1])। (हृ. पाठेऽपि मूलपाठवदेव वर्तते पृ.६९)।

२. 'क्वचित्पाठो मद्भावं मद्भद्भावम् इति' (८.५, पृ. ३५०)। (मद्भावं मद्भद्भावम्' इति हृ.पाठः, पृ.८२)।

३. 'अत्रात्मकमिति पाठः' [2](८.५, पृ. ३५०)। (हृ. पाठेऽपि 'आत्मकम्' इत्येव वर्तते, पृ.८२)।

४. 'भाष्ये पुराणे च अनुष्ठायेत्याकारस्थाने क्वचिदीकारो लेखकदोषेण पतितः, मूलकोशेष्वदर्शनात्' (८.२८, पृ. ३६८)। (ईकारघटितः पाठः हृ. पाठे, पृ.८७-८८)।

५. 'कर्म हेतु इति क्वचित्पाठः' (१८.१६[3], पृ.५६७)। ('कर्म हेतु' इति पाठः हृ. पाठे पृ.१५३)।

**तत्त्वनिर्णयटीकायाम् एकत्र यथा-**

तत्त्वनिर्णयटीका 'इतः परं प्रत्यक्षानुमानसिद्धत्वे च इत्यतः पूर्वं वाक्यद्वयं. मूलकोशेष्वदर्शनात्प्रक्षिप्तमत्याहुः। तथापि गङ्गाजलानुप्रविष्टक्षुद्रनदीजलस्येव तस्याप्युपादेयत्वात् तद्व्याख्यानं क्रियते।' (प्र.परिच्छेदे, पृ.३२३[4])। (अत्र तु मूलकोशेष्वदर्शनात् 'विमतं सकर्तृकं कार्यत्वात्' इत्यादिवाक्यद्वयं प्रक्षिप्तमति निश्चये सत्यपि व्याख्यानं जयतीर्थानामभिमतम्। एतेनैव हेतुना पद्मनाभतीर्थविचितटीकायां तद्व्याख्यानं वर्तते। वाक्यद्वयस्यापि व्याख्यानं

---

1. रुचिराचार्यमुद्रितपुस्तकस्य पृष्ठसंख्या।
2. 'आत्मकम्' इति मूलपाठः इति वा क्वचित्पाठः इति वा कोऽस्यार्थः कः इति न ज्ञायते। परन्तु रुचिराचार्यमुद्रितायां प्रमेयदीपिकायां आत्मिकाम् इति पाठो दृश्यते।
3. गोपुस्तकरीत्या 18.15.
4. एतत्तु मध्वराद्धान्तसंवर्धकसभाप्रकाशितपुस्तकस्य पृष्ठसंख्या। गो पुस्तकस्य तु भाग. ५.पृ.६।

नारायणपण्डिताचार्यकृतायां टीकायां नास्ति। नारायणपण्डिताचार्याभि-प्रायमेव[1] जयतीर्था अनुवदन्तीति ऊह्यते। अथ वा स्वगुरूणामक्षोभ्यतीर्थानाम्, अन्यथा सुधायामिव तन्मतं केचित् इत्येवानूदितं स्यात्। परन्तु ह्.पाठे आदिमम् एकं वाक्यं लभ्यते। पाठकाले आचार्यैः अनुमानस्य नियत-प्रामाण्याभावसाधनसंदर्भ प्रसङ्गात् विमतं सकर्तृकं कार्यत्वात् इत्याद्यनुमानस्य दूषणमेवं कर्तुं शक्यते इत्युक्तमेव कैश्चिच्छिष्यैः ग्रन्थस्थतया व्याख्यातम्, कैश्चिच्च ग्रन्थस्थतामनभ्युपगम्य प्रासङ्गिकतया तत्त्यक्तं भवेत् इति।

अत्रेदमवधेयम्- जयतीर्थैः पद्मनाभतीर्थपाठः संप्रदायश्च बहुत्रादृतोऽपि अनेकत्र अन्यः पन्थाः अनुसृतः। सुधायाम् अनेकवारं टीकाकृतां[2] पद्मनाभ-तीर्थानां पक्षः प्रकारान्तरेण व्याख्यातः, यथा वादो जल्पो वितण्डा इति अनुव्याख्यानव्याख्यावसरे च टीकाकृतां क्वाचित्कपाठावलम्बनं च निरूपितम्। तथापि नास्ति प्राचीनटीका-नवीनटीकयोः विरोधः। प्रायः तदनुसारेण प्रवृत्तत्वात्। जयतीर्थैश्च उल्लिखितः मूलकोशश्च अन्य एव आसीत्, यः पद्मनाभतीर्थोपयुक्तादन्यः।

तत्त्वनिर्णयटीकायां च 'मूलकोशेष्वदर्शनात् प्रक्षिप्तमित्याहुः' इति मूल-कोशेष्वदर्शनं न पराभिप्रेतमनूद्यते, किन्तु मूलकोशेष्वदर्शनं स्वस्याप्यभि-मतमेव, किन्तु तत्र प्रक्षिप्ततया अव्याख्यातव्यत्वमेव पराभिप्रेतम् अनूद्यते। अन्यत्र सुधायामपि मूलकोशोल्लेखात्।

**प्रमाणलक्षणटीकायां द्वयं यथा-**

1. इदमत्रावधेयम्। सुधायामपि स्थलद्वये जिज्ञासाधिकरणे समुदायाधिकरणे च केचित् इत्यनुवदन्ति जयतीर्थाः। ते च केचित् नारायणपण्डिताचार्याः एव पद्मनाभतीर्थानां टीकाकारत्वेन जयतीर्थैरुल्लेखात्। अन्यस्य च टीकाकर्तुरभावात्।
2. अत्रेदमवधेयम्। जयतीर्थैः यत्र कुत्रापि स्वकीयानां व्याख्याग्रन्थानां केवलं टीका इति नाम न सूचितम्। केवलं व्याख्या इति, पञ्चिका इति, विवरणम् इति, विषमपदवाक्यार्थविवरणम् इति वा नामनिर्देशः कृतः।

१. 'अशेषगुरुमीशेशम्' (प्र.ल)। 'सर्वज्ञं गुरुमिति पाठे सार्वज्ञ्यं गुरुत्वस्योपपादकम्' (पृ.१[1])

२. 'योगिज्ञानमृजूनामनादिनित्यम्' (प्र.ल)। 'योगिज्ञान इति पाठे ज्ञानमिति शेषः' (पृ.२३) (ह्.पाठे एवम्)।

**गीतातात्पर्यन्यायदीपिकायाम् एकं यथा-**

यथा 'कर्तृत्वं द्विविधं प्रोक्तं विकारश्च स्वतन्त्रता।

विकारः प्रकृतेरेव विष्णोरेव स्वतन्त्रता।। इति पैङ्गिश्रुतेः कार्यते ह्यवशः इत्यत्र अवशो विष्णुवशः।' (गी. ता. ३.५-८, गो.पु.पृ. ३९-४०) न्यायदीपिका-'श्रुतिरिति कुत्रचित्पाठः।'[2]

## ३. परिशिष्टम्

'गवाश्वयोः' इति प्रयोगविषये वैयाकरणानामाशयः

**प्रो.वि.वेंकटराजशर्मणामाशयः[3]**

"गवाश्वयोः' इत्यपि प्रयोगः पाणिन्यनुसारेण साधूकर्तुं शक्यते। तथा हि अधिकरणैतावत्त्वे च' इति सूत्रेण समासघटकपदार्थद्रव्यसंख्यावगमे एकवद्भावो निषिध्यते। दश दन्तोष्ठाः इत्युदाहरणम्। एवमत्रापि द्वयोरिति प्रकरणबलादध्याहाराद्वा लभ्यते इति 'गवाश्वयोः' इति साध्वेव।

---

1. एतत्तु मध्वराद्धान्तसंवर्धकसभाप्रकाशितपुस्तकस्य पृष्टसंख्या।

2. 'श्रुतिरिति क्वचित्पाठः' इत्यतः पूर्वम् एतत् पठ्यते- 'कायंत इत्यत्र स्वतन्त्र-कर्तुरन्यस्य अप्रतीतेः प्रकृतिगुणानामेव स्वतन्त्रकर्तुत्यमुच्यते इत्यन्यथाप्रतीतिनिरासायाह-कर्तृत्वमिति ।। अत्र गुणानां विकारकर्तृत्वमेवोच्यते। न तु स्वतन्त्रकर्तृत्वम्। अवश इति विष्णोः स्वतन्त्रत्वोक्तेः। अवशपदेन स्वानधीनत्वं गृतीत्वा गुणानां स्वतन्त्रकर्तृत्वमेव किं न गृह्यत इति चेन्न। 'कर्तृत्वम् इति श्रुतिविरोधादिति भावः ।'

3. प्रो.वि.वेंकटराजशर्मा, तिरुवनन्तपुरस्थसंस्कृतमहाविद्यालयस्य पूर्वप्रधानाचार्याः। ततश्च एकोल् प्रांकायिस् डे एक्स्ट्रोम् ओरियण्ट् संस्थायां संमानितप्राध्यापकाः आसन्।

'गवश्वयोः' इति मूलपाठो न युक्तः। अवङादीनाम् ('एङः पदान्तादति', 'सर्वत्र विभाषा गोः', 'अवङ् स्फोटायनस्य' इत्येतेषाम् अवादेशबाधकत्वात्। न हि पदान्तादेकाराद् ओकाराद्वा अकारे परे 'एचोऽयवायावः' इत्यनेन अवादेशः क्वापि दृश्यते।

गवयादिः अव्युत्पन्नं प्रातिपदिकम्। यथाकथंचित् तत्र तदङ्गीकारेऽपि प्रसिद्धे गवाश्वादिशब्दे तत्कल्पनस्य अन्याय्यत्वात् तन्न युक्तम्।

सारस्वतव्याकरणेन अवर्णागमाभावेऽपि अव् इत्यादेशो न भवति। 'एङः पदान्तादति' इति पूर्वरूपेण बाधात्। तथा च गोऽश्वयोः इत्येव स्यात्।

सारस्वतव्याकरणेन गवाश्वमिति रूपाभावे 'गवाश्वप्रभृतीनि' इति सूत्रकारनिर्देशोऽसंगतस्स्यात्। पाणिनेः अवङेव सारस्वतव्याकरणे अवर्णागमः[1]।

किं च सारस्वतव्याकरणे एवं सति गवैडकम्, गवाविकम् इत्यादिषु द्वन्द्वेषु किं भवति ?।

शं. वा. चं. व्याख्योक्तरीत्या गवाश्वं च गवाश्वं च गवाश्वे। तयोः गवाश्वयोः इति रूपसंभवेऽपि तत्र अर्थसंगतिश्चिन्त्या।

यदि च विभाषात्वाद् अवङ् न भवति, तदा गोऽश्वयोः इति वा, गोअश्वयोः इति वा भवेत्, न तु गवाश्वयोः इति, यथा 'अपशवो वा' इति वेदे 'गोअश्वाः' इति[2]।

---

1. अवर्णागमः इति न अवरूप आगमः, किन्तु अवर्णस्य आगम स्वैरम् इत्यादिषु एकारागमदर्शनात्।
2. पूर्वरूपपक्षे गोऽश्वम्, गाऽश्वा इति। एतनु लघुशन्देन्दुशेखरे व भूतानि इति सूत्र दृश्यते। (द्वितीयभागे पृ. १३५)।

## प्रो. वि. श्रीवत्साङ्काचार्याणामाशयः[1]

यदा 'गवाश्वम्' इति रूपं विवक्षितम् तदानीमेव तस्य शब्दस्वरूपस्य तथैव 'गवाश्वप्रभृतीनि च' (२४-११) इति गणे पाठमभ्युपगम्य तस्य साधुत्वं सूत्रेणाभ्युपगतम्। यथा तु स्फोटायनस्य मतेन 'गो अग्रम्' इत्यत्र 'गोअग्रम्', 'गवाग्रम्' इति अवङादेशविकल्पविधानात् रूपद्वयम्, तद्वत् अत्रापि 'गोः अचि परे अवङ् वा स्यात्' इत्याश्रित्य गो अश्व इति द्वित्वविशिष्टयोः द्विवचनेनैव निरूप्यत्वेनाभीष्टयोः विवक्षा तदानी द्विवचनं निराबाधम्। पाक्षिकेऽवङि, सवर्णदीर्घे, द्वित्वे विवक्षिते द्विवचनस्य सामञ्जस्यात्। 'अधिकरणैतावत्त्वं च ' इति सूत्रेण इयत्तानिर्धारणे एकवद्भावप्रतिषेधात्।

'गवाश्वप्रभृतीनि च' (२-४-११) इति गणे ये गवाश्वम् इत्यादयः शब्दाः पठिताः, ते गवां च अश्वानां च समाहारः इति वृत्तिमाश्रित्य प्रत्येक व्यक्तिबहुत्वे विवक्षिते एव, वृत्तिबलादेकवद्भावेन पठिताः इत्यवधेयम्। प्रकृते तु गोव्यक्तेः, अश्वव्यक्तेश्च एकस्या एव प्रत्येकं विवक्षणात्, समुदिते द्विवचनं निराबाधमेव। 'अभिधानलक्षणाः कृतद्धितसमासान्ताः' इति व्यवस्था-श्रयणात्, कुमारिलप्रभृतिभिः सर्वसंमतैः शिष्टैः 'गवाश्वयोः' इत्यस्याभि-हितत्वात् नात्रासाधुत्वं शङ्कनोयम्। यत्र समाहारद्वन्द्वः तत्रैव 'स नपुंसकम्' इति प्रारभ्य 'गवाश्वप्रभृतीनि च ' इति सूत्रम्। तस्मात् समाहारद्वन्द्व एव एकवद्भावः, न तु इतरेतरद्वन्द्वे।

'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इति परिभाषया सर्वस्यापि द्वन्द्वस्य 'सर्वः प्लुता विकल्प्यते' इत्यत्रेव पाक्षिकत्वादपि प्रयोगोऽयं साधुः। 'एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः, सह वा निवृत्तिः' इत्यभिधाय

1. प्रो. वि. श्रीवत्साङ्काचार्याः मद्रपुरीयकलाशालायाः प्राक्तनमुख्याचार्याः। तदानीं पाण्डिचेरि फ्रेञ्च् इन्स्टिट्यूट् संस्थायां समानितप्राध्यापका आसन्।

'क्वचिदेकदेशोऽप्यनुवर्तते' इत्यत्रेव, अत्र 'क्वचित्' इत्यनुक्त्वा 'सर्वो द्वन्द्वः' इति सर्वशब्दश्रवणात् सर्वेषामपि द्वन्द्वानां[1] ग्रहणादपि अस्य प्रयोगस्य साधुत्वमवश्यमेष्टव्यम्। अन्यथा 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययः' इत्युक्त्वा 'उभयगतिरिह क्वचिद्भवति' इति यथा निर्दिष्टम् तथा अत्रापि 'क्वचित्' इत्युक्तं स्यात्। न चोक्तम्। तेन ज्ञायते .. यः कोऽपि द्वन्द्वः विभाषया एकवद्भावं लभते, पक्षं यथाप्राप्तं वचने इति। महाविभाषया यथा वा समास-विग्रहवाक्ययोः पाक्षिकत्वम्, एवं महाविभाषया यथा वा तद्धितप्रत्ययानां वैकल्पिकत्वात् पक्षे तदर्थवाक्यसाधुत्वम्, तथा अत्रापि इति निष्कर्षः।

'येषां च विरोधः शाश्वतिकः' (२-४-९) इति सूत्रे 'चकारः पुनः अस्यैव समुच्चयार्थः। तेन पशुशकुनिद्वन्द्वे विरोधिनाम् अनेन नित्यम् एकवद्भावो भवति अश्वमहिषम्, श्वसृगालम्, काकोलूकम्' इति काशिका। तेन ज्ञायते यत्र पशुद्वन्द्वे शाश्वतिकविरोधो न तत्र नित्यम् एकवद्भावः, अपि तु पाक्षिकः इति। तेनाप्यत्र 'गवाश्वयोः' इति रूपं साध्वेव। न हि अश्वमहिषयोरिव गोः अश्वस्य च शाश्वतिको मिथो विरोधः।

'गवाश्वप्रभृतीनि कृतैकवद्भावानि गणे पठ्यन्ते। तेषामनेन साधुत्वमात्रं विधीयते, न त्वेकवद्भावः इति दर्शयन्नाह - गवाश्वादीनि इति' इति न्यासस्य, 'गवाश्वप्रभृतीनि कृतैकवद्भावान्येव पठ्यन्ते, तेषामनेन साधुत्वमात्रं विधीयते, न त्वेकवद्भावः इत्याह- गवाश्वप्रभृतीनि इति' इति पदमञ्जर्याश्च सम्यगध्ययने, एकवद्भावविधायकं, नियामकं वा नेदं सूत्रम्, अपि तु गवाश्वम् इति इत्येकवद्भावघटितप्रयोगाणां साधुत्वान्वाख्यानपरम् इति ज्ञायते।

1. समाहारद्वन्द्वानां तत्रापि येन केनापि सूत्रेण उत्सर्गरूपेण अपवादरूपेण बाधकबाधकरूपेण वा प्रवृत्तानां सर्वेषामपि द्वन्द्वानां ग्रहणार्थमत्र परिभाषायां सर्वशब्दग्रहणम् इति व्यक्तं वैयाकरणनिकाये।

तेनापि द्विवचनोपपत्तिरभ्यूहितुं शक्या[1] ।

> **'गवाश्वयोः' इति सुधाप्रयोगः साधुरेव हि ।**
> **पञ्चात्र कारणानीति श्रीवत्साङ्केन दर्शितम् ॥**

**विद्वद्वर्याणां जि.महाबलेश्वरभट्टानामाशयः[2]**

'गवाश्वम्' इति शब्दविषये प्रस्तूयते किंचित्। तथा हि- गौश्च अश्वश्च अनयोः समाहारः गवाश्वम्। गावश्च अश्वाश्च एतेषां समाहारः गवाश्वम्। 'गवाश्वप्रभृतीनि च' (२-४-११) इति सूत्रेण एकवद्भावः। 'यथोच्चरितं द्वन्द्ववृत्तम्' इति सूत्रेऽस्मिन् विद्यमानं वार्तिकम्। द्वन्द्वप्रयुक्तमिदं कार्यं गणे यथोच्चारितशब्दविषयम् इति वार्तिकस्यार्थः। अस्मिन् वार्तिके कैयटोऽप्याह - 'गणे यादृशाः कृतावङः पठिताः द्वन्द्वास्तादृशानामेवेदं कार्यमेकवद्भावलक्षणं भवतीत्यर्थः। यदा त्ववङ् नास्ति विकल्पितत्वात् तदा पशुद्वन्द्वे विभाषा भवति, गोऽश्वं गोऽश्वाः इति। एतेन गणपाठरूपं विवक्षितमित्युक्तं भवति' इति।

अत्र कृतावङः निर्देशात् 'गवाश्वम्' इत्येव, न तु गवाश्वौ इति। अवङ्भावपक्षे तु 'विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशु...' (२-४-१२) इति सूत्रेण एकवद्भावस्य विकल्पितत्वात् गोऽश्वम् इति गोऽश्वौ इति च पूर्वरूपे रूपद्वयं भवति। 'सर्वत्र विभाषा गोः' (६-३-३२२) इति प्रकृतिभावपक्षे गोअश्वम्, गोअश्वौ इति च भवति रूपद्वयम्। एवं च गवाश्वम्, गोऽश्वम्, गोअश्वम्, गोऽश्वौ, गोअश्वौ, गोऽश्वाः, गोअश्वाः इति च रूपाणि भवन्ति[3]।

---

1. केचिदेतद्धेतुं नाङ्गीकुर्युः तथापि हेतुरेवायम्।
2. विद्वान् जि.महाबलभट्टाः। बेङ्गलूरुनगरस्थचामराजेन्द्रसर्वकारीयसंस्कृतकलाशालायां निवृत्तव्याकरणाध्यापकाः। तेषां १४-१२-०२ दिनीयं पत्रम् । ।
3. यथाक्रमं द्वित्वे बहुत्वे च विवक्षिते।

प्रेषिते पत्रे १४३ पृष्ठे[1] "गवाश्वयोः इति प्र पाठः' इत्यारभ्य 'अत्र स्मर्तव्यम्' इत्यन्ता टिप्पणी अस्फुटा। 'ननु तर्हि कथम्' इत्यारभ्य 'दुरुपपादमेव' इत्यन्तो भागो नावगतः। तत्र कैयटस्य पङ्क्तीनामुद्धरणेऽपि दोषः कृतः। 'कृतावङः' इति पदस्य, 'यदा त्ववङ् नास्ति....' इत्यादिवाक्यस्य च त्यागः कृतः। अतः उद्धृतपङ्क्तिभ्यः कैयटस्य आशयो न ज्ञायते। (कैयटपङ्क्तयः मया उपरि लिखिताः)। सारस्वतव्याकरणमुद्धृतं टिप्पण्याम्। किन्तु कैयट आह 'नियतकालाश्च स्मृतयो व्यवसायहेतवः। मुनित्रयमतेनाद्यत्वेसाध्वसाधुप्रविभागः' इति।अतःअष्टाध्याय्यनुगृहीतानामेव शब्दानां साधुत्वमद्यत्वे इति वैयाकरणानां समयः।

**अनुव्याख्यानपाठभेदाः**

अनुव्याख्याने सुधायां व्याख्यासु च विचारितासु आहत्य २८० प्र. पाठेषु ह.संमतपाठाः ५०, विमताः ८५ उपलभ्यन्ते। ग्रन्थगौरवभिया नात्रोपात्ताः।

प्रथमाध्याये 8

द्वितीयाध्याये 13

तृतीयाध्याये 22

चतुर्थाध्याये 7

आहत्य संमतपाठाः 40

आहत्य विमतपाठाः 85

तेन नात्र महान् विरोध इति सिद्धति।

****

1 एतत्तु पृष्ठं गोविन्दाचार्याटिप्पणीसहितसूत्रभाष्यपुस्तकस्य ।

## उपयुक्तग्रन्थसूची

**अनुव्याख्यानम् -**

१. द्र० सर्वमूलग्रन्थाः १.

२. संपादकः टि. आर्. कृष्णाचार्यः कुम्भकोणम् १९००.

काशिका श्लोकवार्तिकव्याख्या, अपोहवादभागव्याख्या अमुद्रिता, अड्यार्मातृकागारस्था, मत्समीपे विद्यमाना प्रतिकृतिः.

**गीतातात्पर्यम्**

१. सर्वमूलग्रन्थाः १.

**गीताभाष्यम्**

१.(प्रमेयदीपिकासहितम्) संपादकः बाळगारु रुचिराचार्यः, आचार्यविद्याधिष्ठानम्, बेङ्गळूरु. २००२. २. द्र० सर्वमूलग्रन्थाः १.

**तत्त्वप्रदीपः**

१.ब्रह्मसूत्रभाष्यम् तत्त्वप्रदीपिकया सहितम्, अखिलभारतमाध्व-महामण्डलम्, उडुपी, १९५८.

२. ब्रह्मसूत्रभाष्यम् ४.

**नयचन्द्रिका** नारायणपण्डिताचार्यकृता अनुव्याख्यानटीका, संपादकः सवणूरु गोविन्दराव्, धारवाड १९३७.

**न्यायदीपिका द्र० गीतातात्पर्यम् २.**

**न्यायरत्नाकरः द्र० श्लोकवार्तिकम्**

**न्यायविवरणम्**

रघूत्तमतीर्थकृतभावबोधसमेतम्, उडुपी, १९१७.

**न्यायसुधा (षट्टिप्पण्युपेता)** श्रीमदुत्तरादिमठः बेङ्गळूरु, १९८२.

**प्रमाणलक्षणम् (टीकया अनेकटिप्पणीभिश्च युतः)**

मध्वराद्धान्तसंवर्धकसभा, चेन्ने १९६९

प्रमेयदीपिका द्र० गीताभाष्यम्

**बृहदारण्यकभाष्यम् द्र० सर्वमूलग्रन्थाः १.**

**ब्रह्मसूत्रभाष्यम्**

१. द्र० सर्वमूलग्रन्थाः १. (गोविन्दाचार्यसंपादितम् )

२. द्र० सर्वमूलग्रन्थाः २. ( प्रभञ्जनाचार्यसंपादितम्)

३. (टीका-भावदीपसंवलितम्) संपादकः आर.एस पञ्चमुखी, विद्यासागर आर्. एस्. पञ्चमुखी इण्डालाजिकल् रिसर्च् सेण्टर्, नवदेहली, १९९४.

४. (टीकात्रय-सप्तटिप्पण्यादिबहुव्याख्याभिर्युतम्) संपादकः के टि. पाण्डुरङ्गी, द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठानम्, बेङ्गळूरु १९९८-२००२.
ब्रह्मसूत्रभाष्यार्थमञ्जरी (वेदगर्भनारायणाचार्यरचिता) द्वैतवेदान्ताध्ययन-संशोधनप्रतिष्ठानम्, बेङ्गळूरु

**ब्रह्मसूत्ररामानुजभाष्यम् (श्रुतप्रकाशिकासहितम्)**

संपादकः वीरराघवाचार्यः, उभयवेदान्तग्रन्थमाला, चेन्ने १९६७.

**भागवततात्पर्यम् द्र० द्र० सर्वमूलग्रन्थाः १.**

**मध्वविजयः मूलमात्रम्,**

संपादकः टि. आर् कृष्णाचार्यः, कुम्भकोणम्, १९०१.

**महाभारततात्पर्यनिर्णयः द्र० सर्वमूलग्रन्थाः १.**

**लघुशब्देन्दुशेखरः** नागेशभट्टकृतः चन्द्रकलाव्याख्योपेतः, काशी-संस्कृत-सिरीस् ५.

**विष्णुतत्त्वनिर्णयः (टीकया अनेकटिप्पणीभिश्च युतः)**

मध्वराद्धान्तसंवर्धकसभा, चेन्ने १९६९.

**शर्करिका द्र० श्लोकवार्तिकम्**

**श्लोकवार्तिकम्**

१. न्यायरत्नाकरसहितम्, संपादकः द्वारिकादास शास्त्री, प्राच्यभारती-सिरीस् १०, वाराणसी, १९७८

२. शर्करिकासहितम्, संपादकः कुन्हन् राजा, मद्रपुरीयविश्वविद्यालयसं स्कृतसिरीस् १७, मद्रपुरी, १९४६

**सन्न्यायरत्नावळी**

पद्मनाभतीर्थकृता अनुव्याख्यानटीका, संपादकः सवणूरु गोविन्दराव् पूना १९३७.

**सर्वमूलग्रन्थाः**

१. संपादकः बन्नञ्जे गोविन्दाचार्यः अखिलभारतमाध्यमहामण्डलम्, उडुपी बेङ्गळूरु, (पञ्च संपुटेषु) १९६९-१९८०.

२. संपादकः व्या.प्रभञ्जनाचार्यः व्यासमध्वसेवाप्रतिष्ठानम् बेङ्गळूरु १९९९.

**सारस्वतव्याकरणम्**

१. हरिदाससंस्कृतग्रन्थमाला ४ वाराणसी.

२. ( प्रसाद-चन्द्रकीर्तिव्याख्यायुतम्) काशीसंस्कृतसिरीस् १११, वाराणसी. -

****

# गोविन्दसम्पादनपद्धतिः

वि. विजयसिंहाचार्य तोटन्तिल्लयः

भागवतापरनामकसात्वतसंहितावक्ता शुकमहर्षिर्महीयते ब्रह्मरात इति। श्रोता च परीक्षिदुच्यते विष्णुरात इति। तथैव आचार्यगोविन्दो मम गुरुर्भक्त्या स्मर्यते मध्वरातः इति।

अखिलभारतमाध्वमहामण्डलप्रकाशनाख्यसंस्थया विंशतिमशतकस्य षष्ठे षष्ठान्ते च'सर्वमूलग्रन्थाः' प्राकाश्यं नीताः। प्रथमसम्पुटे प्रस्थान-त्रयीसम्बद्धानि मध्वभाष्याणि वर्तन्ते। द्वितीयेसम्पुटे महाभारतभाष्यभूते द्वे मध्वग्रथने वर्तेते। तृतीयसम्पुटे पुराणप्रस्थाननाम्नि भागवततात्पर्यनिर्णयः गुरुटिप्पणीसंवलितो वर्तते। चतुर्थेसम्पुटे श्रुतिप्रस्थाननाम्ना टीकाकल्पटिपण्या सहितौ ऋग्भाष्यखण्डार्थनिर्णयौ वर्तेते। पञ्चमे च सङ्कीर्णग्रन्थाः इत्युपशीर्षिकया युताः मध्वग्रन्थाः प्रकरणाचारतन्त्रस्तोत्रसम्बन्धिनो भान्ति।

एतेषां ग्रन्थानां सम्पादनकाले या घटना आसन् ताः सर्वा हृद्येव स्मरन् किञ्चिदेव वक्तुकामोऽस्मि। गोविन्दीयसम्पादनपद्धतिविमर्शने परमा-सक्तोऽहमिति सप्रश्रयं निवेदयेयम्।

ग्रन्थविमर्शनसन्दर्भे ग्रन्थकारस्य सम्पादकस्य वयोवस्थादिकं ज्ञायते चेद्वरम्। व्यासवाल्मीकिभाष्यकारान् विहायेतरेषां समेषां ग्रन्थकर्तॄणां भावविज्ञान एतत्सहकारि भवति।

गोविन्दाचार्यः विंशे वयसि वादरत्नावळीं विष्णुदासरचितां आङ्ग्ल पुरोवाक्संहितां सम्पादयामास। तदनन्तरं वामनपण्डिताचार्यरचितामानन्दमा लामपि। तत्रत्याष्टिप्पण्य एवावेदयन्ति विविधसमयवैशारद्यम्। परमपूज्यानां पुरुषायुषं जीवित्वा हरिचरणं परिगतानां पुत्तिकामठाधीशानां सुधीन्द्रतीर्थश्रीपादानां शतमनोत्सवस्मरणाङ्गतया तत्वप्रदीपस्त्रिविक्रमपण्डि ताचार्यग्रथितः अखिलभारतमाध्वमहामण्डलद्वारा प्रकाशितः। तत्रापि

गोविन्दाचार्य एव संशोधनादिधुरन्धर आसीत्। एवमेव स्वपण्डितोप्रभूषणो युवैव गोविन्दाचार्यो दिष्टेन हृषीकेशतीर्थीयताळपत्रेषु गतं सर्वमूलपाठं जगति प्रकाशयितुं यशःकायै पेजावरस्वामिभिर्नियुक्तः।

स्वस्य सर्वमूलसम्पादनमधिकृत्य स्वीयायां तत्वप्रदीपटिप्पण्यां स्वयमेवोवाच। तस्योक्तिरविकलमुद्ध्रियते बुबोधयिषूणां कृते -

**'भगवत्पादकृतानां सर्वमूलग्रन्थानां शुद्धप्रायः पाठ आचार्यगोविन्दो-पज्ञमाविष्करणीय इति नियतिः। अत एव मूलपाठं स्वयं जानन्तोऽपि जयतीर्थव्यासतीर्थादयः तौळवमण्डले च वादिराजतीर्थादयः नाविश्चक्रुः। प्रत्युत प्रचलितमेव पाठमाश्रित्य व्याचक्रुः। तदिदं देवगुह्यं यल्लिकुच-वंशोपक्रममेव मूलपाठोपलब्धिरिति सम्प्रति मूलपाठोपलब्धिश्च लिकुच-कुलसम्भवात् तदात्वे पलिमारुमठाधीशात् श्रीरघुवल्लभतीर्थादेव उपाक्रम्यतेति विचित्रं विस्मयावहं च विधिनियतिरहस्यमिदम्'**[1]

इदमेव गोविन्दवचनं पर्याप्तं तद्भावाविष्करणे। पूर्वाचार्यावमन्ता गोविन्दाचार्य इति तदीयं सर्वं गुणगणं तिरस्कुर्वतां सतां कृत इदमुद्धरणमुत्तरायते।

कीर्तिशेषाणांगोविन्दानुरागवतांपेजावरस्वमिनांश्रीविश्वेशतीर्थश्रीपादानां पञ्चमे पर्यायमहोत्सवे प्रवृत्ते तत्वप्रदीपटिप्पणीलोकार्पणसन्दर्भे प्रह्लादाचार्यैः (सम्प्रति श्रीविद्याश्रीशतीर्थनाम्ना व्यासराजसंस्थानाधीशाः) वचनमिदमेव उदलिख्यत।

प्रथमसम्पुटे प्रस्थानत्रयी खलु वर्तते। तत्र गीताप्रस्थाने गोविन्दटिप्पण्यः न सन्ति। गीताभाष्यं हृषीकेशतीर्थकोशे नोपलभ्यते। गीतातात्पर्यनिर्णयस्तु उपलभ्यते। परिशिष्टे विद्यमानटिप्पणी सर्वमेतदावेदयति।

गीताभाष्यगीतातात्पर्ययोः प्राचीनकोशेषु श्रीहृषीकेशतीर्थादिभिर्निबद्ध

---

1.पुटसंख्या- ३६१

लिपिषु परिदृश्यमानः प्रतनः पाठोऽत्र मुद्रितः। ततः प्रचलिताः पाठाः पूर्वत्र ग्रन्थे मुद्रिताः। ततः परम् उपनिषत्प्रस्थान सूत्रप्रस्थानयोः प्राचीन पाठ एव ग्रन्थे मुद्रितः, पाठान्तराणि च टिप्पण्यां परिदर्शितानीत्यवगन्तव्यम्। यद्यपि हृषीकेशतीर्थीये गीताभाष्यं नोपलभ्यते। तेन चात्र साक्षादाचार्यपाठपरम्परा दुःसम्पद्या। तथापीतरप्रतनतरपाठावलम्बननेन यथासम्भवं यथोपलब्धि चप्राचीनपाठनिर्णयोऽत्राक्रियत। तत्सम्बद्धं च टिप्पण्यादिकमत्र संयोजितमिति विभावनीयम् ॥

गीताभाष्याध्ययने गुरुभिः प्रेरितोऽहं माध्वगीताभाष्यतात्पर्ययोः प्राचीनपाठधारणां कर्तुमप्रभव परिशिष्टे प्राचीनपाठमुद्रणौचितीमपृच्छम्। सस्मितं गुरुभिरेवं समाहितम्- **'तात! मुद्रणकाले सम्पादकोऽहं रूप्यपीठे आसम्। मुद्रराक्षसविद्रावणकर्मणि नियुक्ता बेङ्गळूरुनगरे।** सम्पृक्तिर्नातिसुलभा आसीत्। वारिकान्तार रामाचार्याख्यस्य साक्षात्त्रिविक्रमपण्डिताचार्यान्तेवासिनो गीताभाष्यं मुद्रणाय सूत्रप्रस्थानस्य प्रेषणानन्तरमुपलब्धः। अत अगत्या परिशिष्टे मुद्रणमभूत्। अथ च गीताप्रस्थानसङ्गता मम टिप्पण्यः किमिति न मुद्रणमुखमैक्षन्तेति कारणान्तरमस्ति' इति।

उपनिषत्प्रस्थानगतानां सूत्रप्रस्थानगतानां च टिप्पणीनां कृते किञ्चिदावेदनीयं वर्तते। हृषीकेशतीर्थीये कोशे उपनिषद्भाष्यमात्रं दृश्यते। नोपनिषदांमूलपाठः।भाष्यंचमाध्वंनप्रतिप्रतीककम्।वामनपण्डितटीकाऽपि नोपलब्धासीत्तदानीम्। अत एव यथाप्रचलितपाठं मुद्रिता आसन्नुपनिषदः। भाष्यं च हृषीकेशीयकोशानुगुणम्। भाष्याणामुपनिषदां च नातीव संश्लेषो दृश्यत एतस्मादेव निदानात्। उपनिषद्भाष्यसङ्गताः सर्वाष्टीका वीक्षिता विमृष्टाश्च। यथासन्दर्भं टिप्पण्यामधस्तादुदलेखिषत।

मुद्रणानन्तरं मनसा मन्थनेन नैके परिष्कारा उपनिषदर्थसम्बद्धा पाठसम्बद्धा उदभूवन्। केचनांशाः ध्वनिमुद्रिकायामुपलभ्यन्ते। केचनांशा अनन्तरकालीनेषु गोविन्दीयटीकाटिप्पणीग्रन्थेषु दृष्यन्ते। वेद-वैदिकेषु गाढं

चिन्तयतां विचारा मूलाधारं विना परिष्कारमर्हन्त्येव। गीतातात्पर्यसम्बद्ध-न्यायदीपिकाख्यजयतीर्थटीकासङ्गता सत्यनाथीयटिप्पणी महत्तरं साक्ष्यं वहत्यत्र ॥

कठवाक्यमेवं भवति- **अजीर्यताममृतानामुपेत्य जीर्यन् मर्त्यः क्वधस्थः प्रजानन्-** इति अस्य पदस्य भाष्यं नास्ति। अतः पाठविषया टिप्पणी गोविन्दीया भवति

**'क्वथस्थ इत्यर्थः। क्वथनतीक्ष्णे नरकेस्थितः थकारस्थानेऽतिशयार्थे तृतीयवर्णो धकारः। अधा ते विष्णो इतिवदित्यादि प्राचीनटीका। व्यास तीर्थप्रभृतयोऽर्वाक्तनटीकाकाराः सर्वेऽपि 'क्वाधस्थः' इति पठित्वा अधस्थः क्वेति व्याचक्षते। वरदतीर्थीये तु च्छन्दसमभावमाश्रित्य धस्थः अधस्थः नरकाद्यदोदेशस्थित इति व्याख्यातम्। 'अतः क्वधस्थ इत्येव पाठः' इति विश्वाधीश्वरतीर्थाः'** (पृ. सं. ४७८ स. सं)

अनन्तरं वामनपण्डितटीकामुद्रणसन्दर्भे बहुकोशदर्शितात् 'क्वधस्थ' इत्येव पाठस्य साधुत्वं दृढमभवत्। अथर्वणोपनिषद्भाष्यवाक्यमेवं भवति।

'पृथक्पृथक् तु त्रेतायां यजन्ते देवतागणाः' इति देवतागणान् इति प्र. पाठः। गणानिति स्वरसप्रतीतिः। तथाऽपि पुरातन कोशेषु सर्वत्रापि 'गणाः' इत्येव पठ्यते इदमिह चैवं घटनीयम्। गणाः सङ्घपतिता जनाः देवताः पृथक् पृथग् यजन्ते। प्राज्ञास्तु यथा कृते तथा हरिमेवेति। टिप्पणीयं वामनतीर्थीय-मुद्रणसमये प्रचलितपाठग्रहे कारणमसूसुचत्।

षट्प्रश्नोपनिषदि प्रथमप्रश्ने प्रथमखण्डे ऋगुदहारि,

'तदेतदृचाऽभ्युक्तम्' इति

'विश्वरूपं करिणम्' इति ऋक् (पृ.सं. ५२०)

वामनपण्डिताचार्यादिभिः प्राचीनैः 'विश्वरूपं हरिणम्' इति पाठ उपात्तः। अतः स एव पुरस्कृतः।

माण्डूकोपनिषदि चरमभागे चतुर्थः श्लोकः 'अपूर्वोऽनन्तरोऽबाधोऽनपरः प्रणवोऽव्ययः इति । तत्रहि माध्वं भाष्यम्-

**अपूर्वः कारणाभावान्नाशाभावादनन्तरः ।**
**परधीनस्थित्यभावादनपर उदाहृतः ॥**

हृशीकेषतीर्थीयकोशस्थपाठे गोविन्दटिप्पणी भवति 'प्राचीनकोशेषु' नाशाभावादनन्तकः । परधीनस्थित्यभावादनन्तर उदाहृतः इति पठ्यते । अर्थौचित्यं तु चिन्त्यम् । (पृ. स. ५२१)

गोविन्दाचार्याणां मनसि हृषीकेशतीर्थीयं प्रमादेन लिखितं स्यात् । 'अनपरः इत्यस्य पदस्य व्याख्यानस्याभावात् इति ।प्राचीनकोशे खलु अनन्तरः इति शब्दो व्याख्यायत इति च । वामनपण्डितार्यव्याख्यानाध्ययना नन्तरं स्फुटतया ज्ञातम्- 'तत्र अनपरः' इति शब्दव्याख्यानं नास्ति 'अपूर्वोऽनन्तरोऽबाधो नपरः' इति वर्तत' इति । तथा हि वामनपण्डिताचार्यो वक्ति' तस्मात् परः प्रणवश्च नास्ति इति ।

तदनुसारं माध्वभाष्यपाठः हृषीकेशतीर्थसम्मत एवं भवति ।

**अपूर्वः कारणाभावान्नाशाभावादनन्तकः ।**
**पराधीनस्थित्यभावादनन्तर उदाहृतः ॥**

यत्र वामनपण्डितचार्योऽत्यन्तं संवदते । तथाच 'अनन्तर' शब्दस्यैव अर्थद्वयम् । मध्वः 'अनपरः' इति प्रतीकं न जग्राह । नाऽपि व्याचख्यौ । 'नपरः' इत्यत्र कूरनारायणादीनां प्राचीनानामपि संवादोऽपि भवति ।

'अनपरः' इति प्रतीकग्राहं व्याख्यायतः शङ्कराचार्य राघवेन्द्रतीर्थप्रभृतयः किं भ्रान्ताः? तत्र माण्डूकोपनिषद्भाष्य वामनपण्डितटीकायां लसन्ती गोविन्दटिप्पणी समाधत्ते- तदेतदविकलमुद्धरणम् ।

'अनपरः' इति इच्छन्तोऽपि ग्राह्या एव ।

तथा हि श्रूयते- 'तदेतत् ब्रह्मपूर्वमनपरमनन्तमबाह्यम्' (बृ.उ. ४-५-

१९) इति मधुब्राह्मणे 'नैवास्मात् पूर्वकं किञ्चिन्नैवास्मादपरं तथा। सर्वस्माद् बाह्यतश्चासौ सर्वस्मादन्तरस्था' इति च बृहद्भाष्ये हयग्रीवसंहितावचनम्।

हृषीकेशतीर्थकोशे न प्रमाद अभूदिति फलितोर्थः। पदपाठस्य पौरुषेयत्वं दृढं वदावदेन गोविन्दाचार्येण 'अनपरः' इत्यस्य व्याख्यानान्तरमप्यूरीकृतम्।

तलवकारे 'नाहं मन्ये सुवेदेति' इति पाठः स्वीकृतः पूर्वम्। 'नाहमन्ये सुवेदेति' पाठः स्वीकृतः वामनटीकानुसारम्।

एषा दिक्। सर्वदा पाठशुद्धावर्थशुद्धौ च जागर्ति स्म तन्मनः। मन्थनं वर्तदेवाऽसीत्।

सूत्रप्रस्थानं हृषीकेशकोशे वर्तते। तदनुसारं रघुवर्यतीर्थोऽप्यलिखत्।

-- दशप्रमतिराण्मुदे।

'मूलकोशावलम्बेन रघुवर्योऽलिखद्यतिः' इति। तदेवं कोशद्वय-समावलोकनेन सह सूत्रप्रस्थानं मुद्रणमुखमैक्षत। दिष्ट्या सूत्र-प्रकरण-भारतप्रस्थानादिकं गुरुसन्निधाने हृषीकेश-रघुवर्यतीर्थकोशावलम्बं चिन्तितम्। अहो प्राचीनाचीर्णपुण्योच्चयो मामीदृशी कार्ये न्ययुङ्क्त। स्मारंस्मारं धन्यतामनुभवन्नस्मि। रघुवर्यतीर्थीयं गुरूणां गृहे संवत्सरदशक-चतुष्टयं तावदासीत्। गुरूणां देहत्यागानन्तरं पलिमारुमठे वर्तते। इदानीमपि कोशौ हृषीकेशरघुवर्यतीर्थीयौ पलिमारुमठे सदृशौ विराजेते।

## मुद्रणविन्यासः

भाष्यम्, अनुभाष्यम्, न्यायविवरणमिति सङ्गत्याऽपि यथा समीचीनः स्यात् तथा वर्तते। सूत्राणां बहुमुखत्वमनायासेन यथा भवेत्तथा। गीता-सम्बद्धमपि व्याख्यानद्वयमनेनैव विन्यासेन विराजते। यद्येवं पूर्वमेव मुद्रणमभविष्यत्तदा करपात्रि स्वामिनां अस्माकं परमाचार्येषु विद्यामान्यतीर्थेषु कृतं पूर्वाचार्यविरुद्धभाषणारोपणमेव नाभविष्यत्। अपसिद्धान्तापलापनिरसने सर्वमतस्था अपि सज्जना सहकारायिताः सहचक्रुरिति स्वमतनिष्ठाया अपि

सत्यप्रेम ज्याय आसीत्, तेषां जीवनदीक्षाऽपि तत्प्रसङ्गवेदितेति सन्तुष्यते। गुरुभिः पेजावरमठाधीशैः सुधापाठ प्रसङ्गे श्रावित एष उदन्तः। अथाऽपि गीताप्रस्थानगतत्रयोदशाध्याय चरमभागपारायणसमये यद्येवमभविष्यत् तदा तन्नाभविष्यदिति लृङ् निबद्धभावो हासः मनसि लसति।

सूत्रप्रस्थानं प्रचलितप्राचीनपाठैः सह प्राचीनार्वाचीन टीका-टिप्पणी-विमर्शेनाऽपि सहितं अध्येतृणामत्युपयुक्तं वर्तते।

सूत्रप्रस्थानस्य सप्तमपत्रेऽनुव्याख्याने षड्विंशतिमे श्लोके 'कामतो विधि-रुद्रादिपददात्र्या स्वयं श्रिया' इति पाठः। अधस्थटिप्पणी एवं भवति

'दातास्वयंश्रिया' इति प्राचीनकोशेषु पठ्यते। स्खलितमिति संभाव्यते। अदितिश्रुतौ 'स यद्यदेव' इति पुल्लिङ्गेन परामर्शवत् 'पुंभ्यः शक्तिमती नारी पुंशब्देनैव भण्यते' इति व्याख्येयम्।

सूत्रप्रस्थानटिप्पण्या हृषीकेश-पद्मनाभतीर्थानां त्रिविक्रम-नारायण-वामनशङ्करकव्यादीनां प्राचाम् पाठसंवादादेर्बोधो भवत्यध्येतॄणाम्।

सप्तविंशतितमे पत्रे 'घर्मा समन्ता त्रिवृतम्' इति वेदपदपाठविमर्शो भवति। तथाहि तट्टिप्पणी 'समन्ता त्रिवृतम्' इत्येव प्राचीनकोशसम्मतः वेदसप्रदाय सम्मतश्च पाठः। तथा हि तत्वदीपिका च 'समन्तौ पूर्णौ' इति। ननु तर्हि कथं 'समन्ताद् विद्यमानौ' इति गुर्वर्थदीपिका सङ्गम्येत पदपाठ विरोधादिति।इत्थंसमाधेयम्- समन्ता इति वा भवति पदपाठः। समन्तादिति वा भवतु। उभयथाऽपि संहितायां 'समन्तात् त्रिवृतं' इति द्वितकारोत्तररेफः पाठो भवतीति प्रातिशाख्ये स्थितम्। तद् यथा 'आ त्वा' इति स्थिते 'आत् त्वा' इति पठन्ति। तस्मात् समन्ता इति समन्तादिति द्वेधा च व्याख्यानं भवति। ननु तर्हि कथं पदपाठः ? अयोगव्यवच्छेद एवाऽयम्। नान्योग-व्यवच्छेदः। अत एव ज्योतिरधिकरणे 'वि मे मनश्चरति दूर आधीः' इत्यत्र पदपाठरीत्या दूर-आधीरित्येकपद्येऽपि दूरे विचरतीति विभज्य व्याख्यातं तत्वप्रकाशिकायाम्। अत एव च 'पुरुष एवेदं सर्वं' इत्यत्र 'पुरुषः' इति

पदपाठेऽपि पुरुषे सर्वं प्रतिष्ठितमिति सप्तम्यन्ततया व्याचक्षते।

तृतीयाध्याये द्वितीयपादेऽनुभाष्ये मध्ववचनं भवति।

'ऐक्यप्रतीत्यभावेन भेद एव गवश्वयोः' इति 'परन्तु जयतीर्थटीकायां गवश्वयोः इति प्रमादपाठः। मूलकोशेष्वदर्शनात्' इति वर्तते। तत्र गोविन्द-टीप्पणी भवति हृषीकेशतीर्थीये मूलकोशे अधोक्षजतीर्थीयसम्प्रदायानु-सारिणी पेजावरमठीये प्रतनतरे च मूलकोशे, तदन्येषु च सर्वेषु कोशेषु गवश्वयोः इत्येव पठ्यते। न क्वाऽपि गवाश्वयोः इति।

(इतः परं गोविन्दटिप्प्णी गवाश्वयोरिति गवश्वयोरिति पाठयोर्द्वयोरपि अपाणिनीयत्वं साधयति। पिपठिषवः प्रार्थयन्ते। तत्रैव स्थान आस्वादन्तु इति)

गोविन्दटिप्पणी 'गवश्वयोः' इति पाठमङ्गीकृत्य प्रवर्तते। तथाहि-

नन्वस्तु तावता गवश्वयोरिति कथम्? गवय इति यथा तथा तद्वत् सेत्स्यति। गां सादृश्येनायत इति हि नैरुक्ता निर्वदन्ति। गामश्वतीति गवचीत्यपि।...

ननु तत्र का गमनिका? व्याकरणान्तरमिति ब्रूमः। तथाहि सारस्वतं व्याकरणम्- गवादेरवर्णागमोऽक्षादौ वक्तव्यः। 'गवक्षश्च गवेन्द्रश्च गवाग्रं च गवाजिनम्। स्वैरमक्षोहिणी प्रैढ एते प्रोक्ता गवादयः' इति। एतेन ज्ञायतेऽक्षेद्राग्राजिनेष्वेवावर्णागमो भवति नाश्वादाविति। तेनैतद्रीत्या 'गवश्वयोः' इत्येव भवति। - इति।

गुरूनपृच्छमहम्। 'गवश्वयोः' इति पाठस्य साधुत्वसमर्थने प्रयास ईदृगपोहानुमा कुतः अनुसृतः। तदस्योल्लेख एव पर्याप्त आसीत्। किमर्थमेवं कृतम्।

गुरुरुवाच सस्मितम् - अयि पोत। क्वचिदपोह ऊहस्य सहकारी। व्यतिरेकश्च क्वचिदन्वयस्य। एवं सूत्रप्रस्थानसम्पादनक्रमे अंशाः केचन

उल्लिखिताः आन्तं सूत्रप्रस्थानसम्पादनक्रमचिन्तनेन। प्रस्थानत्रयी सम्बद्ध-माध्वभाष्यप्रकाशने काश्चनास्पष्टता आसन्। अत एव पुरोवाक् गोविन्दीया नास्ति। परन्तु क्रमेण टिप्पण्या गात्रवृद्धिर्दृश्यते।

द्वितीयसम्पुटे महाभारतसम्बद्धौ माध्वौ ग्रन्थौ प्राकाश्यं नीतौ।

महाभारततात्पर्यनिर्णयः यमकभारतापरनाम महाभारततात्पर्यं च। सम्पुटेऽस्मिन् सम्पादकीयमिति नाम्ना गोविन्दवाणी दृश्यते। क्रैस्ताब्दस्तदानीं १९७१ इति सङ्ख्या निर्दिष्टा। विंशतिमशतमानस्य सप्तमे दशके तदानीं विद्यामान्यतीर्थश्रीपादानां पर्यायमहोत्सव आसीत्। आध्यक्ष्याच्च विद्यामान्य श्रीपादानां प्रास्ताविकं वचोवृन्दं विलसति। यत्र गदग नगरस्य नारायणराव् महाभागस्योल्लेखो दृश्यते। 'तथा एतन्मुद्रणकर्मणि निखिलमार्थिकभारं निरूढवतः श्रीमतः के. नारायण राव् महाशयस्य निस्तुलो भगवत्पाद-सेवायामादरभरो नितरामस्मानावर्जयति' इत्यादि।

इतिहासप्रस्थानगतानां टिप्पणीनां कृते न किञ्चिदपि वदामि। विद्वांसौ तदधिकृत्य वदतः। लेखनगुच्छे निर्णयभावचन्द्रिका, कृष्णचन्द्रिका च वर्ण्यते। परन्त्वहं गदगवासिनो नारायणस्य दातुर्जीवने सर्वमूलसम्पुटमुद्रणस म्बद्धमुदन्तं वक्तुकामोऽस्मि। नारायण नामा श्रीमान् गदगनगरगण्यः मूलतस्तौळवः। उद्यमार्थं गदगस्थो बभूव। स्वं वित्तं सर्वमूलसम्पुट प्रकाशनार्थमर्पयितुं निर्दधार। विश्वेशतीर्थपूज्यचरणानां प्रेरणया भगवत्प्रीत्यर्थम्। प्रथमसम्पुटप्रकाशनं च अभूत्। द्वितीयसम्पुटसम्बद्धं संशोधनादिकं प्रचलदासीत्। नारायणमहोदयजीवने महानाघातः सञ्जातः। तस्य आपणं कार्यालयः सार्धं सर्वसम्पदा भस्मीबभूव। प्रासादस्थः वीथीं प्राप। धनसमृद्धो निर्धनो बभूव।

तदीयां निःस्वतां दृष्ट्वा मुद्रणादिकं सावकाशतया प्राचलत्। विद्वत्सु सहकारिषु निरुत्साह उत्पन्नाः। संशोधनेऽनुत्पन्ननिरुत्साहोऽप्याचार्य-गोविन्दः मुद्रणादिषु विलम्बमाशिश्राय।

षण्मासाभ्यन्तरे कार्यान्तरवशात् श्रीमान् नारायणो रजतपीठपुरम् आजगाम। रथवीथ्यांआचार्यगोविन्दमदृश्यत। मिलित्वा कुशलप्रश्नानन्तरं विलम्बकारणमपृच्छत्। आचार्यगोविन्दः निःस्वतां कारणमब्रुवन् किमप्यन्यदुवाच। नारायणस्तं ज्ञात्वा प्रोवाच - 'मम दारिद्र्यं समाजहित प्रतिबन्धकं मा भूत्। इतोऽप्याधमर्ण्यं वहेयम्। मन्निःस्वतानिमित्तविलम्बो मा भूत्' इति। तद्धृतिं दृष्ट्वा द्वितीयसम्पुटकार्यशेषं समाप्य मुद्रणार्थं प्रेषयामास। मुद्रणसमये गदगनारायणमहोदयस्य पौर्विक्या समाजसेवया दातृत्वेन च तुष्टा च आसन्, ते सर्वे धनं सङ्गृह्य, तद्वाणिज्यभवनं भस्मीभूतम् पुनर्निर्माय तस्मिन्नेव नवीने भवने तं सन्मान्य तस्मा उपायनत्वेन समार्पयन्। अहो देवपरीक्षा। अहो नारायणस्य सेवादीक्षा। अहो दातृत्वमहिमा। उदन्तस्यास्य साक्षीतया नारायणदौहित्रम् अद्याऽप्यस्मन्मध्ये विलसति।

तृतीयसम्पुटे पुराणप्रस्थाननाम्ना भागवततात्पर्यनिर्णयः सटिप्पणीकः प्रकाशितः। यट्टिप्पण्या उपबृंहणेन टीकानिर्मातव्या इति गुरोर्मनसि इच्छा आसीत्। प्रयत्नेन तां तत्याज। 'भागवतस्य प्रतिश्लोकव्याख्याने ममेच्छा आसीत्। परन्तु अन्तःस्थस्य कस्यचिच्चोदनया तमिच्छां जुह्वन्नस्मि नृसिंहाग्नौ' इति वदन्नासीत्।

चतुर्थसम्पुटे श्रुतिप्रस्थाननाम्ना मध्वग्रन्थौ द्वौ दृश्यते। ऋग्भाष्यं खण्डार्थनिर्णयश्चेति। द्वितीयः ग्रन्थः गोविन्दटीकासंयुतः वर्षत्रयपूर्वं प्रकाशितः। अयं च ग्रन्थः स्वाध्याययज्ञस्य चरमे घट्टे स्थित इव।

पञ्चमे सम्पुटे 'सङ्कीर्णग्रन्थाः' इति नाम्ना प्रकरणग्रन्था आचारबोधक-ग्रन्थाः स्तोत्राणि च प्राकाशिषत। प्रकरणविभागे नव प्रकरणानि भवन्ति। तत्र विष्णुतत्वनिर्णयः प्राचीनटीकाभ्याम् गोविन्दटिप्पण्या च संवलितो मुद्रणं प्राप्स्यति। वादः तथैवोर्वरितः। दूषणत्रयं कालान्तरे गोविन्दीयया टिप्पण्या संवलितं वर्तते। तत्वसङ्ख्यानतत्वविवेकौ वादमानलक्षणे च टिप्पणीं विना वर्तन्ते। प्रमाणलक्षणं गुरुमुखादेव श्रुतमिति मम भागधेयम्।

आचारप्रस्थानं नाम द्वितीयो विभागः। तत्रत्यौ कृष्णामृतमहार्णवतन्त्रसारसङ्ग्रहौ मूलमात्रप्रकटनात्पूर्वमेवाचार्यगोविन्देन षोडशे वयसि कन्नड-भाषायाम् अनूदितावास्ताम्। तदैव भागशः हृषीकेशतीर्थीयं समवलोक्य नखस्तुतिरेकपद्यात्मिका वर्तत इति प्रसङ्गतः उदलेखि। सर्वे निनिन्दुः। काणियूरुमठाधीशा अन्वर्थनामानः श्रीविद्यासमुद्रतीर्थश्रीचरणाः तत्र संवदन्त अकथयन्। 'मयाऽपि हृषीकेशतीर्थीयमवलोकितम्। तत्र 'पान्त्वस्मान्' इत्येकमेव पद्यं वर्तते। य अनूदन्ति तेभ्यः उपदिष्टम्। न ते कुर्वन्ति इति। स प्रसङ्गो वायुस्तुतिव्याख्याभूमिकायां विस्तारेणोक्तः। बुबोधयिषवः तत्रैव ग्रन्थे प्रवृत्ता भवन्त्विति निवेद्यते। विद्यासमुद्रतीर्थानुग्रहं स्वस्मिन् वृत्तमनेकैः उदन्तैः कथयति स्म आचार्य अस्मासु।

जयन्तीकल्पः कालान्तरे विस्तृतया टिप्पण्या संयोजितः। ओं तत् सत् प्रणवकल्पोऽपि। जयन्तीकल्प-ओंतत्सत्प्रणवकल्पौ रघुवर्यकोशे गुरुभिः सह परिशीलितौ। तदानीं मयोक्तं 'अयि गुरो, केचन पण्डितंमन्यमाना अनृजवो रघुवर्यलिखितताळपत्रात्मकः कोश एव नास्ति, गोविन्दकल्पना-विलासप्रभावं कोशस्य वदन्ति। किमर्थं तदुपेक्ष्यते। भण्यतामत्र वर्तते इति। 'गुरुणा सहासमुक्तम्' नाहं वदेयम् कालान्तरे रघुवर्यीयमिदं स्वस्थानं प्राप्स्यति। तदानीं सर्वं विदितं भविष्यति इति। तिथिनिर्णयाख्यः माध्वग्रन्थः नरसिंहोपाध्यायाख्यस्य ज्योतिर्विदाग्रण्यस्य सहकारेण विस्तृतया टिप्पण्या सहोपलभ्यते।

स्तोत्रविभागे वर्तमानानि स्तोत्राणि सर्वाणि कन्नडभाषायामनूदितानि। कन्नडाभिज्ञा मध्वस्तोत्रच्छायेयमिति सन्तुष्य स्वीकुर्वन्ति। कन्नड-संस्कृतोभयाभिज्ञा भाषाद्वयस्याद्भुतम् साङ्गत्यं दृष्ट्वा नितरां सन्तुष्यन्ति। द्विगुणस्तेषामानन्दः। एवं गोविन्दसम्पादनपद्धतिं किञ्चिदेव परिचाययदिदं लेखनं मध्वकृष्णयोः पादकमले समर्प्यते।

॥ श्री कृष्णार्पणमस्तु ॥

# आचार्यगोविन्दकृता 'तत्वचन्द्रिका' एकः परिचयः

**प्रो. अ. हरिदास भट्टः**

का नाम तत्वचन्द्रिका – भगवता बादरायणेन वेदार्थनिर्णायकयुक्ति ग्रथनार्थं ब्रह्मसूत्राणि प्रणीतानि। वैदिकाः सर्वे सिद्धान्ताः एतानि सूत्राण्येव अवलम्ब्य प्रवर्तन्ते। आचार्यमध्वोऽपि एतदेवाह-

**तस्मात् सूत्रार्थमागृह्य कर्तव्यः सर्वनिर्णयः। इति।**

अन्यैरन्यथा व्याख्यातानीमानि सूत्राणि, आचार्यमध्वः सूत्रकारस्य भगवतः व्यासस्यैवाज्ञया सम्यग् व्याचख्यौ। एवं हि व्यासः आज्ञापयामास आचार्यवर्यम् –

**कुरु सूत्रभाष्यमविलम्बितं व्रजेः ॥ (म.वि 8-46)**

तदेवं सूत्रकाराज्ञया विरचितं माध्वभाष्यं सूत्रकर्तुः सम्मतमित्यत्र नास्ति संशीतिलेशः। सोऽयं भगवान् भाष्यकारः स्वोपज्ञं भाष्यं स्वयं 'भाष्यं चात्यर्थविस्तरम् बहुज्ञा एव जानन्ति' इति निर्वर्णयामास। तदेतत् पण्डितैः दुर्निरूपवचनं ब्रह्मसूत्रगणभाष्यं व्याख्यातुं स्वयमाचार्यः स्वान्तेवासिनं, प्रथितयशसं, विपश्चितामपश्चिमं श्रीत्रिविक्रमपण्डिताचार्यमादिदेश। आदेशमेनमनुसृत्य पण्डिताचार्यः भाष्यस्य तत्वप्रदीपाख्यां दुष्करां टीकां निर्ममे। एवमिति स्वयमुज्जुघोष स्वग्रन्थे तत्वप्रदीपे पण्डिताचार्यः

**आज्ञाबलादकृषि लेशत एष तेषाम्। इति।**

तत्वप्रदीपस्यास्य अनितरसाधारण्यं वैशिष्ट्यं आचार्यगोविन्दः पीठिकायामेवं प्राशंसत-

'यदि पण्डिताचार्यः तत्वप्रदीपं न प्राणेष्यत वञ्चित एवाभविष्यत् समग्रोऽपि जिज्ञासुलोकोऽनयाऽपूर्वचिन्तनया'। 'येनैवाधीतेन माध्वो माध्वो भवति' इति च तेषामेष उद्घोषः।

आचार्यस्य प्रियतमोऽयं ग्रन्थः अध्ययनपरम्परायां लुप्तः। बन्नञ्जे गोविन्दाचार्येण यतयः, विद्वांसश्च एतस्य पठन पाठनार्थमयाचिषत। ते च प्रत्यूचुः – 'दुरधिगमोऽयं ग्रन्थः। व्याख्यापि नास्ति। कथं पठामः?' इति। तदर्थं तत्वप्रदीपं व्याख्यातुकामः बन्नञ्जे आचार्यः 'तत्वचन्द्रिकां' व्याख्यां जग्रन्थ। व्याख्यानिर्मितिनिमित्तं निरूपयन्नेव गोविन्दाचार्यः विज्ञापयति- अयि विपश्चितः, व्याख्येयं निहिता तत्रभवतां हस्ते। अथ विहाय कैतव-कथनं प्रारभ्यतां तत्वप्रदीपप्रवचनम्। सेयमाचार्यगोविन्दोपज्ञा तत्वचन्द्रिका।

## नोपेक्षामर्हति पीठिका

तत्वचन्द्रिकाव्याख्यात्राचार्येणादौ विस्तृतः पीठिकाभागः निबद्धः। अवश्यमिदमध्येतव्यम्। तत्वप्रदीपस्य कर्तुः लिकुचसूरेः श्रीमदानन्दतीर्थ-भगवत्पादविषयेऽसाधारणीं भक्तिं श्रद्धाञ्च प्रादुश्चकार गोविन्दाचार्यः पीठिकायाम्। पण्डिताचार्यस्य मुखे नृत्यति सरस्वती स्वगुरुवर्णनावसरे तदेवाह पठिकायाम्-

'कविकुलतिलकोऽयं गद्यरचनायां वाक्पतिराजति यदा स्वगुरुतमस्य मध्वस्य स्मरति'।

1. तत्वप्रदीपस्य वैशिष्ट्यं नैकधा प्रत्यपीपदद‌त्र गोविन्दाचार्यः। तत्रैकं-मन्त्राणाम् अपि च भाष्यवचनानामपूर्वमर्थं प्रकाशयति पण्डिताचार्यः। जन्माधिकरणे 'चतुर्भिः साकम्..' इति श्रुत्यर्थः स्वोपज्ञः प्रकाशितः तत्वप्रदीपिकायाम्। ईक्षत्यधिकरणे 'न चाशब्दत्वमितरसिद्धम्' इति भाष्यवाक्यं चतुष्पदं चतुर्धा व्याख्यातम्।

2. श्रीरिति विष्णुवक्षःस्थितं रूपम्, लक्ष्मीरित्यङ्कस्थं रूपम्' इति सम्प्रदायविदां कथनम्। पण्डिताचार्यस्तु अपरथा वर्णयति 'अङ्कं श्रिता श्रीः वक्षसि लक्षणभूता लक्ष्मीरिति' तदियं भणितिः शाखान्तरपाठसमन्वयार्थं पण्डिताचार्यस्य, इत्युपवर्णयति गोविन्दाचार्यः।

3.दैवीमीमांसा या मध्यममीमांसा सेयं लुप्तप्राया। तस्याः पूर्वोत्तरसूत्राणि बादरायणेनोपनिबद्धानि। कर्ता तु सूत्राणां व्यासशिष्यः पैलः शेषश्च। किं तत् व्यासग्रथितं सूत्रं ? ' स विष्णुराह हीत्यन्ते' इत्यनुव्याख्यानम्। 'स विष्णुराह हि' 'तं ब्रह्मेत्याचक्षते' इति सूत्रद्वयेन विष्णुः ब्रह्मेत्युदितम्' इति च सुधा। आभ्यां दैवीमीमांसायाः उपान्त्यं सूत्रं 'स विष्णुराह हि' इति विज्ञायते। पण्डिताचार्यः सूत्रमेवं पपाठ- 'विष्णुरेव हि तच्छ्रुतेः' इति। अत्राह गोविन्दाचार्यः 'लिकुचपण्डितैः एते सूत्रे यदि स्वग्रन्थे नोदाहरिष्येतां नावेदिष्यतैव प्रायः शुद्धसूत्रपाठः जिज्ञासुलोकस्य' इति।

पीठिकायामाचार्यगोविन्दः 'पाठमीमांसायां' उपनिबबन्ध। नानधीत्यै तद् गन्तव्यमग्रे। अत्राहाचार्यः- 'सत्यतीर्थः प्रथमलेखकः, न केवलम् प्रथमश्रोता च। ततो गोदावरीतीरे द्वितीयश्रोता पद्मनाभतीर्थः। तेनापि लिखितो भाष्यपाठः तदात्वे स्यादपि। किन्तु सर्वथा नोपलब्धः। तस्मात् अद्याप्युपलब्धः गलितप्रायोऽपि प्राचीनतमः पाठो हृषीकेशलिखित एवेति खलु विस्तरेण प्रचार्यमाणः पाठः प्रचुरप्रक्षेपः। पाश्चात्यानि व्याख्यानानि मूलपाठाननुसारिणीति भगवत्पादभावनिर्णये न पर्याप्तानीव।

गोविन्दाचार्यः सूत्रभाष्ये अपपाठस्योदाहरणत्वेन-'भेदान्नेति चेद् एकस्यामपि'(3.3.2) इति सूत्रभाष्यमुपस्थापयति। अत्र प्रचलितः भाष्य-पाठः एकस्यामपि शाखायां 'आत्मेत्येवोपासीत', कं ब्रह्म खं 'ब्रह्म' इत्यादि भेद दर्शनात्' इत्यस्ति। अनयोः प्रथमं बृहदारण्यके यजुःशाखायां पठ्यते। द्वितीयं पुनः सामशाखायां छान्दोग्ये पठ्यते। तदिदं उपहसत्याचार्याः –

**'विस्मयावहमिदं यदेकस्यामपि शाखायामिति प्रत्यज्ञायि। दृष्टान्तत्वेन शाखाद्वयगतं वचनद्वयमुदाहारि'** इति।

परन्तु इदमिहानुसन्धेयम्। जयमुनिकृतटीकायां वा व्याख्यांतरेषु वा नैतदेवं व्याख्यायि। अतः सम्भाव्यते लेखकप्रमादोऽयमिति। बृहदारण्यकगतं प्रथमवाक्यं पठित्वा तत्रैव सप्तमाध्यायगतं ॐ खं ब्रह्म खं पुराणं इति पठितव्ये

महाप्राणस्थाने (ख) अल्पप्राणं (क) अशक्त्या परिवर्त्य प्रबुद्धसंस्कारेण ब्रह्मशब्दः अङ्केन योजितः। नात्र व्याख्यातारः प्रमाद्यन्ति।

इदमिह पर्यालोचनीयम् यत् पीठिकाभागे गोविन्दाचार्यः ब्रह्मसूत्राणां संख्याविषये पर्यालोचयति। 'युक्तेश्च (2.3-19)' 'स्मरणाच्च (3.1.23) इति सूत्रद्वयं प्रक्षिप्तम्। तस्मात् प्रचलितपाठानुसारेण आहत्य सूत्रसख्याः 564 नैव भवितुमर्हति। तत्वप्रदीपानुसारेण 562 संख्यान्येव सूत्राणीति। एवं ग्रन्थारम्भे स्वोपज्ञान्, विदुषां प्रज्ञोन्मेषकान् कांश्चन विषयान्निरूप्य अन्ते सप्रश्रयं विज्ञापयति गोविन्दाचार्यः।

'न मे कोऽपि मठीय आवेशः। नापि कुत्रचिदुरभिमानः। न मे कश्चिद्रागः, क्वचिद्वेषः इति रागद्वेषकलिलं मनः। नापि घट्टादुपरेष्वपरागः। अपरेष्वनुरागः। ....नाहं दोषैकदृक्। किन्तु दोषज्ञः संशोधकः। .. ततः सर्वेषां जयतीर्थ-व्यासतीर्थ-राघवेन्द्रतीर्थप्रभृतीनां पूर्वाचार्याणां क्षमाम् अभ्यर्थ्ययत् प्राचीन ग्रन्थसंशोधनेनापूर्वमधिगतं तत्सर्वं निर्भीतमिह निवेदितम्। दुराग्रहग्रस्ताः, सत्यनिर्णये निरादराः नात्र नासां न्यस्यन्तु इति निवेद्योपरम्यते।'

## व्याख्यावैशिष्ट्यम्

अपूर्वमिदं व्याख्यानं गोविन्दोपज्ञम्। साम्प्रदायिकव्याख्यानेभ्यः शैल्या साहित्येन च भिद्यते तत्वचन्द्रिका। सरलसुन्दरवेदान्तकाव्यमिदं व्याख्यानम्। आचार्यगोविन्दः प्रवचनचतुरः न गहनवेदान्तसरोगाहने दक्षः? इति मिथ्याप्रवादस्य अपवादतया विराजते तत्वचन्द्रिकाव्याख्यानम्। लघूनि वाक्यानि, विद्वत्पूर्णं विवरणं, नूतनाः शब्दाः बुधजनमनोरञ्जिका च शैली। अपूर्वाश्च विषयाः। एतेषामपूर्वाणां गुणानां समावेशमत्र प्रतिपद्यामहे। ग्रन्थं व्याख्यास्यन्नाचार्यः क्वचित् अन्धानुकरणं प्रहसति। तद्यथा- 'नारायणपदेनैव गुरुनाम चोवाच' इति मूलं विवृण्वन्नाह – ननु गुरोर्नाम न गृह्णीयादित्याचक्षते ? सत्यमाचक्षते। किं तेन? तेनेदं विरुद्धं भवति नामग्रहणम्। न भवति, भिन्नविषयत्वात्। गुरोरसाधारणं नाम मुखतः गुरुं सम्बोधयितुं न गृह्णीयादिति

स्मृतिवचनार्थः। मुखतः सम्भाषणेऽपि 'गुरो, आचार्य, भगवन्, इत्यादि साधारणं नाम गृह्णीयादेव।'

## शब्दसाधुत्वपरिशीलनम्

साधुशब्दप्रयोगेऽपि दत्तदृष्टिराचार्यः पण्डिताचार्यस्य अपाणिनीयान् प्रयोगान् छान्दसत्वेन समर्थयति। 'सकरुणमभिष्टूय इति मूलकारस्य प्रयोगः। अत्राह गोविन्दाचार्यः- ननु कथमभिष्टूय? छान्दसोऽयं प्रयोगः। अभिष्टुत्येत्यर्थः। तेन 'यु-पुवो-दीर्घश्छन्दसि' इत्यत्र 'ष्टुञोऽपि' इत्युपस्कर्तव्यम्। अन्यथा पाणिनेर्न्यूनता नाम दोषः स्यात्। तथाहि प्रयोगः भागवते –'इत्थं पृथुमभिष्टूय पुरुषं' (4.18.1)

पण्डिताचार्योऽपि प्रयोगचतुरः महावैय्याकरणश्चेति संसाधयति तत्वचन्द्रिकाकारः- 'व्यतींरवीविपत्' इति मन्त्रं व्याख्यास्यन् लिकुचसूरिः 'विप परिवर्तने' इत्यपूर्वं धातुपाठमुल्लिखति। अत्राह गोविन्दाचार्यः धातु-पारायणिकैर्विस्मृतोऽयं धातुः। भाष्यकारः पण्डिताचार्योपज्ञं प्रकटयामास। विपेश्चुरादेर्लिङि रूपम् 'अवीपतत्' इति। अर्वाञ्चः पण्डिताः विस्मृत-प्रतनधातुपाठाः 'दु वेपृ कम्पने इति धातुं पठन्तः कथञ्चित् रूपं निर्वाहयन्ति। अर्थस्तु न स्वरस इति स्फुटम्।

## पाठपरिशोधनम्

शुद्धपाठविषये बद्धादरः गोविन्दाचार्यः यथायथं व्याख्यानं कटाक्षी-करोति। स्वयमात्मानं क्वचिद्धन्यं मन्यतेऽस्मिन् विषये। यथाह- भगवत्पाद-कृतानां सर्वमूलग्रन्थानां शुद्धपाठ आचार्यगोविन्दोपज्ञमाविष्करणीय इति नियतिः। अत एव जानन्तोऽपि जयतीर्थ-व्यासतीर्थादयः तौळवमण्डले च वादिराजतीर्थादयश्च नाविश्चक्रुः। प्रत्युत प्रचलितमेव पाठमाश्रित्य व्याचक्रुः। देवीमीमांसायाः उपान्त्यं सूत्रं 'विष्णुरेव हि तच्छ्रुतेः' इत्याह पण्डिताचार्यः। भगवानाचार्यस्तु अनुव्याख्यायाम् :-

'स विष्णुराह हीत्यन्ते देवशास्त्रस्य तेन हि' ॥ इति निर्देशति। अत्र अनुव्याख्यानमूलपाठ एव 'स विष्णुरेव हीत्यन्ते' इत्येव कुतो न स्यात्? तथानुपलम्भात् मूलकोशेषु अपरिग्रहाच्च पद्मनाभतीर्थादिभिः। तर्हि 'सविष्णुराह हि' इत्येव सूत्रपाठोऽस्तु। तदपि न सम्भवति। तत्वप्रदीपिका विरोधादेव। तर्हि कथं निर्णयः? अत्राह गोविन्दाचार्यः- 'प्रायः सन्देह एव शरणम्। यत्र साक्षात् शिष्यावेव विवदेते तत्र कथङ्कारमहो वयं निर्विवादं निर्णयेम, अयमेव मूलपाठः नायमिति'।

पण्डिताचार्यटीकायामपि पाठशुद्धिं सम्भावयति तत्वचन्द्रिकाकारः। 'चतुर्भिः साकं' इति मन्त्रं व्याख्यास्यन्- नवतिसंख्याकान् देवान् पण्डिताचार्यः सप्रमाणं न्यरूपयत्। तदुल्लिखितप्रमाणे 'भृगुश्चैवानिरुद्धश्च' इति पठ्यते। अत्रारुचिं सूचयति गोविन्दाचार्यः। अत्र भृगुः ऋषिगणपाठितः। अष्टादशकक्षायां प्रविष्टानां सर्वदेवतानां परिगणनेऽपि चन्द्रस्यैकस्य परित्यागे कारणं नास्ति। अतः 'विधुश्चैवानिरुद्धश्च' इति टीकापाठः समुचितः इति।

इत्थं शुद्धपाठे बद्धादरः आचार्यः तत्र तत्र पाठपरिशोधनमपि करोति।

## सूक्तव्याख्यानवैशिष्ट्यम् –

वैदिकमन्त्राणां व्याख्याने गोविन्दाचार्यः स्मात्मानं विस्मरतीव भावाविष्टो भवति। सायणाचार्यं 'सर्वासङ्गतीनामाकरः सायणः' इति जगर्ह। 'जन्माधिकरणे' चतुर्भिः साकं नवतिं च नामभिः इति वैष्णवं सूक्तं पण्डिताचार्यः व्याचख्यौ। तत्र चतुर्भिः इति पदं वासुदेवादिरूपचतुष्टयपरमुप वर्णितम्। नवतिसंख्याकाश्च देवताः सप्रमाणं व्याख्याताः। तदिदं मह्द्योगदानमिति मन्यते गोविन्दाचार्यः-'अहो एतदाविष्कारार्थमेव कृपाकूपारः भाष्यकारोऽमुं मन्त्रखण्डं स्वभाष्ये जग्रन्थेति। मन्त्रखण्डोऽयं भाष्ये नाग्रथिष्यथ, तत्वप्रदीपकृता च न व्याख्यास्यत, हन्त कदापि न व्यज्ञ्यास्यतापूर्वोऽयं मन्त्रार्थः। महतीयं करुणा भगवत्पादस्य।

आनन्दमयाधिकरणे अन्तिमं सूत्रं 'अस्मिन्नस्य च तद्योगं शास्ति' इति।

जीवब्रह्मभेदावेदकं इदं सूत्रम्। 'सह ब्रह्मणा विपश्चिता इत्यादि' इत्यत्र भाष्यम्। तैत्तरीयश्रुतेः चतुर्थचरणोद्धारे निमित्तमाह गोविन्दाचार्यः- अत्र वेदपाठकाः 'सर्वान् कामान् सह। ब्रह्मणा विपश्चिता' इति पादं भिन्दन्ति। सह= युगपत् कामानश्नुते' इति चार्थं वर्णयन्ति। तदेतन्निरासाय भाष्यकारः सहशब्दं चतुर्थचरणे योजयामास। तदेवोचितमिति समर्थयति तत्वचन्द्रिकाकारः – 'ननु साम्प्रदायिकपदपाठपरित्यागे का गमनिका? सम्प्रदायपरम्परैव हि वेदाध्ययने निर्णयिनी। अन्यथा सर्वत्र सम्प्रदायविच्छेदेनानवस्था स्यात्। 'अयि सम्प्रदायशरण, साधु प्रशिशंसिषामस्ते सम्प्रदायशारण्यम्। किन्त्वसम्प्रदायं सम्प्रदायं मन्यमानो भ्रान्तोसि। ननु प्रियतत्ववाद, कथमथायमेव सम्प्रदायः नायमिति निरणैषीः। प्रतनानां सम्प्रदायानां वचनादित्येवैहि। अनेन 'भाष्यं चात्यर्थगर्भितम्' इति आचार्यवचनं सुष्ठु साधितम्।

'नैषा तर्केण मतिरापनेया' इति काठकमन्त्रे 'आपनेया' इति पदे 'आ 'अप' इति विच्छिद्य 'आनेया' 'अपनेया' इति व्याख्यातं जयमुनिना।' 'नापनेतुं शक्या,न च तर्केण प्रापणीया' इति व्याख्यातं तत्वप्रदीपकृता। अत्र सूक्ष्मांशः अवेक्षितः गोविन्दाचार्येण- आ इति पृथक्कृत्वा व्याख्यानं 'न+अपनेतुं शक्या' इति। आ इत्यस्य सम्यगित्यर्थः। समस्तपदेन व्याख्यानं – 'प्रापणीया' इति '। 'अपनेया' इति छान्दसः ईकारस्यैकारः अतिशयार्थः। एवं श्रुत्यर्थनिरूपणे तत्वप्रदीपिकायां निगूढान् भावान् आविश्चकार तत्वचन्द्रिककारः।

## निपुणतरं व्याख्यानम्

स्वतः दुर्गमार्था त्रैविक्रमाचार्या कृतिः। प्रायः भाष्यकारस्यशैलीमनुकरोति तत्वप्रदीपः। वाक्ययोः क्वचित् साङ्गत्यं न स्फुटं प्रतीयते। तत्र सुसङ्गतिमाह आचार्य गोविन्दः। तद्यथा – परकीयपादभेदव्यवस्थाविमर्शे तत्वप्रदीपवाक्यं – 'उभयोरप्यस्पष्टब्रह्मलिङ्गत्वे पादभेदाभावप्रसङ्गात्। गत्यन्तरभावाच्च। तन्नियमादृष्टेश्च इति। अत्र तत्वप्रदीपवाक्ये 'गत्यन्तराभावात्' इति वाक्यं

अवतारयन् सङ्गतिं स्फोरयति गोविन्दाचार्यः – 'ननु चतुष्ट्वनिर्वाहार्थं किमपि अवान्तरं भेदकं कल्प्यते इत्यत आह- गत्यन्तराभावाच्चेति' ॥ व्याख्याति- यदि गत्यन्तरमभविष्यत् तदा मायावादभाष्ये तत् स्वयमवदिष्यत् । नचोवाच । तेन ज्ञायते भेदकान्तरंतस्य नाभिमतमिति । एतदुपरि आशङ्कामेवमुत्थापयति- 'ननु व्याख्यानतो विशेषप्रतिपत्तिर्भवति। तथाहि गोविन्दानन्दः- 'अस्पष्टब्रह्मलिङ्गसमन्वयः पादद्वये वक्ष्यते। प्रायेणोपास्य- ब्रह्मभेदात्पाद योरवान्तरभेद इति भावः' इति। परिहसति- 'अद्भुतं व्याख्यानं इति। पुनराक्षिपति- 'नन्वनगतभावो भवान्। अस्ति विवक्षाभेदेन ब्रह्मभेदः। तथाह्यानन्दगिरीयम् 'तत्र द्वितीय-तृतीयपादयोरवान्तरभेदस्तु सविशेष-निर्विशे- षार्थतया रूढियोगबहुलतया वेति भावः' इति । तदेतन्निराह-तदद्दृष्टेरिति ॥ द्युभ्वाद्यायतनत्वादि विशेषवत एव तृतीयेऽपि प्रतिपादनात्' । इत्यादि ।

अत्र आचार्येण अद्वैतभाष्यं तद्व्याख्यानानि च परिशीलितानीति। अहो अध्ययनसम्पन्नता । न केवलमेतावतद् । स्वयमेव आनन्दगिरिव्याख्यानं दूषयत्याचार्यः। अनेनेदं ज्ञायते- गोविन्दाचार्यः प्रमेयनिरूपणपरेषु उपनिषदादिष्वेव निष्णातः। न नवीनन्यायसरणिं विजानतीति केषाञ्चन प्रवादः अविद्वद्वाद इति। आचार्यः तत्वचन्द्रिकायां प्रामाण्यस्वतस्त्ववादं, मीमांसकाभिमत-कार्यान्विताभिधानवादपरिशीलनञ्च सुस्पष्टं न्यरूरुपत्। वेदापौरुषेयत्वसमर्थनावसरे च नैयायिकमतमवलम्ब्य एवं पर्यश्चकार- 'प्रथमवक्ता हि कर्ता भवति । ननु भगवान् प्रथमवक्ता। कदा ? सृष्ट्यादौ। कस्याः सृष्टेः? सर्वाऽपि हि सृष्टिः सृष्टिपूर्वा। तस्मान्न भगवान् प्रथमवक्ता। सप्रागभावं प्रथमवक्तृत्त्वम् । ततो न वेदकर्ता ॥

बन्नञ्जे गोविन्दाचार्यः तत्वचन्द्रिकाप्रणयनेन दुर्ज्ञेयं तत्वप्रदीपं सुज्ञेयं व्याधात् । परन्तु प्रथमपादमात्रं व्याख्यातम् । पिपासामात्रमनेन समजनि । न शान्ता तृषा। तावता आचार्य एव दिवङ्गतः। प्रायः एतदर्थमपि तस्य पुनर्जनिर्भूयादिति सम्प्रार्थ्य विरम्यते ॥

## गोविन्दाचार्यकृता भागवततात्पर्यटिप्पणी

गोविन्ददासः शतावधानी उडुपि रामनाथाचार्यः

वेदैश्च सर्वैरहमेव वेद्यः इति श्रीकृष्णवचनं समस्तवेदवाच्यः श्रीकृष्णः इति घोषयति । वेदाः सर्वसमयिनां प्रमाणम् । इतिहासपुराणं पञ्चमो वेदानां वेदः इति छन्दोगानां श्रुतिः पुरणानि वेदनाम्ना प्रस्तौति । इतिहासः पुराणं च पञ्चमो वेद उच्यते इति स्कान्देऽपि पुराणं वेद इत्येव कथितम् । महापुराणानि चाष्टादश सन्ति । अष्टादशपुराणानां कर्ता सत्यवतीसुतः इति भगवान् व्यासर्षिः पुराणकर्ता श्रूयते ।

**वेदव्यासस्तु धर्मात्मा वेदशास्त्रविभागकृत् ।**
**प्रोक्तवान् सर्वशास्त्राणि पुराणे पाण्डुनन्दन ॥**

इति वेदविभागकर्तैव पुराणकर्तेत्यत्र नास्ति संशीतिः ।

'अन्यान्युपपुराणानि मुनिभिः कथितानि तु' इति गारुडे उपपुराणानां कर्तारः ऋषयः इति ज्ञायते ।

**पुरा पुराणमेवासीत् शतकोटिप्रविस्तरम् ।**
**व्यासरूपमहं कृत्वा संहरामि युगे युगे ॥**

**चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा ।**
**तथाष्टादशधा कृत्वा भूलोकेऽस्मिन् प्रकाश्यते ।**
**अद्यापि देवलोकेऽस्मिन् शतकोटिप्रविस्तरम् ।**

इति मात्स्यवचनं स्पष्टीकरिष्यति व्यासवैभवम् ।

'पुराणमखिलं तात सर्वशास्त्रमयं स्मृतम्' इति स्कान्दवचनं पुराणं सर्वशास्त्रेषु श्रेष्ठं सर्वशास्त्रोक्तविचारपूर्णम् इति वक्ति । विशेषतः वेदार्थविस्तारः पुराणसारः । यथोक्तं-

**विस्ताराय च वेदानां स्वयं नारायणः प्रभुः ।**

**व्यासरूपेण कृतवान् पुराणनि महीतळे इति ।**
**वेदाः प्रतिष्ठिताः सर्वे पुराणे नात्र संशयः ।।**

इति नारदीये च वेदाध्ययनमिव पुराणाध्ययनं अवश्यकरणीयमिति सूचितम् ।

'स्वाध्यायं श्रावयेत् पित्र्ये' इति, पितृश्राद्धादिकाले 'पुराणानि खिलानि च' इति पुराणश्रावणं मनुना चोक्तम् । तदर्थं पुराणाध्ययनमासीत् वेदैः सह ।

'वेदं धर्मं पुराणं च..... गुरुर्ज्ञानं विनिर्दिशेत्' इति उशनाः कथितवान् ।

समूलमितिहासपुरणमिति शङ्कराचार्यः ब्रह्मसूत्रभाष्ये चोक्त्वा पुराणानां स्थानमाने प्रकटयति ।

'पुराणेषु च सर्वेषु श्रीमद्भागवतं परम्' इति पाद्मवचनं भागवतपुराणस्य श्रैष्ठ्यं कथयति ।

**श्लोकार्धं श्लोकपादं वा वरं भागवतं गृहे ।**
**शतशोऽथ सहस्रैश्च किमन्यैः शास्त्रसङ्ग्रहैः ।।**

इति स्कान्दे भागवताध्ययने प्राथम्यं कष्टसाध्यत्वं च दृश्यते इत्युक्तम् । पादार्धश्लोकाध्ययने कियान् प्रयासः इति शङ्कायां गरुडवचनं चोदाहृतं मध्वाचार्यैः व्याख्यानारम्भे । तथाहि -

**अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः ।**
**गायत्रीभाष्यरूपोऽसौ वेदार्थपरिबृंहितः ।**
**पुराणानां साररूपः.................... ।।'**

इत्यादिकम् । कथमेतदिति कथमेषां च तादृशः सम्बन्धः इत्यत्र मध्वकृत श्रीमद्भागवततात्पर्यनिर्णयग्रन्थ एव शरणम् ।

**'पुराणानामभिप्रायं व्यासो वेद नचापरः ।**
**अहं वेद्मि विशेषेण व्यासादपि विधेरपि'इति**

शिववाक्यं पाद्मे दरिदृश्यते। स शिवः व्यासप्रसादात् विधेः सकाशाच्च पुराणानि ज्ञातवानिति ज्ञायते।

भाविविधिरयं मध्वाचार्यः निर्णयग्रन्थमिमं चकार भागवततात्पर्यरूपम्। भागवतव्याजेन सर्वपुराणानां निर्णयोऽयं ग्रन्थः। अन्यदेशगमने तत्रत्य-भाषापरिज्ञानमावश्यकम् नरस्य। अन्यथा व्यवहारे सौकर्यं न भवत्येव। तथैव पुराणभाषात्रयपरिचयाभावे पुराणार्थो न सम्यग्भाति। भाषात्रयवेदिनः त्रय एते महात्मानः।

**समाधिभाषा प्रथमा लौकिकीति तथापरा।**
**तृतीया परकीयेति शास्त्रभाषा त्रिधा स्मृता।।**

इति भारद्वाजसंहितायां भाषात्रयविषये उक्तमपि तदस्पष्टतया न केनापि दृष्टिर्दत्ता। निर्णयेऽत्र स्पष्टप्रमाणमुक्तम्-

**गुह्यदर्शनभाषे च भाषा चैव समाधिका।**
**तिस्रस्तु मूलभाषाः स्युरेकैका च त्रिधा पुनः ॥**
**गुह्यदर्शनसंज्ञा च गुह्यगुह्या तथापरा।**
**एवमादिक्रमेणैव त्वेकाशीतिविभेदिताः ॥ इति।**

न केवलं भाषात्रयं किन्तु अवान्तरभेदेन मिश्ररूपेण एकाशीतिभाषाः भवन्तीति विवृतमत्र आचार्यैः। एवं यथार्थतया पुराणार्थसम्पादनाय भाषाः सर्वाः प्रकटीकृता अपि उदाहरणपूर्वकं सुस्पष्टा नाभूवन्।

भागवततात्पर्यनिर्णयग्रन्थसम्पादने दत्तादराः बन्नञ्जे गोविन्दाचार्याः अनेकेषु वाक्येषु टिप्पणीं संयोजितवन्तः। अत्रापि भाषाविषये अपूर्वमलिखन्। दशाधिक-प्राचीनव्याख्यानानि समालोच्य बन्नञ्जे महोदयैः अस्य टिप्पणी विरचितेत्यत्र नातिशयोक्तिः। विशेषतः अनन्ततीर्थीयं यादवेन्द्रीयं च अप्रकटितमद्यापि समालोक्य अत्यधिकांशो निवेशित इति तैरेवोक्तं मह्यं पाठाध्यापनसन्दर्भे मूलपुस्तकदर्शनोत्सुकाय। टिप्पणीमिषेण भागवत-व्याख्यानं निर्णयभाष्यं च कृतम्।

**सर्वे विमोहितधियः**

**सत्यस्य ते स्वदृश आत्मन आत्मनोऽन्यं**
**वक्तारमीश विबुधेष्वपि नानुचक्षे।**
**सर्वे विमोहितधियस्तव माययेमे**
**ब्रह्मादयस्तनुभृतो बहिरर्थभावाः ॥** इति हि भागवतम्(11.7.17)

(१)अभगवत्स्वरूपत्वात् तनुभृत्त्वम्। बहिरर्थापेक्षैव च तेषां मोहः। परमसुखसाधनादन्योऽर्थो बहिरर्थः।

**(२)अशरीरः सदा विष्णुः पूर्णानन्दत्वतः सदा।**
**इच्छा च क्रडयैवास्य न फाय यतो विभोः ॥**

**अतो बाह्यार्थकामोऽपि निष्काम इति कथ्यते।**
**ब्रह्मा निरभिमानत्वाच्छरीर्यप्यशरीरवान् ॥**

**नित्यानन्दोपयोग्यन्यकामस्योज्झितितः सदा।**
**बहिर्थविनिर्मुक्तस्तथाऽपि(३) तनुधारणात् ॥**

**अमूढो मूढ इतिवदुच्यते च सरस्वती।**
**(४)रुद्राद्यास्तन्वभीमानाद् बहिरर्थयुजस्तथा ॥**

**(५)सर्वेषां ब्रह्मपदवीयोग्यनां पूर्वमेव तु।**
**अभावस्त्वपरोक्षस्य मोहो ज्ञानस्य भण्यते ॥**

**(६)ब्रह्मणस्त्वंशरूपेषु भारत्या ज्ञानवर्जनम्।**
**ब्रह्मगायत्रिभावे तु नांशावतरणं क्वचित् ॥**

**(७)शतजन्मसु पूर्वं तु ज्ञानोदय उदीर्यते।**
**आपरोक्ष्यण पारोक्ष्यात् पूर्णं ज्ञानं सदैव तु ॥**

**(८)शतजन्मगतायाश्च आपरोक्ष्योज्झितिर्भवेत्।**
**'क्वचित्क्वचित् सरस्वत्या अंशावतरणेष्विति' इति शक्तिविवेके**

अत्र श्रीमदाचार्यैः निर्णये शक्तिविवेकप्रमाणानि प्रदत्तानि । कथं ब्रह्मापि मोहवान् कथ्यते । आदिना वायुसरस्वत्यादीनां च मोहविषयः कीदृशः इति । प्रसङ्गात् ऋज्वादीनां समाचाराः कथिताः । अत्र टिप्पणीषु बन्नञ्जेपण्डितैः बह्वंशाः प्रकटीकृताः । प्रमाणस्थपदानां विवरणं अनेकांशैराबद्धं वर्तते । नैकशङ्कानिर्मूलनाय (P.no. 642,643,644) अत्र व्याख्यानान्तराणि नोपकुर्वन्ति ।-

**(१)कोशेषु तु 'भगवत्स्वरूपत्वात्' इति पठ्यते । लिपिकृत्प्रमादः स्यात् । भगवत इव स्वं रूपं शरीरं येषां ते भगवत्स्वरूपाः । तद्भिन्नत्वात् । भौतिकशरीरवत्त्वादित्यर्थः । अस्मिन्नर्थे ब्रह्मादय इति ब्रह्मणोऽपि ग्रहणम् । अथच भगवदर्थमेव स्वं रूपं शरीरं येषां ते भगवत्स्वरूपाः । बाह्यार्थविधुरत्वात् । शरीराभिमानरहिताः । तद्भिन्नत्वात् शरीराभिमानित्वात् तनुभृतः । अस्मिन्नर्थे ब्रह्मादय इति रुद्राद्या एव गृह्यन्ते ।**

**(२)तनुभृत इत्यस्य विवक्षभेदेनोक्तमर्थद्वयं प्रमाणतः समाख्यापयति- अशरीरः । भौतिकशरीररहितः । कुतः? पूर्णानन्दत्वतः । ज्ञानानन्दमयशरीरत्वात् । सृष्ट्याद्यर्थं बाह्यानर्थानुपादित्सति क्वचित् । सा चेच्छा केवलं क्रीडार्थम्; न फलाय । तदुक्तम्- 'न प्रयोजनवत्त्वात्', लोकवत्तु लीलाकैवल्यम्' इति । अस्मिन्नर्थे भगवानेक एवातनुभृदबहिरर्थभावश्च । तदन्ये ब्राह्माद्याः सर्वेऽपि तनुभृतः । बरिरर्थभावाश्च । वस्तुतस्तु शरीराभिमान एव शरीरित्वं नाम । तेन ब्रह्माऽप्यतनुभृदेरेत्याह- ब्रह्मा । एवं स्वरूपानन्दा-विर्भावोपयोगि यच्छ्रवणमननादिकं तदन्य एवार्थो बहिरर्थ इत्युच्यते । नहि भगवदुपासनादिकं बाह्योऽर्थः । तस्माद् ब्रह्माऽपि बहिरर्थकामो न भवति ।**

**(३)ननु मूले ब्रह्माद्या इति ब्रह्मणोऽपि ग्रहणपक्षे तनुभृत्त्वं बहिरर्थभावश्च कथञ्चिदुक्तरीत्या युज्येयाताम् । विमहितधिय इति तु कथम्? नहि जगत्स्रष्टा मूढः शक्यं वक्तुम् । आह- तथाऽपि तनुधारणात् । यतो लोके**

शरीरित्वं मोहेन समानाधिकरणमेव दृष्टं, यः शरीरी स मूढो भवतीति तेन शरीरित्वसाम्यदुपचारतो मूढवदुज्यते। न वस्तुतो मोहवत्त्वात्। तथाच ब्रह्मणो मायया विमोहितत्वं नाम मोहजनक-मायोपादानकशरीरवत्त्वमेव, न मोहवत्त्वम्। उक्तन्यायः सरस्वत्यामपि समानः परशुक्लत्रयान्तर्भावाद् इत्याह- सरस्वती चेति। साऽपि अनभिमानादशरीरिण्येव। अबहिरर्थ-कामा, अमोहितधीश्च। यदि क्वचित् शरीरं बाह्यार्थकामो मोहश्च तस्या अप्युच्यन्ते तदुपचारादेव।

(४)रुद्रादीनां मुख्यत एवेदं सर्वं युज्यत इत्याऽह- रुद्राद्यास्तन्वभी-मानात्। तथाच रुद्राद्या न भवानिव मुख्यवक्तारः। यद्यपि ब्रह्मा मुख्य-वक्ता स्यादनभिमानात्। तथाऽपि तस्यापि प्राकृतशरीरबन्धोऽस्त्येव। त्वमेक एव मायातीतः। अतस्त्वत्तोऽन्यं वक्तारं विबुधेष्वपि नानुपश्यामि इति मूलार्थः।

(५)इदानीं प्रसङ्गवशादपूर्वं किञ्चित् प्रमेयजातमाह- सर्वेषाम्। ब्रह्मपदयोग्याः शतं ह्यृजवः। तेषां ब्रह्मपदप्राप्तेः शतजन्मतः पूर्वमपरोक्ष-ज्ञानम्। तदैव च शतगणप्रवेशः। ततः पूर्वं तु परोक्षज्ञानमेव तेषाम्। तेन तदानीं तेषामपरोक्षज्ञानाभावो मोहो नाम। नहि ज्ञानाभावमात्रम्। तथाच ब्रह्मपदवीयोग्यानां सर्वेषां जीवानां शतगणप्रवेशात् पूर्वमेव तु अपरोक्षस्य ज्ञानस्याभाव एव मोह इति भण्यत इत्यन्वयः। पूर्वमेव अनादित एवेति वा।

(६)ब्रह्मण भारत्याश्च रीत्यन्तरेण मोहं घटयति- ब्रह्मणस्तु इति। ब्रह्मणः आवेशावतारेषु सोमादिष्विति तावत्। तत्र ज्ञानाद्यभावः स्फुटः। अथ ब्रह्मा वायुः। तस्य भारत्याश्च अंशरूपेषु अवतारेषु मूलरूपे यावत् तावतो ज्ञानस्य वर्जनं ज्ञानह्रास इति यावत्। स एव च तस्य तस्याश्च मोहो नाम। भारत्या सह ब्रह्मणो वायोरिति वा। हनुमदादिषु वाय्ववतारेषु विप्रकन्यादिषु भारत्यवतारेषु च मूलरूपापेक्षया किञ्चिदिव ज्ञानह्रासो

**विद्यत इत्यर्थः। ब्रह्मत्वे तदपि नास्तीत्याह- ब्रह्मागायत्रिभावे। वायोः ब्रह्मभावे भारत्याश्च गायत्रीभावे नांशावतरणं, न तन्निमित्तो ज्ञानह्रासश्च। 'नांशावतरणे क्वचित्' इति क्वचित्पाठः प्रामादिकः सम्भाव्यते।**

**(७)ब्रह्मपदवीयोग्यानामपरोक्षज्ञानाभावो मोह इत्युक्तम्। तर्हि कदा तेषामपरोक्षज्ञानम्? आह- शतजन्मसु। शतजन्मसु मध्ये पूर्वं प्रथम-जन्मनि। पञ्चम्यर्थे वा सप्तमी। अपरोक्षज्ञानोत्तरं शततमे जन्मनि तेषां ब्रह्मभाव इति भावः। आपरोक्ष्येण ज्ञानोदय इत्यन्वयः। पारोक्ष्यात्तु सदैव स्वरूपत एव पूर्णं ज्ञानमिति।**

**(८)एवं सरस्वतीपदयोग्यानामृजुपत्नीनामपि ज्ञाने क्रमविशेषमाह- शत जन्मगतायाश्च। अपरोक्षानन्तरं भारतीभावात् पूर्वं यानि द्व्यूनानि शतजन्मानि तत्र गतायाः सरस्वत्याः सरश्वतीपदयोग्याया ऋजुस्त्रिया अंशावतरणेषु क्वचित् क्वचिदापरोक्ष्योज्झितिरपि भवेत्। अवतारेष्वावृतं भवत्यपरोक्षज्ञानं तासामिति। इतिशब्दं ऋजुज्ञानव्यवस्थोपसंहारमाह।**

एवं बहुस्थळेषु निर्णयोदहृतप्रमाणवाक्येषु स्वतन्त्रतया बन्नञ्जेमहाचार्यैः टिप्पणी सम्योजिता।

**मन्वन्तरप्रळयसङ्ख्या**

एवं मन्वन्तरप्रळयकालविषयनिर्णयेऽपि निर्णयप्रमाणानां निश्चयः कृतः। मन्वन्तरप्रळयसङ्ख्या च त्रयोदशैवेति प्रथमतया टिप्पण्याम् उद्घोषितं गोविन्दाचार्यैः। अन्तिममनोः प्रळयः दिनप्रळय एवेति तत्र सप्रमाणम् निरूपितः। अवशिष्टाः विंशतिसहस्रसमाश्च कथं विभजनीयाश्चेति निर्णय-प्रमाणानुगुण्येन प्रदर्शितश्च टिप्पण्याम् (P.no.193,194,195)। अपूर्वार्थप्रकटणे महान्तः प्रमाणमित्युक्त्वा महानात्मा च भवति गुरुराचार्यः।

**एवं कालगणनाक्रमपट्टिका प्रदत्ता प्रमाणरीत्या (P.no. 188,189)।**

भागवततात्पर्यटिप्पणी 3.12.8 (पृष्ठानि १८८-१८९)

'द्वौ परमाणू मिळितौ अणुः द्यणुकः स्यात्। द्यणुकनामकास्ते त्रयो मिलिताः त्रसरेणुः त्र्यणुकः। परमा णुद्यणुकावयोगिनामगोचरौ। त्रसरेणुरस्त्वयोगिनामपि गोचरः। कुत्रेति चेत्, जाला र्करश्म्यवगतः। गृहमित्यादिषु निर्मितं गवाक्षं जालम्। तद्वाराऽन्तर्गतोऽर्करश्मिः जालार्करश्मिः। तेनायगतः प्रकाशितः। स्वमाकाशमेवानुपतन् आकाश एवं वर्तमानः अगाद् दृष्टिपये प्राप्तोऽभूदित्यर्थः' इत्यनन्ततीर्थाः।

नगात् इति च्छेदभ्रान्त्या नगात् पर्वतात् खमाकाशमुत्पतन्निति अर्थभ्रान्तिः सम्भाव्यते। तथा केषाञ्चन "खमेवानुपतन्न गाम्' इति पाठभ्रान्तिश्च दृश्यते। तदुभयव्युदासार्थं भाष्यकारः अगादित्याह। अर्थस्तुः स्फुट एवेति न कथितः। अत्र लकारार्थोऽविवक्षितः। अगाद् गच्छतीत्येकोऽर्थः। इतः परं "दृष्टिविषयं प्राप्य ज्ञान इत्यर्थः' इत्यधिकं मुद्रितपाठेषु पठ्यते स तु प्रक्षेप एव। कोशेषु क्वाप्यदर्शनात्। असङ्गतत्वाच्च। अगादित्यस्याप्यवग-त्यर्थकत्वे जालाकरश्म्यवगत इति पुनरुक्तेः। अत एव विजयध्वजीये यादपत्ये च अगाद् गत इत्येव व्याख्यातम्। अनन्ततीर्थीयं तु तात्पर्यकथनपरमित्यवगन्तव्यम्।

दश पञ्च पञ्चदश लघूनि मिळितानि नाडिका घटिका आम्नाता। ते घटिके द्वे संयुक्ते मुहूर्तः स्मृतः। षण्णाडिका यामः। सप्त, साधसप्तनाडिका वा याम इत्युच्यते। स यामः प्रहर इति नाम्ना चोच्यते। राशिभेदन्यूनातिरेक-सम्भवादयं विकल्पः। नृणां मनुष्याणां विवक्षयेयं यामादिकल्पना। न देवादिविवक्षया। तेषां यामादेरतिमहत्त्वात् इत्यनन्ततीर्थाः। यादुपत्यरीत्या प्रहर-यामयोर्भिनन्त्वमेव। यथाहि तद्व्याख्यानम्-षण्णाडिकाः प्रहरः दिवसस्य पञ्चमो भागः। सप्त वा सप्त वा नाडिका यामः दिवसस्य चतुर्थो भागः इति। विजयध्वजीयेऽप्येवमिति भाति-षण्णाडिकाः प्रहरः। सप्त-नाडिका यामः इति तद्वचनात्। श्रीधरादयः सर्वे व्याख्यातारः यामप्रहरौ समानार्थावित्येव व्याचक्षते। कोशकाराश्च सर्वे यामप्रहरौ समावित्येवामनन्ति।

तत्पक्षे घटिकासङ्गमनं कथमिति तु विचारणीयम्। तथाहि तत्पक्षे क्वचित् दिवसकाले षड्घटिको यामः। वृद्धौ सप्तघटिकः। तथाच ह्रसीयसि दिने चतुर्विंशतिर्घटिकाः भवन्ति। परिवृे त्वष्टाविंशतिः। इदं च वस्तुस्थितिविरुद्धम्। ऊने दिवसेऽष्टाविंशतिः, वृद्धौ द्वात्रिंशद् घटिका इति हि वक्तव्यम्। तथाह्यत्र यादुपत्यवचनम्- कर्कसङ्क्रमणमारभ्य धनुःसङ्क्रमणपर्यन्तं नाडीनामूनात् क्रमेण न्यूनत्वात् धनुःसङ्क्रमणसमये यामस्य सप्तनाडीत्वम्। मकरसङ्क्रमणम्- आरभ्य मिथुनसङ्क्रमणपर्यन्तं नाडीनां क्रमेण अतिरेकादाधिक्यात् मिथुने अष्टनाडीत्वम्। मेषतुलयोः सार्धसप्तनाडीत्वमित्यादिविशेषसूचनाय वेति विकल्प इति भावः इति। गणनदृष्ट्या इदमतीव सुसङ्गतमिति भाति। मूले च प्रहरः षट् यामः सप्तेति यामप्रहरयोः स्वरसतो भेद एव प्रतीयते। तर्हि अनन्ततीर्थीयं गणितरीत्या कथं सङ्गमनीयमिति महान्तः प्रमाणम्।

अत्र श्रीधरादयस्तु रीत्यन्तरमाश्रयन्ति- पूर्वोक्तसन्ध्याकालं विहाय इयं परिगणना। तथाच षण्णाडिको याम इति पक्षे (६X४ =२४) चतुर्विंशति-नाडिको दिवसः। नाडिकाद्वयं पूर्वा सन्ध्या, नाडिकाद्वयमुत्तरा सन्ध्या इत्याहत्य (२४+४=२८( अष्टाविंशतिर्घटिकाः दिनह्रासे। एवं सप्तनाडिको याम इति पक्षे (७X४ =२८) अष्टाविंशतिर्घटिका दिनमानम्। नाडिका-चतुष्टयं पूर्वोत्तरसन्ध्यांश इत्याहत्य (२८+४=३२) द्वात्रिंशद् घटिका दिनवृद्धाविति। अनेन विधानेन कथञ्चिद् गणितं सुसम्पन्नं भवेत्। अथापि कालपरिगणनसमये सन्ध्यांशत्यागस्य प्रयोजनाभावात्, कारणा-भावात्, यामाश्चत्वार श्चत्वार इत्युत्तरवचनविरोधाच्चेदं व्याख्यानं परेषामनुपा-देयमेव। वल्लभाचार्यस्तु एतं दोषं परिजिहीर्षुः रीत्यन्तरेण व्याचख्यौ- घटिकापेक्षया स्थूला नाडिका। वृद्धौ रात्रिर्दिनं वा, तस्य चतुर्थो भागः सप्त नाड्यात्मकः। ह्रासे तु षण्णाड्यात्मकः। एवमहोरात्रं द्विपञ्चाशन्नाडिका भवन्ति षष्टिनाडिका वा इति। इदमपि नाडकाघटिकयोविभेदे मानाभा-वादुपेक्ष्यम्। ते द्वे मुहूर्त इति मूल एव स्फुटं नाडिकाघटिकयोरेकत्वप्रतीतेश्च।

**तथाचायं कालगणनाक्रमः-**

| | | | |
|---|---|---|---|
| - | १ परमाणुः | = | $\frac{१६}{१८२२५}$ सेकंडस् |
| २ परमाणू | १ द्व्यणुकः | = | $\frac{३२}{१८२२५}$ सेकंडस् |
| ३ द्व्यणुकाः | १ त्र्यणुकः | = | $\frac{३२}{५०७५}$ सेकंडस् |
| ३ त्र्यणुकाः | १ त्रुटिः | = | $\frac{३२}{२०२५}$ सेकंडस् |
| ३ त्रुटयः | १ वेधः | = | $\frac{३२}{६७५}$ सेकंडस् |
| ३ वेधाः | १ लवः | = | $\frac{३२}{२२५}$ सेकंडस् |
| ३ लवाः | १ निमेषः | = | $\frac{३२}{७५}$ सेकंडस् |
| ३ निमेषाः | १ क्षणः | = | $१\frac{७}{२५}$ सेकंडस् |
| ४ क्षणाः | १ काष्ठा | = | $६\frac{२}{५}$ सेकंडस् |
| १५ काष्ठाः | १ लघुः | = | १ मिनट्स् ३६ सेकंडस् |
| १५ लघूनि | १ घटिका | = | २४ मिनट्स् |
| २ घटिके | १ मुहूर्त | = | ४८ मिनट्स् |

अत्र श्रीधरादयस्तु त्रुटित्रयं वेद इति पक्षं विहाय शतं त्रुटय एको वेधकाल

इति वदन्ति। तत्पक्षे परमाणुकालो नाम आङ्ग्लमानरीत्या 4/151875 सेकंड्स् भवन्ति। सूर्यप्रकाशस्य परमाणुप्रदेशातिक्रमणकालः परमाणुकाल इति च परमाणुकाललक्षणं ते वर्णयन्ति। तदिदं सर्वं भ्रान्तिविलास इति सम्प्रति विज्ञानिभिर्निर्णीतम्। तथाच सेकंडपरिमितकाले १,८६,००० क्रोश (मैल्) परिमितः, प्रकाशवेग इति सम्प्रत्यवगतम्। श्रीधरादिरीत्या सेकंड परिमितकाले ३७,९६८ 3/4 परमाणुपरिमितदैर्घ्यं प्रदेशमेव केवलं प्रकाशः प्रसरतीति। तस्मात् तत् तादृशं च सर्वमपव्याख्यानं तत्वबुभुत्सुभिरुपेक्षणीयम्।

**परिमाणकोष्टकमप्यस्ति अत्र (P.no.190)।**

तथाचैवं परिमाणकोष्ठकम्-

| | | | |
|---|---|---|---|
| **४ काकणिकाः** | **= १ गुञ्जा** | **४ कर्षाः** | **= १ पलम्** |
| **४ गुञ्जाः** | **= १ माषः** | **४ पलानि** | **= १ कुडवः** |
| **४ माषाः** | **= १ कर्षः** | **४ कुडवाः** | **= १ प्रस्थः** |

सामान्यतः पलमिति तोलकत्रयमुच्यते। तथाच द्वादशार्धपलेन, षलेन, अष्टादशतोलकपरिमितेन ताम्रेण कलालाकृति घटीपात्रं यावत् प्रस्थजलं पूर्येत तवद्गात्रं निर्मेयम्। चतुर्माषपरिमितस्वर्णरचितया चतुरङ्गुलदीर्घया सूच्या अधस्ताद् वेदः करणीयः। ततस्तज्जलकटाहे निक्षेप्यम्। यावता च पूर्यते निमज्जति च पात्रं सा घटिका नाडी चेति।

विष्णुपुराणे पठ्यमाने एकस्मिन् श्लोके रीत्यन्तरेण परिमाणमुक्तम्-

**उन्मानेनाम्भतः सा तु पलान्यर्त्रयोदश।**
**हेममाषैः कृतच्छिद्रा चतुर्भिश्चतुरङ्गुलैः।**
**मागधेन प्रमाणेन जलप्रस्थस्तु संस्मृतः इति।**

अर्धेन योगे त्रयोदश, सा द्वादशेत्यर्थः इति व्याख्यानम्। तथाचैतत्पक्षे

न षट्पलं ताम्रपात्रं किन्तु सार्धद्वादशपलपरिमितमिति भेदः। अन्यत् समानम्।

दैवज्ञाः पुना रीत्यन्तरेण कथयन्ति। तद् यथा-

**शुल्बस्य दिग्भिर्विहितं पलैर्यत् षडङ्गुलोच्चं द्विगुणायतास्यम्।**
**तदम्भसा षष्टिपलैः प्रपुर्य पात्रं घटार्धप्रतिमं घटी स्यात् ॥**

**सत्र्यंशमाषत्रयनिर्मिता या हेम्नः शलाका चतुरङ्गला स्यात्।**
**विद्धं तया प्राक्तनमत्र पात्रं प्रपूर्यते नाडिकयाऽम्बुभिस्तत् इति।**

शुल्बं ताम्रम्। दिग्भिः पलैरिति दशभिः पलैः। षष्टिपलैरिति षष्टि-विघटिकाभिः। तथाचात्र पक्षे दशपलपरिमितं ताम्रपात्र-मिति भेदः। हेम-शलाका च न चतुर्माषपरिमिता किन्तु सत्र्यंशमाषत्रयनिर्मिता। कथमत्र विरोधसङ्गमनमिति विचि-कित्सकैर्विभावनीयम्। प्रदेशभेदे माषपला-दीनामन्यान्यपरिमाणेषु व्यवहारात् सर्वमपि कथञ्चित् सङ्गमनीयं स्यात्। यथा चतुर्गुञ्जा पञ्चगुञ्जा वा माष इति। अत एव विष्णुपुराणेऽपि मागधेन प्रमाणेनेत्युक्तम्। अन्यत्र प्रस्थप्रमाणस्यान्यादृशत्वादित्यलम्।

**एवमेव मन्वन्तरादिकालकोष्टकमपि दत्तमस्ति।**

चतुर्युगसहस्रमितं हि ब्रह्मणोदिनम्। तत्र चतुर्दश मनव इति तत्काल-विभागे एकैकस्य महायुगनामेकसप्ततिः भुक्तिकालो भवति-

१४) १०००(७१
९८
———
२०
———
१४
———
६

ततश्च षड्युगचतुष्टयमवशिष्यते। तदपि मन्वन्तरेषु विभज्य योजनीयमिति दर्शयितुं साधिकेत्युक्तम्। अधिकसङ्ख्या तु भाष्ये स्फुटमुक्ता सार्धाष्टदशलक्षकमिति। तथाच गणितक्रमः - चतुर्युगस्य १२,००० वर्षाणि देवमानेन भवन्ति। मानुषमानेन तु १२,०००x३६०=४२,२०,००० वर्षाणि भवन्ति। तस्य सप्तत्या गुणने-

४३,२०,००० x ७१ = ३०,६७,२०,००० वर्षाणि। अयमधिकांशं विना मन्वन्तरकालः। तदुक्तं विष्णुपुराणे- त्रिंशत्कोट्यस्तु सम्पूर्णाः सङ्ख्याताः सङ्ख्यया द्विज। सप्तषष्टि स्तथाऽन्यानि नियुतानि महामुने। विंशतिश्च सहस्राणि कालोऽयमधिकं विना इति। ततश्चाधिकस्य पूरणे ३०, ६७,२०,०००+१८,५००००=३०,८५,७०,००० वर्षाणि आहत्य समग्रो मन्वन्तरकालः।

तथाऽपि कालः कश्चनावशिष्यते। तथाहि षड्युगचतुष्टयकालः -१२,०००x६x ३६०=२,५९,२०,०००वर्षाणि। तानि मन्वन्तरेषु विभज्य हि योजनीयानि। तत्र प्रतिमन्वन्तरं १८,५०,००० वर्षाणि योजनीयानीत्युक्तम्। आहत्य चतुदर्शसु मन्वन्तरेषु (१८,५०,००० x १४=) २,५९,००,००० वर्षाणि भवन्ति। एवञ्च पुनरपि विंशतिः सहस्राणां कल्पकालेऽवशिष्यते। तथाहि-

| | |
|---|---|
| **षयुगचतुष्टयस्य कालः** | = २,५९,२०,००० |
| **तत्र मन्वन्तरेषु विभक्तः कालः** | = २,५९,००,००० |
| **अवशिष्टः कल्पकालः** | = २०,००० |

एतेषामवशिष्टानां कल्पवत्सराणां मन्वन्तरेष्वनन्तर्भावे कुत्रान्तर्भा इत्यत आह- सहस्रमित्यादि। शतानां चतुरुत्तरं सहस्रम्, चतुःशतोत्तरं सहस्र (१४००)मित्यर्थः। पञ्चोत्तरमथापिच। अथेति पक्षान्तरे। अथवा, शतानां पञ्चोत्तरं सहस्र(१५००)मिति यावत्। अवशिष्टः विंशतिसहस्रात्मकः कालः मन्वन्तराणां प्रळयकाल इति समग्रसङ्ख्यापूरणं भवति। विंशतिसहस्र-परिमितानां वर्षाणां चतुर्दशसु मन्वन्तरेषु कथं पुनर्विभागः? अत्र प्रायः सर्वेऽपि विभ्रान्ताः। तथाह्यत्र तात्पर्यदीपिका- प्रथममनुप्रळयकालः द्विसहस्रम्, द्व्यादिषर्यन्तं पञ्चशतोत्तरं सहस्रम्, अवशिष्टाष्टमन्वन्तर-प्रळयकालः शतानां चतुरुत्तरं सहस्रम् इति। तदिदमसङ्गतं भाति। गणितविरोधात्। तथाहि तद्रीत्या गणने प्रथममनुप्रळयकालः २,०००

वर्षाणि; तदनन्तराणां पञ्चानामाहत्य (१५०० x ५=) ७५०० वर्षाणि; अवशिष्टा-नामष्टानामाहत्य (१४०० x ८=)११,२०० वर्षाणि। तथाच समग्रो मनुप्रळयकालः (२०००+५००+११.०००=)२०,७०० वर्षाणि भवन्ति। एतत्पक्षे अवशिष्टकल्पकालादप्युर्वरितानि वर्षाणि सप्तशतानि कुत आनेयानि? चतुदर्शमन्वन्तरावसाने महाप्रळयस्यैव प्रारम्भात् पुनः मनुप्रळयकालत्वेन १४०० वर्षाणां परिगणनानौचित्याच्च। कथञ्चित् तत्यागे पुनः सप्तशतानि वर्षाणां न्यूनानि भवन्तीति दुरुपपादमेव गणितरीत्या तद्व्याख्यानम्। एवं यादुपत्यमपि। तद्रीत्या हि- आद्येषु षु प्रथमे द्विसहस्रम्, द्वितीये पञ्चशतोत्तरं सहस्रम्, तृतीये चतुःशतोत्तरम्, शिष्टेषु त्रिषु त्रिशतोत्तरं सहस्रम्, अवशिष्टेष्वष्टसु पुनश्चतुःशतोत्तरं सहस्रमिति कालगणना। यद्यपि एतत्पक्षे आहत्य विंशतिसहस्राणि भवन्तीति गणितक्रमः सङ्गच्छते। तथाहि-

| | | |
|---|---|---|
| **आद्यमनुप्रळयकालः** | - | **२००** |
| **द्वितीय** | - | **१५००** |
| **तृतीय** | - | **१४००** |
| **चतुर्थादित्रिकस्य** | - | **३९०० (१३००x३)** |
| **अवशिष्टाष्टकस्य** | - | **११,२०० (१४००x८)** |
| **आहत्य** | - | **२०,०००** |

अत्र त्रिशतोत्तरं शतं मूलानुक्तमधिकं निवेश्यत इत्यरुचिः। अयं गणितक्रमश्च मूलश्लोकान्न कथमपि प्रतीयते। यथाकथञ्चित् यत्किमपि गणितमाश्रित्य सङ्ख्यापूरणं तु न प्रीणयति चेतः। पूर्वव्याख्यानवदत्रापि चतुर्दशमन्वन्तर-प्रळयकालपरिगणनमसङ्गतम्।

अतस्तर्हि मूलश्लोकस्य कोऽर्थः? एवं सम्भाव्यते- चतुःशतोत्तरं सहस्रं मनुप्रळयकाल इत्येकः पक्षः। पक्षान्तरमप्यस्तीत्याह- पञ्चोत्तरमथापि चेति। अथ, अथवा पञ्चशतोत्तरं सहस्रं प्रळयकाल इत्यपरः पक्षः। नचानयोः पक्षयोर्विरोधः। कल्पभेदेन व्यवस्थासम्भवात्। तथाचि क्वचित्कल्पे १४००

वर्षाणि मनुप्रळयः, क्वचिच्च १५०० वर्षाणीति। कल्पमध्ये च त्रयोदशैव अवान्तरप्रळयाः, न चतुर्दश। चतुर्दशस्य महाप्रळये गतत्वात् ( नन्वेवमपि न सङ्ख्यापूर्तिः। प्रथमपक्षे (१४००x१३=)१८,००० वर्षाण्येव सम्भूय भवन्ति। पक्षान्तरे च (१५०० x १३=)१९,५०० वर्षाणि। तत्कथं विंशतिसहस्रपूरणम्? आह- आद्येषु षु प्रथमे द्विसाहस्रं प्रथमे द्विसाहस्रं प्रकर्तितम् इति। १४००वर्षाणीति प्रथमपक्षे आद्येषु षु द्विसाहस्रं प्रकर्तितम्। १५०० वर्षाणीति द्वितीयपक्षे प्रथमे द्विसाहस्रं प्रकर्तितम्। अयमर्थः। मन्वन्तराणां षुषु विभक्तेषु प्रथमषं द्वितीयषङ्कं अवशिष्टं द्वयमिति राशित्रयं भवति। एवं षविभागेन सम्पन्नेषु त्रिषु राशिषु य आद्याः फ्रथमसप्तमत्रयोदशाः तेषु द्विसाहस्रं प्रकर्तितम्। द्वितीयाच्छष्टपर्यन्तं अष्टमाद् द्वादशपर्यन्तं च चतुःशतोत्तवं सहस्रमेव। तृतीयराशाववशिष्टस्य चतुर्दशस्य महाप्रळय एवान्तर्भावान्न गणना। एवं सङ्ख्यापूर्तिर्भवतीति। तथाहि-

**प्रथमसप्तमत्रयोदशानां प्रळयकालः** (२०००x३=) ६०००

**अवशिष्टानां दशानां प्रळयकालः** (१४००x१०=)१४,०००

**तथाच समग्रः प्रळयकालः** २०,०००

पञ्चशतोत्तरं सहस्रमिति द्वितीयपक्षे सङ्ख्यापूरणक्रममाह- प्रथमे द्विसाहस्रं प्रकर्तितम् इति। तथाच क्रमः-

**प्रथमप्रळयकालः** = २०००

**अवशिष्टानां द्वादशानां प्रळयकालः** (१५००x१२)= १८,०००

**तथाच समग्रः प्रळयकालः** = २०,०००

एवं सर्वं सुसम्पन्नं भवति। इतश्च महान्तः प्रमाणम्।

वेदमन्त्रेषु मन्त्रार्थेषु च निष्णाता गुरवः भागवतटिप्पण्यां च बहुत्र भागवतपुराणसूचितमन्त्रान् मन्त्रार्थान् प्रादुः।

‘उक्थशासो ह्यसुतृपो यथा नीहारचक्षुषः’ इत्यत्र (११.२१.०२८) ‘न

तं विदाथ' इति मन्त्रपाठं पूर्णं दत्वा अस्यार्थमपि किञ्चिदाहुः। पूर्वाचार्यव्याख्यानमप्यत्र दत्तवन्तः।

**बदरपाण्डुवदनः**

एवं शब्दार्थविषये अपूर्वार्थतालोक्यते। बदरपाण्डुवदनः इत्यत्र बदर इत्यस्य चन्द्र इति निर्णयप्रमाणम्। तस्यार्थमुक्त्वाद्यापि बदरशब्दोऽपि अरब्बीभाषायां चन्द्रवाचकः प्रवर्तते इति टिप्पण्यां दत्त्वा गोविन्दाचार्याः देशकालव्यापिनो भवन्ति।

**मानवो बदरः सिन्धुः शशिनस्तु त्रिनामकम्।**
**यो वेद मुच्यते रोगैर्विष्णुनाम्नेव संसृतेः॥**

इति स्कान्दे' इति निर्णयोक्तं पाठावसरे विवृतमाचार्यैः समीचीनतया। न नियोजितं टिप्पणीषु। नामत्रयसादृश्येन चन्द्रनामानीति। मनोभिमानित्वात् चन्द्रः मानवः मनोरोगं दूरीकरोति। बद स्थैर्ये इति धातुः। बदं रातीति ददातीति स्थिरतां मनसि निदधातीति चन्द्रः बदरः। तथा सिद्धिं करोतीति, सिद्धिं ददातीति, अन्तःसारं धत्ते इति वा सिन्धुरिति व्याख्याय रोगान्परिहृतवन्तः आचार्याः। साधनांशमपि प्रकाशितवन्तः एवमेवान्यत्र। स्थालीपुलाकन्यायेन किञ्चिदिवाम्रेडितं मयात्रापि।

निर्णयादधिकमेव मुद्रितटिप्पणीदानीं वर्तते। सम्पादनवेळायाम् इतोऽप्यधिकं बन्नञ्जेमहाभागैः लिखितमासीत्। तन्मुद्रणायाधिकं भवतीति ग्रन्थप्रकाशकैरुक्तमिति बह्वंशाः विकलीकृताः मया इति बन्नञ्जे आचार्यैरेव उक्तम्। मे प्रदीयतामिति मया प्रार्थितम् तत् तदानीमेव दूरे क्षिप्तमित्य-वदन्नाचार्याः। यदा पुनर्मुद्रणावसरश्चेत् सर्वं दास्यामीति टिप्पण्यां इति तैरेव वारं वारमुक्तमद्यापि स्मरामि। जन्मान्तरेषु लभ्यानीति मन्ये।

न केवलमेवं पदार्थाद्यपूर्वविषयेषु आचार्यकौशलम्, किन्तु मध्वाचा-र्योदाहृतप्रमाणेषु प्रयोगेषु व्याकरणौचित्त्यं तत्र तत्र टिप्पण्यां सूचितमस्ति।

तथा छन्दोवैचित्र्यं च श्रुतिगीतासु प्रतिपादितमपूर्वम्। विशेषतः तत्र अन्यत्रापि भागवतपुराणपाठं तात्पर्यानुगुणं प्राचीनं प्रदाय अर्थविशेषं च प्रदर्शितवान्। शुद्धपाठः शुद्धचिन्तनमिति तेषामाशयः। वेदव्यासविरचितं एतत्पुराणम् आचार्यमध्वैर्निर्णीतम् एतादृशमिति सतात्पर्यं बन्नञ्जेगोविन्दाचार्यैः उद्घोषितम्। भागवततात्पर्यनिर्णयग्रन्थस्य अध्ययनाध्यापने शताधिक-वर्षात्पूर्वमेव नष्टे इति आचार्यैरुक्तं पाठनसन्दर्भे। गोविन्दाचार्याः द्विवारं निर्णयं पाठितवन्तः। प्रथमं मम कन्नडभाषायां, द्वितीयं अनिलाय संस्कृतभाषायाम्। तदा कृष्णराजोऽपि किञ्चिदिव पाठं गृहीतवानिति मया श्रुतम्। अध्यापनपरम्परायां अयं ग्रन्थो भवेदिति तेषामतीवाशासीत्। तेषां सङ्कल्पानुसारेणेति मन्ये इदानीं तत्र तत्र विरळतया श्रूयते निर्णयचिन्तनम्। भागवतपुराणस्थप्रतिश्लोकं यावत् आचार्यमध्वकृततात्पर्यनिर्णयस्य सङ्गमनं भूयादित्याशासे। पूर्वापरसङ्गमनटिप्पणी बन्नञ्जेकृता उपकारिणी वर्तते। शुद्धपाठः प्रचलतु। पूर्णबोधः प्रसीदतु। एष पन्थाः। एतद्ब्रह्म। एतत्कर्म। एषा हि परमा गतिः ॥ श्रीः ॥

*****

# निर्णयभावचन्द्रिकोपेतः महाभारततात्पर्यनिर्णयः

प्रो.एम्. नारायणाचार्यः

## महाभारतम्

ब्रह्मरुद्रेन्द्रादिभिरर्थितो भगवान्नरायणः पुनर्ज्ञानप्रतिष्ठापनाय द्वापरान्ते व्यासत्वेनाववतारेति शास्त्रसिद्धो विषयः। तेन निबद्धमिदं महाभारतं नामेतिहासग्रन्थः पञ्चमवेद इति वेद्यते उपनिषद्वाण्या। तथा हि- वर्ण-समुदायात्मको वेदस्तावदपौरुषेयः। अपौरुषेयवेदार्थनिर्णयकानि सूत्राणि ग्रथितानि भगवता बादरायणेन। न मन्दबुद्धीनां तैरेव वेदार्थज्ञानं सुशकमितीतिहासपुराणान्यप्यारचितानि। सत्सु शिक्षा-व्याकरण-कोश-निघण्ट्वादिषु कुतो न सुशकं वेदार्थज्ञानम्? जानन्त्येव भाषातत्त्वविशारदाः एकं पदं नैकेऽर्था इति। कुत्र को वा अर्थ इति कस्तावन्निश्चिनुयात् सर्वज्ञं विना ?पौरुषेये तावत् तत्प्रणेतुरभिप्रायेण शक्यतेऽर्थमवगन्तुम्। न तु वेदे। प्रणेत्रभावात्। तदर्थमेव सर्वज्ञेन भगवता प्रणीतानि इतिहासपुराणानि सुकृतिनामुपकाराय। अतो हि वेदप्रामाण्यवादिभिस्सर्वैरपि मुमुक्षुभिः वेदार्थनिर्णयाय सूत्रेतिहासपुराणादीन्यनुसर्तव्यान्येव। अन्यथान्यथार्थम् अनुसन्दधानाः कथं वा ते संसारसागरमुत्तरेयुः? अतः समुदघोषि भगवता 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति। इतिहास इति पञ्चरात्र-मूलरामायण-महाभारतान्युच्यन्ते। तत्रापि महाभारतं नामेतिहासग्रन्थः निर्णेयग्रन्थेषूत्कृष्टं पदमावहतीत्याह तत्प्रबन्धा भगवान् बादरायणः साक्षान्नारायणः। यथा –

**भारतं सर्ववेदाश्च तुलामारोपिताः पुरा।**
**देवैर्ब्रह्मादिभिः सर्वैः ऋषिभिश्च समन्वितैः।**
**व्यासस्यैवाज्ञया तत्र त्वत्यरिच्यत भारतम् ॥(ब्रह्माण्डपुराणे)**

**महत्त्वाद् भारवत्त्वाच्च महाभारतमुच्यते।**

**निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते । (म.भा.१.३००)'**

**यदिहास्ति तदन्यत्र यन्नेहास्ति न कुत्रचित् ॥** (म.भा.आदि ५.५०)

भाषादिवैविध्यमाश्रित्य निबद्धमिदं महाभारतमपि नैकार्थयुतं स्वभावत एव दुर्ग्रहमथच गच्छता कालेन प्रक्षेपाद्यासुरीशक्त्या च निबद्धमप्यनिबद्धम् इवाभूत् । तेन वेदार्थनिर्णायकमिदं महाभारतमपि निर्णयसापेक्षीकृतम् ।

## महाभारततात्पर्यनिर्णयः

वेदोपनिषदाद्यर्थप्रकाशनाय प्रायतन्त बहवो भाष्यप्रबन्धनेन । वेदभाष्य-कारैस्तु नाश्रावि वेदव्यासवचनं 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्'इति । अन्यैः प्रस्थानत्रयभाष्यकारैस्तु श्रुत्वाप्यर्धमेवाग्राहि । अतः महाभारतान्तर्गतां भगवद्गीतामेवालश्चक्रुः स्वीयभाष्यैः । तैस्तूपनिषद्भाष्येषु वेदार्थनिर्णायके ब्रह्मसूत्रभाष्ये वा क्वचिदेवोपाकृतानीतिहास- पुराणवचनानि स्वल्पान्येव । न तावता लक्षाधिकग्रन्थात्मकैरितिहासपुराणैर्वेदोपबृंहणं नाम समसाधि । संसाधयामासु मध्वभाष्याणिवेदोपबृंहणम् । 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेदि'ति बादरायणभणितिमनुपालयन्नाचार्यो मध्वः न केवलं श्रुतिसूत्रोपनिषदादिभाष्येषु वेदव्यासाभिमतार्थप्रकाशनाय इतिहासपुराण-गतानि व्यासवचनान्युल्लिलेख, प्रबबन्ध चसमस्तेतिहासपुराणार्थनिर्णयपथ प्रदर्शनाय भागवततात्पर्य-महाभारतात्पर्यनिर्णयान् ।

## महाभारततात्पर्यनिर्णयस्य प्रासङ्गिकता महिमाच

आचार्यमध्वस्य महाभारततात्पर्यनिर्णयः न केवलम् इतिहासपुराण-कथासङ्ग्रहः । परं निर्णायकः शोधग्रन्थः समेषामितिहासपुराणानाम् । सति विरोधे हि निर्णयस्य प्रसक्तिः । किन्निमित्तोऽयं विरोधः ? भिन्नकर्तृके सति स्याद्विरोधः एककर्तृकेऽपि बुद्धिदोषनिमित्तम् वा । इतिहासपुराणानां कर्ता एक एव भगवान् बादरायणः । अतो नास्ति भिन्नकर्तृकता । न वा साक्षान्नारायणावतारस्य तस्य सर्वज्ञस्य बुद्धिदोषप्रसक्तिः । कारणं विना

कार्योदयस्तु न लोके नवा शास्त्रे सिद्धः । परं दरीदृश्यन्ते विरोधाः, असङ्गतयः, व्यत्यासादयः एकस्यैव प्रसङ्गस्यान्यथान्यथा निरूपणादीनि इतिहासपुराणेषु । किमत्र कारणमित्येवास्ति निर्णयस्य प्रसक्तिः । यदि विरोधादयः प्रत्यक्षसिद्धाः तर्हि तान्यप्रमाणान्येव इति नास्ति निर्णयप्रसक्तिरिति न मन्तव्यम् । सर्वज्ञप्रणीतत्वात्तेषाम् । तर्हि का गतिः विरोधादीनाम् ? तां गतिं निरूपयितुमेव निर्णयःप्रसक्तः ।विरोधादयः क्वचिदापाततः क्वचिच्च वास्तवा अपि सकारणका भवन्ति । 'अत्रोदिता याश्च कथाः समस्ताः वेदेतिहासादिविनिर्णयोक्ताः' इत्याह भगवानाचार्यः स्वयं ग्रन्थावसाने । आह च नवमेऽध्याये

**'इत्यशेषपुराणेभ्यः पञ्चरात्रेभ्य एव च ।**
**भारताच्चैव वेदेभ्यो महारामायणादपि ॥ १२५ ॥**

**परस्परविरोधस्य हानान्निर्णीय तत्वतः ।**
**युक्त्या बुद्धिबलाच्चैव विष्णोरेव प्रसादतः ॥ १२६ ॥**

**बहुकल्पानुसारेण मयेयं सत्कथोदिता ।**
**नैकग्रन्थाश्रयात्तस्मान्नाशङ्क्याऽत्र विरुद्धता ॥ १२७ ॥**
**क्वचिन्मोहायासुराणां व्यत्यासःप्रतिलोमता ।**
**उक्ता ग्रन्थेषु तस्माद्धि निर्णयोऽयं कृतो मया ॥ १२८ ॥**

**एवञ्च वक्ष्यमाणेषु नैवाशङ्क्या विरुद्धता ।**
**सर्वकल्पसमश्चायं पारम्पर्यक्रमः सदा ॥ १२९ ॥......'**

इत्यादिवचनैः रामकथानिर्णयान्ते नवमेऽध्याये उक्तस्य रामकथा-निर्णयस्य वक्ष्यमाणस्य भारतादिकथानिर्णयस्य च प्रामाणिकत्वं प्रददर्श भगवत्पादः । [1]उदितं च नारायणपण्डिताचार्येण श्रीमध्वविजये

**'इतिहासपुराणाब्धेर्भवच्चित्ताद्रिलोळितात् ।**
**जातां भारततात्पर्यसुधां कः सन्न सेवते' ॥ (१५.७६)**

1 निर्णयभावचन्द्रिका - भूमिका पृ.सं ५०

**पाराशर्यः परतत्वप्रसिद्ध्यै तात्पर्यार्थं परमं भारतस्य ।**
**व्यक्तं वक्तुं नियुक्ति स्म साक्षादेनं धन्यं भुवने मन्यमानः ॥**
(१०.२५)

**अस्य पण्डितैरपि दुरवगाहस्य निरन्तरमननीयतां चाऽह योगदीपिकायाम्[1]**

**द्विजो गुर्वर्चकः शुद्धचरणो नित्यकर्मकृत् ।**
**सायम्प्रातः समिद्धोमी भैक्षान्नादः श्रुतीः पठेत् ।**
**श्रीमद्भारततात्पर्यनिर्णयाद्यं समभ्यसेत् ॥ (१.८-९)**

'यत्र रामकथाप्रस्तावः, तदा मूलरामायणे, वाल्मीकिरामायणे, भारते, पुराणेषु च निरूपिता यायाः कथास्तासां सर्वासामविरोधेन समन्वितोः अर्थोऽत्र समार्थ्यत। आपाततः परस्परं विप्रतीपतया प्रतीयमानानाम्, अथचासङ्गततया प्रतीयमानानां प्रमेयाणामैकार्थ्यबोधनेन समन्वयप्रकारश्च प्रकट्यक्रियत। एवं कृष्णकथायाम्, पाण्डवकथायामपि'[2] ॥

ईदृशस्य महाभारततात्पर्यनिर्णयस्य अस्त्यध्ययनपरम्परा। अस्ति च व्याख्यानपरम्परा माध्वलोके। न ताभ्यां प्रासारि मध्वालोकः। सोऽधुना प्रसरीसरीति निर्णयभावचन्द्रिकया।

## आचार्य्यगोविन्दविरचिता निर्णयभावचन्द्रिका –

भगवत्पादस्तु स्वीयनिर्णयमार्गप्रदर्शनपूर्वकं विरोधाद्युपशमनैः निर्णिनाय कथाः। तथापि कुत्र कः विरोधः का वा संशीतिः तत्परिहरणेऽनुसृतः मार्गः क इति तु दुरवबोध एवावशिष्ट आसीत् यावन्निर्णयभावचन्द्रिकाप्रबन्धनम्। यदि निर्णयभावचन्द्रिकां नाग्रन्थिष्यत् गोविन्दाचार्यः तर्हि नावभोत्स्यत लोकः निर्णयमार्गं विरोधादिकं तत्परिहारं वा। अभविष्यच्च प्रणीतोऽप्यप्रणीत इव महाभारततात्पर्यनिर्णयः। दैवादग्रथ्नान्निर्णयभावचन्द्रिकां गोविन्दा चार्यः। निर्णयभावचन्द्रिकायाः उद्देश्यं, वैशिष्ट्यं, व्याप्तिः, फलञ्च ये

1. निर्णयभावचन्द्रिका - भूमिका पृ.सं ५०
2. निर्णयभावचन्द्रिका - भूमिका पृ.सं ५०

जिज्ञासन्ति तेषां सुविस्तरा टीकाकृद्ग्रथिता भूमिकैव शरणम्। परिशुद्धपाठे आग्रहवता, सम्पादकेन व्याख्यात्रा चगोविन्दाचार्येण एवमगादि भूमिकायाम् - 'सम्पादकेन संशोधकेन च वोढव्या धूरपि वधूरिव यत्नेन पालनीया भवति' इति।अक्षरशः स्वयमपालयत् स तां धुरम् वधूमिव इतिभूमिकायां प्रत्यपादयत्। निर्णयभावचन्द्रिकायाः तदितरैः महाभारततात्पर्यनिर्णयव्याख्यानैः तौलनिकाध्ययनेन प्रतिभासमाना विशेषा एते भवन्ति।

**१.महाभारततात्पर्यनिर्णयानुसारम् इतिहास-पुराणानामध्ययनक्रमः।**

**२.महाभारततात्पर्यनिर्णयाभिप्रेतः शुद्धपाठः।**

**३.महाभारततात्पर्यनिर्णयाभिव्यक्तः भाषाभेदेनार्थनिर्णयः कथानिर्णयश्च।**

**४.महाभारततात्पर्यनिर्णयाभिव्यक्ताः व्यत्यासादिभेदेनार्थनिर्णयः कथा निर्णयश्च।**

**५. महाभारततात्पर्यनिर्णयसूचिता पदसिद्धिः वाक्यशुद्धिश्च।**

अत्र तावदेते दृष्टान्तास्सन्ति -

## न सर्वत्र कल्पभेदेन विरोधादिपरिहरो युक्तः

सामान्यमिदं तन्त्रं यत् इतिहासपुराणादिषु यत्र क्वापि कथासु विरोध-व्यत्यासादयः दृश्यन्ते तत्र कल्पभेदेन विरुद्धयोरपि व्यत्यासेन पठितयोरपि कथयोः प्रामाण्यमाकलयन्ति विद्वांसः। परन्तु नैतद्युक्तमित्याह भगवत्पादः - 'ऋते तु पाण्डवकथां कार्ष्णं रामायणं तथा' (भाग.ता. ४-१-३३)इति वाराहवचनेन न भारत-भागवत-रामायणकथासु कल्पभेदेन विरोधादिपरिहारो युक्तः। यद्यप्युक्तं भगवत्पादैः **बहुकल्पानुसारेण मयेयं सत्कथोदिता** इति। अन्यत्र पुराणकथास्वेवायं क्रम आदरणीय इति तदभिप्रायः। तर्हि का गतिः विरुद्धव्यत्यस्तवचनानामिति शङ्कायाः समाधानमुक्तं तत्रैव - मोहायैतेषु भिन्नता इति। एतेषु - रामायण-भारतादिकथासु यदि कथानिरूपणे भिन्नता

दृश्यते सा दुर्जनमोहायैव इति ज्ञेयम् । सज्जनास्तु [1]भाषाज्ञानेन, व्यत्यासादि-भेदज्ञानेन वा विरोधादीन् परिहृत्य यथार्थमवगच्छन्ति । तदत्र निर्णयभाव-चन्द्रिकायां [2]भगवत्पादोक्तभाषाभेदपुरस्सरं व्यत्यासादिसप्तभेदप्रदर्शनपूर्वकं च तत्र तत्र विरोधादिपरिहारक्रमः प्रादर्शि निर्णयभावचन्द्रिकाकारेण । नैतावता अपपाठादिकमपि भाषाभेदेन वा व्यत्यासादिना वा समर्थनीयमिति मन्तव्यम् । स्वयमुक्तं भगवत्पादैः 'क्वचिद्ग्रन्थान् प्रक्षिपन्ति क्वचिदन्तरितानपि कुर्युः क्वचिच्च व्यत्यासम्..' इत्यादि । एतदपि स्पष्टमभिव्यक्तं निर्णयभाव-चन्द्रिकायाम् । एवं महाभारततात्पर्यनिर्णयव्याख्यायां निर्णयभावचन्द्रिकायां व्याख्यात्रा तत्र तत्र भाषाभेदेन, व्यत्यासादीना वा कथं विरोधादयः परिहरणीया इति, क्व वा अपपाठादिनिरसनेन मूलपाठश्चिन्तनीय इति स्पष्टं व्याख्यायि ।

**[3]असङ्गतःपाठः**

**सत्वे बाहुबले धैर्ये प्राणे शारीरसम्भवे ।**
**साम्प्रतं मानुषे लोके सदैत्यनरराक्षसे ॥**

**चत्वारस्तु नरव्याघ्राः बले शक्रोपमा भुवि ।**
**उत्तमाः प्राणिनां तेषां नास्ति कश्चिद्बले समः ॥**

**बलदेवश्च भीमश्च मद्रराजश्च वीर्यवान् ।**
**चतुर्थः कीचकस्तेषां पञ्चमं नानुशुश्रुमः[4] ॥**

**अन्योन्यानन्तरबलाः परस्परजयैषिणः ।** इत्ययं महाभारतस्य दाक्षिणात्यः पाठः । अयमत्र कथाप्रसङ्गः - महाभारते विराटपर्वणि कीचक-

---

1.भाषात्रयं न जानाति रीतीनां शतमेव च ।पुराणार्थं वदन् याति नरकं नात्र संशयः ॥

2.म.भा.ता नि.२- १२० तः १२३ तथा निर्णयभावचन्द्रिका - पृ.सं. ८६ तः ८८ (निर्णयभावचन्द्रिकायाः ८६, ८७ पुटयोः ८१ भाषाः प्रदर्शिताः ।)

3.निर्णयभावचन्द्रिकायाः भूमिका- पु.सं. ६४-६५

4.वि.प. ३२- १७ तः १९

वधकथानिरूपणसन्दर्भे दुर्योधनं गूढचारः कश्चित्समागत्य गन्धर्वेण केनचिन्निहतः कीचक' इति तस्मै निवेदयामास। परन्तुः कीचकवधवार्तां श्रुत्वा दुर्योधनः कीचकवधस्य भीमसेनकृतत्वसंभावनया पाण्डवानां तत्र स्थितिं सम्भावयामास। कथं स चिन्तयामासेत्यत्रैतानि वचनानि भवन्ति महाभारते। उत्तरभारतीयपाठे दुर्योधनस्य मौनमेवोत्तरम्। दाक्षिण-भारतीयपाठे तु एवमस्ति- असङ्गतोऽयं पाठः। बलदेवादयः **'अन्योन्यान-न्तरबलाः'** इत्युच्यते। अथ **'समप्राणबलाः'** इति च। तथा भीमादपि बलदेवो बलीयानिति स्पष्टं परस्परविरोधः। 'नरव्याघ्राः' इति **'प्राणिना-मुत्तमाः'** इति च पुनरुक्तता। **'बले शक्रोपमाः'** इति 'तेषां नास्ति कश्चिद् बले समः' इति विप्रतिषिद्धमिव। **'परस्परजयैषिणः'** इति व्यर्थमपार्थञ्च। एवं दोषभूयिष्ठः पाठ इति सामान्यजनोऽपि जानाति। नायं दुष्टः पाठः व्यत्यासादिभेदेन वा भाषाभेदेन वा कल्पभेदेन वा समर्थनीयो भवति।

**अयमत्र समीचीनः पाठः -**

**सत्वे बाहुबलेधैर्ये प्राणे शारीरसम्भवे।**
**साम्प्रतं मानुषे लोके सदैत्यनरराक्षसे ॥**

**चत्वारः प्राणिनां श्रेष्ठाः सम्पूर्णबलपौरुषाः।**
**भीमश्च बलभद्रश्च मद्रराजश्च वीर्यवान् ॥**

**चतुर्थः कीचकस्तेषां पञ्चमं नानुशुश्रुमः।**
**अन्योन्यानन्तरबलाः क्रमादेव प्रकीर्तिताः ॥**[1]

अयमतिशुद्धः पाठः प्राचीनः भगवत्पादोद्धृतः। नाक्काप्यसङ्गतिरिति रमणीयोऽयं पाठः। एवं शताधिकस्थलेषु निर्णयभावचन्द्रिकाकारेण स्वव्याख्यायां भगवत्पादनिर्णयानुसारं पाठशुद्धिः कथाशुद्धिश्च सम्पादिता। इतिहासपुराणेषु द्योतमानाः काश्चन अन्यैरचिन्तिताः असङ्गतयः भूमिकायामपि **'काश्चन समस्याः' (निर्णयभावचन्द्रिकायाः भूमिका -**

---

1.म.ता.नि.२-१६३ तः १६६

**पु.सं. ६६ तः ७७ )** इत्युपशीर्षके सपरिहारं समुल्लिखिताः निर्णयभाव-चन्द्रिकाकृता इत्येतदेवालं प्रकटयति तत्प्रतिभाप्रभां सकलशास्त्रपरिनिष्ठाम् ।

## भाषाभेदेन कथानिर्णयः तत्त्वनिर्णयश्च

महाभारततात्पर्यनिर्णये प्रथमाध्याये भगवत्पादैः व्यासप्रणीतलक्षणग्रन्थ माश्रित्योक्तमिदम् -**'भाषास्तु त्रिविधास्तत्र मया वै सम्प्रदर्शिताः । उक्तो यो महिमा विष्णोः स तूक्तो हि समाधिना ॥१२० ॥ .......दर्शनान्तर-सिद्धं च गुह्यभाषाऽन्यथा भवेत्' ॥१२३ ॥** इमानि भगवत्पादवचानानि सर्वैरपि व्याख्याकारैः यथामूलं सामान्यत एव व्याख्यातानि। किन्तु ऐदम्प्राथम्येन निर्णयभावचन्द्रिकाकारेण कास्ता भाषाः, काश्च [1]एकाशीति-विधाः पुराणभाषाः[2], क्वा कया भाषया कथां निर्णिनाय भगवत्पादः, इत्यादिकं तत्र तत्र प्रदर्शितमित्यस्ति महद्वैशिष्ट्यं निर्णयभावचन्द्रिकायाः ।

## स्कान्दवचनं व्यत्यासेन वा गुह्यभाषया वा प्रवृत्तम्

श्रीमद्रामायणे एकोनसप्ततितमे सप्ततितमे चाध्याये देवान्तक-नरान्तकयोः वधः प्रस्तुतः। तत्र वालिपुत्रेण हतः नरान्तकः हनुमता च देवान्तक इतिकथा श्रूयते। परन्तु स्कान्दपुराणे 'सुग्रीवेण हतौ युद्धे देवान्तक-नरान्तकौ' (ब्र.खं.से.मा. ४४-३६) द्वयोर्विरोधस्तु स्पष्टः। अत एवोक्तं भगवत्पादैः रामायणकथानिर्णयभागे (म.भा.ता.नि.८-३७तः ५१)

'युद्धोन्मत्तश्च मत्तश्च देवान्तकनरान्तकौ........ इत्यादिना वालिपुत्रेणैव हतो नरान्तकः देवान्तकस्तु मारुतिना इति। कथमनेन विरोधः परिहृत इति निर्णयभावचन्द्रिकया निरूप्यते - 'सुग्रीवेण हतौ युद्धे देवान्तकनरान्तकौ' इति स्कान्दवचनमपि पुंव्यत्यासेन गुह्यभाषानिबद्धमिति गदितप्रायाभिप्रायम् ।

---

1. निर्णयभावचन्द्रिका - प्रथमाध्यायः, पु.सं. ८६, ८७
2. गुह्यदर्शनभाषे च भाषा चैव समाधिका। तिस्रस्तु मूलभाषाः स्युरेकैका च त्रिधा पुनः। गुह्यदर्शनसञ्ज्ञा च गुह्यगुह्या तथाऽपरा। एवमादिक्रमेणैव त्वेकाशीतिविभेदतः। भाषाः .. इति भागवततात्पर्यनिणये - ११-२१-४०

सुग्रीवप्रेरितेनाङ्गदेन हनुमता च हताविति। 'अथोवाच महातेजाः सुग्रीवो वानराधिपः। कुमारमङ्गदं वीरं शक्रतुल्यपराक्रमम्। गच्छ त्वं राक्षसं वीरो योऽसौ तुरगमास्थितः। क्षोभयन्तं हरिबलं क्षिप्रं प्राणैर्वियोजय' (यु.का. ६९.७१-२ ) इति हि वाल्मीकीये। लोकसिद्धश्चायं व्यवहारः - सैनिके जयिनि राजा जयतीत्याचक्षते। सुन्दरग्रीवेणाङ्गदेन हनुमता चेत्येकयोक्त्योभयनिर्देशश्चायम्'। (नि.भा.च. पुट.सं. २३६)

अत्र श्रीमद्रामायण-स्कान्दपुराणयोः विरोधः एव न ज्ञातः अस्माभिः। कथन्तर्हि तत्परिहारज्ञानं कथं वा भाषादिभेदज्ञानं स्यादस्माकम्। तदत्र निर्णयभावचन्द्रिकाकारैः सर्वं युक्तियुक्तमाविष्कृतम् भाष्यकाराभिप्रेतम्। एवं बहुषु स्थलेषु भगवत्पादैः कुतो वा निर्णयः कृत इति, कथं विरोधः, तत्परिहारश्च दर्शित इतितात्पर्यनिर्णयस्य महत्वं प्रत्येकं श्लोकस्य व्याख्याने आविष्कुर्वन्ति निर्णयभावचन्द्रिकाकाराः। विना भगवत्पादानुग्रहं दुश्शकमीदृशं व्याख्यानम्।

अस्मिन्नेव सन्दर्भे निर्णयभावचन्द्रिकाकारैः एतदपि प्रादर्शि – यत्, 'पुंव्यत्यासेन गुह्यभाषादिना च कथानिरूपणं पुराणेष्विव रामायणेऽपि समानमिति सूचयन्नाह – युद्धोन्मत्तश्च[1]। अयं महोदरापरनामा युद्धोन्मत्तो नीलेन हत इति प्रचलितेनानन्वितेन रामायणपाठेन प्रतीयते। तथा हिप्रचलितं पद्यं – [2]महोदरं शैलेन नीलो जघान मूर्ध्नि इति प्रस्तुत्य - ततः स शैलेन्द्रनिपातभग्नो महोदरस्तेन महाद्धिपेन ॥ विपोथितो भूमितले गतासुः पपात ... (यु.का. ७०-३२) इति। अत्र महाद्धिपेनेति नातीव सङ्गतम्।

---

1. युद्धोन्मत्तश्च मत्तश्च पार्वतीवरदर्पितौ।
   प्रमथन्तौ कपीन् सर्वान् हतौ मारुतिमुष्टिना ॥ म.भा.ता.नि. ८.५४

2. ततस्तु नीलः प्रतिलभ्य संज्ञां शैलं समुत्पाट्य सवृक्षषण्डम्।
   ततः समुत्पत्य भृशोग्रवेगो महोदरं तेन जघान मूर्ध्नि।
   ततः स शैलेन्द्रनिपातभग्नो महोदरस्तेन महाद्धिपेन ॥
विपोथितो भूमितले गतासुः पपात ...

यथाकथं चोपपादनीयम्। तेन ज्ञायतेऽन्यादृशो मूलपाठ आसीदिति। **'महोदरो गन्धवहात्मजेन' 'महोदरो वातगणाधिपेन'** इत्यादिः प्राचीन-पाठः स्यात्। अथ च मत्तो महापार्श्वापरनामा त्वृषभाख्येन पञ्चप्राणेष्वेकेन कपिना हत इति रामायणे[1]। पुंव्यत्यासोऽयम्। अत्रर्षभ इति प्राणर्षभो हनुमानेवोच्यत इति भगवत्पादाशयः। तत्र हेतुं च सूचयति - पार्वतीवरदर्पितौ। कथं पार्वतीवररक्षितं रक्षः अग्न्यंशो नीलो वा मरुद्गणेष्वेक ऋषभो वा हन्यात्? न हि रुद्रादवरः कोऽपि तं हन्तुं प्रभवेदिति भावः। एतेन **'अतिकायो लक्ष्मणेन हतश्च त्रिशिरास्तथा'** (स्का.पु.ब्र.खं.से.मा. ४४.३४) इति स्कान्दवचनश्चोक्तार्थम् – रामानुजेन लक्ष्मणेन अतिकायः, लक्षणवता हनुमता त्रिशिरा इति। अहो चमत्कृतिर्गुह्यभाषायाः।[2]

एवम् एकत्रैव निर्णयभावचन्द्रिकाकारैः आचार्यैः गोविन्दपण्डितैः रामायणे पाठशुद्धिः प्रादर्शि, पुंव्यत्यासश्चाविरकारि गुह्यभाषया च स्कान्द-वचनविरोधपरिहारप्रकारोऽपि प्राकाशि।

महाभारततात्पर्यनिर्णयस्य प्रतिश्लोकमप्यनेकाकूतिगर्भितमिति निर्णय-भावचन्द्रिकाध्ययनेनैव ज्ञातुं शक्यत इति तत्कर्तारः बन्नञ्जे गोविन्दाचार्याः विश्वमान्याः विद्यामान्यमान्याः। विशिष्टा चात्यपूर्वेयं व्याख्याऽस्माभिः प्राप्तेति धन्या वयमिति भावये।

****

1.अथर्षभः समुत्पत्य वानरो रावणानुजम् मत्तानीकमुपागम्य ......... स सम्प्राप्य चिरात्संज्ञामृषभो वानरर्षभः। क्रुद्धो विस्फुरमाणोष्ठो महापार्श्वमुदैक्षत। ...... यु. का.७०.५६ तः ५८

2. नि.भा.च. पुट.सं २३७-२३८

# निर्णयभावचन्द्रिका

डा.श्रीहरिः.रा . वाळ्वेकर्

॥ श्रीमद्-हनुमद्-भीम-मध्वान्तर्गतश्रीलक्ष्मीहयग्रीवः प्रसीदतु ॥

इतः सप्ताष्टभ्यः संवत्सरेभ्यः पूर्वं बहुश्रुत अनतिपरिचितः कश्चन ग्रन्थदानव्याजेन काश्चन ग्रन्थान् मह्यं सम्प्रददे 'न ममे'त्युक्तिपूर्वम्। प्रतिग्रही चाहं दात्र आशीरुद्दीर्य सम्प्रार्थ्य च भगवन्तं सकुतूहलमपश्यंस्तान् ग्रन्थान्। तेष्वन्यतरौ आस्ताम्। यौ भारेण दुरूढौ, बहिःप्राचीनताळपत्रनिभौ। आन्तरत अर्वाचीनपत्रात्मानौ। महाभारतस्य तत्तात्पर्यनिर्णयस्य च निर्णयौ। इमौ च पश्यंपश्यंतयो रक्षाकवचान्त अद्राक्षमदृष्टपूर्वं पूरुषमध्येतॄणाम् अध्यापकानां च स्फूर्तिमन्तं श्वेतकेशं दोर्दण्डधृतपुस्तकाङ्कं तर्जनीमध्यमाहितलेखनीकम् एकान्तमधिवसन्तं शुभ्रकश्चुलिकामन्तं निहितकर्णनासोपचक्षुष्मन्तं सन्तम्। यस्य च नाम आचार्य्यगोविन्द इति स्वयं प्रचकाशयामास। 'इमामाचार्यगोविन्दः प्रमृष्टार्थां व्यरीरचन्'इति 'आचार्यगोविन्दकृते महाभारततात्पर्यनिर्णयस्य' इति च।

## आचार्यकुलाधीशाः विविधदर्शनाब्धिपारङ्गताः

आचार्यकुलाधीशानामेतेषां विविधदर्शनाब्धिपारङ्गततां च तद्रचितग्रन्थावलोकनतः शक्यतेऽद्यपि बोद्धुं तत्वज्ञानिभी रसिकैः निर्मस्तरैः सद्भिः। विषयेऽस्मिन् नैषधीयोक्तिं स्मरामि ;-

**अधीतिबोधाचरणप्रचारणैः**
**दशाश्चतस्रः प्रणयन्नुपाधिभिः।**
**चतुर्दशत्वं कृतवान् कुतः स्वयं**
**न वेद्मि विद्यासु चतुर्दश स्वयम् ॥ इति।**

उक्तिरियं समन्वेति। इत्थम्- अयं=आचार्यगोविन्दः, अधीतिबोधाचरणप्रचारणैः- अधीतिः = अध्ययनं, बोधः=अर्थावबोधः, आचरणं=

कर्माचरणं, प्रचारणं=अध्यापनं तैः,उपाधिभिः=एतैश्चतुष्प्रकारैः, चतस्रः दशाः=चतुरवस्थाः, प्रणयन् = कुर्वन्, चतुर्दशसु विद्यासु चतुर्दशत्वं कुतः कृतवान् = चतुर्दशत्वेन गणितेषु विद्यासु चतुर्दशत्वं केन हेतुना चकार,स्वयं न वेद्मि= नाहं जाने! ॥

कविमूर्धन्यः श्रीहर्षः श्लोकेऽस्मिन् नलस्याद्भुतगुणमवर्णयत् । सिद्धश्चतु-र्दशत्वधर्मः स्वत एव चतुर्दशसु विद्यासु। अस्य च न हेतुर्भवितुमर्हति पिष्टपेषणसमो यःकश्चन । किन्तु चतस्रो दशाः[=अवस्थाः अधीत्याद्युपाधयः] यासां तासां भावः चतुर्दशत्वमिति निरुक्तितो दृष्टो हेतुरिति ।

प्रकृतेऽचार्यगोविन्दोऽपि चतुर्दशसु विद्यासु स्वयं निष्णातः। ता इमा विद्या आचार्यकृतैः अध्ययन-अर्थावबोधन-तदुक्ताचरण-अध्यापनैः चतुर्भिः प्रकारैः चतुर्दशतामापुः । न पुनःचतुरधिका दशेत्यर्थतः ।

यद्यपि क्षत्रियोऽध्यापनात्मनि प्रचारणे नाधिक्रियते । तथापि धनादि-दानतः विप्रद्वाराध्यापयति स्मेति भावेन श्रीहर्षः कविपुङ्गवःनलनृपतिं तुष्टाव इति । अत्र तु विद्वत्तल्लजः पदवाक्यप्रमाणपारावारः विप्रकुलवरः पडुमन्नूरु-नारायणात्मा वै पुत्र नामा सम्बभूव इति । ईदृशोऽयं विप्रवरकुलप्रसूतो नूनं अध्यापनेऽधिक्रियते ।

कास्ता विद्याः-

**पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः ।**
**वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ इति याज्ञवल्क्ये ।**

मनुरब्रवीत्-

**अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः ।**
**धर्मशास्त्रं पुराणं च विद्यास्त्वेताश्चतुर्दश ॥ इति ।**

**निर्णयभावचन्द्रिकाविशेषकिसलयमात्रम् ।**
**अथ चोन्मील्य चक्षूषी भूमिकामधिगच्छाम ॥**

भगवान् व्यासः भगवानाचार्यमध्वश्च नायकौ भुव्यवतीर्णौ। अथ ह वै द्वापरान्ते कृष्णावतारात्प्राक् कृष्णद्वैपायनः, चतुःसहस्रे त्रिशतोत्तरे गते संवत्सराणां तु कलौ आचार्यमध्वोऽवतेरतुः।कलिस्तु खलः खळनायकः कलहप्रेमा स्वाकार्यं यथाकालं विदधाति। कार्यं चेदं तस्य तमोदूणाशम्। येन खलु तत्वज्ञानसूर्यःमेघछन्न इव दुर्दिनमनुभवति अनुभविता अनुभविष्यति च तदातदा। अथ सज्जनमनोनिरूढपदं तत् हलाहलमिव व्यापि। तद्वै ध्वंसमनायि झञ्झानिल इव प्राणनामास्पदाभ्यां व्यासमध्वाभ्यां देवनेतृभ्यां नियतगुरुशिष्याभ्यां यथाकालम्। प्राबोधि चैताभ्यामेव विबुधमनःकुमुदानि ज्ञानपीयूषस्यन्दिभिः स्वकीयवाचोयुक्तिभिः। इति तु पल्लवितमेतद्भूमिकायाः। इयं च भूमिकारमणी विगतत्रस्ता सुबद्धप्रासास्वकीयपादविन्यासतश्च काव्यास्वादनरसिकमनांसि नूनं प्रकर्षति।

किञ्च इतिहाससमधिजिगीषून् समधिगताञ्च समुद्बोधयति सुदृढयति च। अपि च नूनं स्ववचोविक्षेपविक्रमेण बन्नञ्जेआचार्यगोविन्दः बाणं भारविं वा स्मृतिपथङ्गमयति। अनितरसाधरणप्रतिभं बन्नञ्जेमहोमहिमानं सरळहृदयं विरळसंशोधकमिति नैके विद्वन्मूर्धन्या प्रजगुः प्रजगन्ति च सम्प्रत्यपि।

## ‘दशप्रमतिः’ नवोऽर्थः

दशभिर्गुणैःप्रमिता मतिःयस्येति। दश गुणाः – भक्तिर्ज्ञानं सवैराग्यं प्रज्ञा मेधा धृतिःस्थितिः।योगः प्राणः बलं चैव वृकोदर इतिस्मृतः। एतद्दशात्मको वायुस्तस्माद् भीमस्तदात्मकः॥ इति।

## भूगोलविवरणम् –

अण्डमिदं चतुसृष्वपि दिक्षु ऊर्ध्वमधश्च आ केन्द्रबिन्दोः मेरुपर्वतात् पञ्चविंशत्कोटियोजनमिति प्रमाणतः कीर्तयाम्बभूव। हैममयस्य मध्यबिन्दोः मेरुनाम्नः पर्वतस्य परितः सप्तद्वीपाः सप्तसमुद्राश्च सन्ति। तत्र सप्तमः द्वीपः पुष्करः, सप्तमःसमुद्रःस्वादूदः। ततः प्रथम-जम्बूद्वीप-प्रथम- लवणसमुद्रान्त-मानम्।

**7. पुष्करद्वीपस्य स्वादूदस्य च योजनानि**

64,00,000 +64,00,000 = 1,28,00,000

**6. शाकद्वीपस्य क्षीरोदस्य च योजनानि**

32,00,000+32,00,000 = 64,00,000

**5. क्रौञ्चद्वीपस्य दधिमण्डोदस्य च योजनानि**

16,00,000 + 16,00,000 = 32,00,000

**4. कुशद्वीपस्य सार्पिषसमुद्रस्य च योजनानि**

8,00,000+8,00,000 =16,00,000

**3. शाल्मलद्वीपस्य सुरोदस्य च योजनानि**

4,00,000+ 4,00,000 = 8,00,000

**2. प्लक्षद्वीपस्य इक्षुसमुद्रस्य च योजनानि**

2,00,000+2,00,000 = 4,00,000

**1.जम्बूद्वीपस्य लवणोदस्यच योजनानि**

50,000 + 1,00,000= 1,50,000

{आहत्य 2,53,50,000 योजनानि ॥}

+

**स्वादूदाध्यर्द्धपरिमाणं वाज्रलेपिकं हैमं स्थलम् –**

96,00,000 योजनानि ।

**एवञ्च मेरुमध्यादन्तं सहत्य लोकनामकं एतदेव**

3,49,50,000 योजनानि । एतत्सर्वं लोकनाम विदुः ।

**लोकालोकपर्वतप्रदेशस्तु** - 50,50,000 योजनानि। लोकमानात् द्विगुणं 3,49,50,000×2=

**अन्धतमसम्** -6,99,00,000 योजनानि। ततोऽपि द्विगुणं 6,99, 00, 000×2=

**घनोदकम्** - 13,98,00,000 योजनानि।

अ. 3,49,50,000+

आ. 50,50,000+

इ. 6,99,00,000+

ई. 13,98,00,000 = संहत्य 24.97,00,000 योजनानि। तदन्ते भगवतः विष्णोर्धाम वदन्ति।तच्च लक्षत्रययोजनमितम्।+3,00,000। पञ्चविंशत्कोटियोजनानि 250,000,000 मेरुपर्वतात् ब्रह्माण्डस्य मानम्।

**श्रीमान् बन्नञ्जेगोविन्दाचार्यः**

प्राणसूत्रप्रणेता वैयाकरणनवीनसूत्रप्रबन्धा चाचार्यः। वेदस्य च उपनिषदश्च व्याख्याता, साक्षात्परम्परायां वेदप्रवचनाचार्य इति प्रथित-यशास्कः। अनेन च छन्दांसि मीमांसितानि, अलङ्काराणि स्वीयया वाचा अलङ्कृतानि, बन्धाश्च सुष्टुबद्धाः,। अहो यत् सम्पादितं मान्येन धन्येन श्रीशीलेन आचार्यगोविन्दपण्डितराजेन वैदुष्यं निर्णयभावचन्द्रिकातः स्फटिकमणिरिव प्रस्फुरति। नूनं शाङ्करोक्तेर्निदर्शनमेतदिति मे भाति– यथा शुद्धस्य स्फटिकस्य स्वाच्छ्यं शौक्ल्यं च स्वरूपं प्राग्विवेकग्रहणात् रक्तनीलाद्युपाधिभिरविविक्तमिव भवति। प्रमाणजनितविवेकग्रहणात्तु पराचीनः स्फटीकःस्वाच्छेन शौक्ल्येन च स्वेन रूपेणाभिनिष्पद्यत इति ॥

**वीरनारायणार्येण सन्दिष्टो श्रीहरिस्सुधीः।**
**चक्रे प्रबन्धममुना प्रीयतां कमलालयः॥**

****

# निर्णयभावचन्द्रिकायां गोविन्दाचार्यस्य नवोन्मेषाः

**विदुषी. अनूषा राव्**

गोविन्दपण्डिताचार्येन निर्णयभावचन्द्रिकाख्या महाभारततात्पर्य-निर्णयटीका प्राणायि। इतिहासपुराणशास्त्रग्रन्थगातानां प्रमेयाणामपूर्व-शब्दार्थानाञ्च रत्नकोशप्रायः सङ्ग्रहोऽयं ग्रन्थः। तद्भूमिकायां गोविन्दाचार्येण उच्यते- 'समग्रं शास्त्राध्ययनमत्र निष्पिण्डितम्' इति (पु. १०४)। तदध्ययनस्यागाधत्वं सागरस्येव अपरिमेयत्वञ्चाम्बरस्येव अस्मादृशाम् ऊहितुमपि दुश्शकं किं पुनरवगन्तुम्। तथापि ग्रन्थस्यास्याध्ययनेन य आनन्दः अन्वभावि तमस्मिन् प्रबन्धे किञ्चिदिव निवेदयिष्ये।

सत्स्वपि नैकेषु व्याख्यानेषु किंप्रयोजनेयं निर्णयभावचन्द्रिकेत्याशङ्क्य भूमिकायां गोविन्दाचार्येण प्रतिज्ञावाक्यमिदं उत्तरतया प्रस्तूयते।

**विरुद्धवत् प्रतीतानां पुराणवचसामपि।**
**समन्वयसमीक्षात्र कृता मूलानुसारतः ॥**

**पूर्णप्रज्ञप्रयोगेषु दर्शिता विपुलार्थता।**
**पाणिन्यविहितानां च साधुत्वं साधु साधितम् ॥**

**उपसर्गस्याव्ययस्य विशेषणगणस्य च।**
**अर्थचिन्तनमत्रास्ति नाम्नां निर्वचनं तथा ॥** (पु. ३) इति

परस्परं विरुन्धतामिवार्थानां समन्वय आचार्यस्य प्रागल्भ्यं को न वेत्ति। सभायां सभायां तेन प्रपञ्चित एव सुग्रीवमालानिधायिनि संशयः। चन्द्रिकाम् अपठतामपि सुविदितमेवाचार्यस्य विष्णोःसहस्रनाम्नां निर्वचने पाण्डित्यम्। मध्वाचार्याणां प्रयोगाः वैदिकीं भारतीं शिरसा कुर्वन्ति न तु लौकिकीमिति च सप्रमाणं वारं वारं प्रत्यपादि तेन। ग्रन्थेष्वव्ययोपसर्गविशेषणगणानाम् अर्थचिन्तनं प्रवर्तितवानप्याचर्यो संसदि तं विषयं विरलमेवाग्रहीत्। सुर-भारतीनिबद्ध एवायं विषयः शोभत इति सोदाहरणं तमत्र प्रस्तौमि।

महाभारतपुराणयोश्च वाग्भङ्गीं कवयो रसिकाश्च न प्रायो बहुमन्यन्ते। 'चवैतुहि' इत्यादयः वैयर्थ्यशङ्काकारिणः प्रयोगाः पादे पादे दरीदृश्यन्ते। छन्दश्च्युतिप्रतिरोधमात्रफलानीमानि पदानीति केचित्। तात्पर्यनिर्णयोऽपि एवंविधैः मिथ्यादूषणैः चिरादाक्रान्त एव। अप्रबुद्धवादोऽयं आचार्येण समूलमुन्मूलितः। प्रतिवाक्यं प्रतिपदं चार्थविशेषं पुरस्कृत्यैव अव्ययादि निवेशयामासाचार्यमध्व इति गोविन्दाचार्यस्य मतम्। शास्त्रजातं चुलुकीकृतवतां निशितमतीनामेवेमे अर्था गोचरीभवन्तीति चन्द्रिकायां समर्थितम्। अकृतपरिश्रमा अर्थविशेषं न गृह्णन्ति चेन्न तच्छास्त्रकाराणां दूषणं-'नोलूकेन विलोक्यते यदि दिवा सूर्यस्य किं दूषणम्' । अत एव चन्द्रिकायामुच्यते- 'न हि महतां वचनेषु स्वरमात्रस्यापि वैयर्थ्यं वक्तुं साम्प्रतम्' (पु. १०५) इति।

इदानीं सोदाहरणम् प्रस्तूयते। तात्पर्यनिर्णयस्य प्रथमाध्याये प्रमाणैः विष्णुपारम्यमुपपादयन् स्कान्दपुराणीयं वचनमिदमुदाजहाराचार्यमध्वः-

**स्कान्देऽप्युक्तं शिवेनैव षण्मुखायैव सादरम्।**
**शिवशास्त्रेऽपि तद्ग्राह्यं भगवच्छास्त्रयोगि यत्।**
**परमो विष्णुरेवैकः तज्ज्ञानं मोक्षसाधनम्॥**(१.५२-५३) **इति**

'परमो विष्णुरेवैक' इति वाक्य एवकारो विष्णुभिन्नस्य न कस्यचन पारम्यमिति ज्ञापयति। किन्तु 'स्कान्देऽपि' इत्यपिः, शिवेनैव षण्मुखायैव इति द्विरुक्तः एवकारः, सादरं इति क्रियाविशेषणं च वैयर्थ्यगन्धमिव वहति। गोविन्दाचार्यो युक्तिपुरस्सरं समर्थयति। स्कान्देऽपि इत्यत्रापिः कुतः?। 'न केवलं वैष्णवे वाराहे, ब्राह्मे च ब्रह्माण्डे, शैवे च स्कान्दे' इति। पूर्वं वैष्णवब्राह्मपुराणवचनैः विष्णुपारम्यं साधितम्। इदानीमापातप्रतीतितः शिवपराणामपि पुराणानां विष्णुसर्वोत्तमत्वमेव तात्पर्यमिति साध्यते। तद्भवतु नाम। एवकारद्वयं कुतः? तदेवं समाधीयते- 'शिवेनैवेति वक्त्रानुकूल्यं, षण्मुखायैव इति श्रोत्रानुकूल्यं, सादरम् इति प्रसङ्गानुकूल्यम्' (१.५२)।

आप्तत्वेन हि प्रामाण्यं सिद्ध्यति। किं नामाप्तत्वम्? उच्यते ह्यनुव्याख्याने

- ‘वक्तृश्रोतृप्रसक्तीनां यदाप्तिरनुकूलता।’ इति (१.५२)। तत्कुतः स्कान्दपुराणीयेऽस्मिन् वचने श्रद्धध्मः? तदेवं समाधीयते-‘त्रयाणामप्यत्र आनुकूल्यम्। वक्तुः शिवस्य, श्रोतुः स्कन्दस्य, प्रसङ्गस्य च सादरमुक्तस्य।’ अतः श्रद्धातव्यम्। उच्यत आचार्येण ‘जानतैव जनकेनोक्तम्। जिज्ञासवे एव तनयायोक्तम्। ज्ञानं भवेदित्यादरेणैवोक्तम्’ इति। किं तेन? ‘न हि पिता पुत्रं प्रतितारयिषति’। नन्वेतदर्थवादमात्रमिति शङ्कायां– ‘सादरमिति नायमर्थवाद इत्याह’ (१.५२)। एवं पूर्णप्रज्ञप्रयोगेष्वव्ययान्यपि नवीनार्थान् प्रकाशयन्तीति प्रतिपादितम्।

तात्पर्यनिर्णयस्य रामायणकथाव्याख्यानेऽपि सूक्ष्मेक्षिका जरीजृम्भते गोविन्दाचार्यस्य। रावणानुजो विभीषणः रामं शरणं यावद्व्राज तावदाशशङ्किरे वानराः- ‘गृहीतायुधोऽयं रावणादेशतोऽस्मान् हन्ते’ति। हनुमांस्त्वेवं तर्कयाञ्चकार- रामरावणयोर्विक्रमदुराचारावभिसन्धाय शरणम् आयात इति। तात्पर्यनिर्णय आह-

> **‘ब्रह्मात्मजेन रविजेन बलप्रणेत्रा**
> **नीलेन मैन्दविविदाङ्गदतारपूर्वैः।**
> **सर्वैश्च शत्रुसदनादपयात एष**
> **भ्रातास्य न ग्रहणयोग्य इति स्थिरोक्तः ॥’** (८.४)

अत्र धर्मस्यावतारभूतो जाम्बवान् ब्रह्मात्मजः संज्ञितः। वाल्मीकीये रामायणे स विभीषणं निराचकार- ‘बद्धवैराच्च पापाच्च राक्षसेन्द्राद्विभीषणः। अदेशकाले संप्राप्तः सर्वथा शङ्क्यतामयमि’ ति (६.११.३७)। रविजस्तु सूर्यावतारो सुग्रीवः। रामायणे तदुक्तयः सविस्तरं विद्यन्ते। ततश्च बलप्रणेता नीलः यदुक्तयो न क्वापि विद्यन्ते रामायणे। किमाचार्यमध्व एव ता निवेशयामास? अपि चास्य बलप्रणेतेति विशेषणं व्यर्थमिव भाति। गोविन्दाचार्यः विवृणोति। यद्यपि रामायणे नीलस्य वचनं स्पष्टं न पठ्यते तथापि ध्वनिना सूचितम्। सुग्रीववचनानन्तरं रामायण इदं पठ्यते

**‘एवमुक्त्वा तु तं रामं संरब्धो वाहिनीपतिः ।**
**वाक्यज्ञो वाक्यकुशलं ततो मौनमुपागमत् ॥’** (६.११.२१)

गोविन्दाचार्य उपपादयति–श्लोकेऽस्मिन् वाहिनीपतिस्तु सेनापतिर्नील एव सूचितो न तु सुग्रीव इति। (८.४) अत एव आचार्यमध्वोऽप्यत्र बलप्रणेतारं नीलमेव सम्बोधयामास।

इतिहासपुराणेष्वेक एव प्रसङ्गो व्यक्तिभेदेन कालभेदेन वा वर्ण्यते। अथवा पुराणस्यैकस्यार्थोऽन्येन प्रतिषिध्यते। एवं सति तत्त्वं कथं निश्चिनुमः? आपातप्रतीतत्वेन विरुन्धतामिवार्थानां परिहार आचार्यमध्वैः तात्पर्यनिर्णये कृतः। किन्तु इतिहासपुराणेष्वकृतश्रमाणां विरोधानप्यजानतामस्माकं तत्परिहारो दूर एव स्थितः। निर्णयभावचन्द्रिकायां तु विरोधा उद्भाव्य भारततात्पर्यनिर्णयोपदिष्टपथा परिह्रियन्ते।

कर्णार्जुनयोरन्तिमे सङ्ग्रामे देवासुरा अपि पक्षग्रहा बभुविरिति महाभारते श्रूयते। अस्मिन् सन्दर्भे भारते प्रमाद इव प्रतीयते। ‘प्रजापतिस्तु तं दृष्ट्वा देवभागं समागतम्। अब्रवीत्तु ततो राजन् पश्यतो वै स्वयम्भुवः’ (८.६३.४६) इति। प्रजापतिश्चतुर्मुखो ब्रह्मा। स्वयम्भूरपि ब्रह्मा। किमनेन पौनरुक्त्येन? तात्पर्यनिर्णये तु शिवः ब्रह्माणं सम्बोधयति।

**पक्षग्रहास्तत्र सुरासुरास्तयो-**
**रन्ये च जीवा गगनं समास्थिताः ।**
**महान् विवादोऽप्यभवत्तयोः कृते**
**तदा गिरीशोऽवददब्जयोनिम् ॥ इति।** (२७.१६६)

अत्र तु विरोधो नास्ति। शङ्करः चतुर्मुखमवददिति। आचार्यमध्वैर्दोषस्तु परिहृतः। किन्तु भारतकर्तुर्व्यासस्यैष एवाभिप्राय इति कथं निश्चिनुमः? अत्र गोविन्दाचार्यः समादधाति। ‘प्रजापतिरिति लिङ्गात्मा शिव उच्यते’ ( २७.१६६) इति।

कुरुक्षेत्रस्य सङ्ग्रामप्रसङ्गे भीष्मः कौरवसेनाधिपत्यं स्वीचकार। तदा कौरवसेनायां रथिमहारथिसङ्ख्यानमुच्चरन् कर्णं न गणयाञ्चकार। अधिक्षिप्तः कर्णः प्रतिजज्ञे- 'भीष्मे जीवत्यहं न योत्स्य' इति। भारते कर्णप्रतिज्ञैवं वर्ण्यते।

**नाहं जीवति गाङ्गेये योत्स्ये राजन्न संशयः।**
**हते तु भीष्मे योधास्मि सर्वैरेव महारथैः ॥ इति(५.१६५.२७)**

किन्तु तात्पर्यनिर्णये आचार्यमध्वैरेवमनूद्यते।

**कर्ण्णोऽर्द्धरथ इत्युक्त्वा तावद्युद्धात् प्रयापितः।**
**यावत् त्वं योत्स्यसे तावन्न योत्स्यामीति निर्गते ॥ (२५.३४)**

अत्र किञ्चिद्व्यत्यासो दृश्यते। भारते तु कर्णः स्पष्टं 'यावज्जीवति गाङ्गेय' इति भीष्मप्राणधारणपर्यन्तं प्रतिजज्ञे। तात्पर्यनिर्णये तु यावत् त्वं योत्स्यस इति भीष्मस्य युद्धपर्यन्तमेव प्रतिज्ञा। कथमेतत् परिहरणीयम् ? गोविन्दाचार्यः पन्थानं प्रदर्शयति।

'अथच जीवत्येव भीष्मे कर्णो हि युयुधे।' (२५.३४.५) अर्जुनेन शरौघैः पातितोऽपि स्वच्छन्दमृत्युर्भीष्मो जिजीव। कर्णोऽपि युयुधे। द्रोणानन्तरं सेनापत्यं च स्वीचकार। तन्न प्रतिज्ञाभङ्गः। कर्ण एव प्रथममर्जुनेन यमसादनं प्रापितः। तदनन्तरं गाङ्गेयो युधिष्ठिरं प्रति राजधर्मं च बोधयामास। अतो युध्यमाने भीष्मेऽहं न योत्स्य इत्येव कर्णप्रतिज्ञा। भवत्वेतत्। भारतोक्तेः किमाशयः? 'जीवति गाङ्गेय' इति वचनस्य 'युध्यमाने गाङ्गेये' इत्यर्थः कथमनुसन्धातव्यः? निर्णयभावचन्द्रिकायामुच्यते। 'शत्रुभिर्जितः जीवन्नपि न जीवत्येव' (२५.३४.५) इति। एवं पौनःपुन्येन गोविन्दाचार्य आचार्यमध्वस्य मूलानुसारित्वं विरोधपरिहारेषु कौशलं च प्रकटयति।

पाठशुद्धिविषयेऽप्याचार्यो दत्तावधान इति शतधा सिद्धमेव। तत्राप्युदाहरणं दीयते। तात्पर्यनिर्णयस्य सप्तदशेऽध्याये कर्णवध एवं वर्णितः।

**अपराह्णेऽपराह्णस्य सूतजस्येन्द्रसूनुना।**
**छिन्नमञ्जलिकेनाजौ सोत्सेधमपतच्छिरः ॥** (२७.१९०)

अत्र केचित् 'अपराह्णेऽपराह्णस्य सूर्यजस्येन्द्रसूनुना' इति पठन्ति। कोऽत्र शुद्धः पाठः? सूर्यजस्येति वा? सूतजस्येति वा? इन्द्रपुत्रः सूर्यपुत्रं हन्तीति संगच्छत इव। किन्तु आचार्यो महाभारतमुदाहृत्य सूतपुत्रस्येति पाठं समर्थयति- 'अपराह्णेऽपराह्णस्य सूतपुत्रस्य मारिष। छिन्नमञ्जलिकेनाजौ सोत्सेधमपतच्छिरः ॥ (८.६७.३३)' अतः ग्रन्थग्रथने मध्वाचार्याः महाभारतमनुसस्रुः। तदास्ताम्। सूतजस्येत्येव पाठो युक्तः। अन्यः संशय उद्भाव्यते। महाभारते वा भवतु तात्पर्यनिर्णये वा। 'सूतपुत्रस्य' इति पाठः किम्प्रयोजनः? चन्द्रिकायामेवमुच्यते 'न हि सूर्यांशस्येवास्य वर्तनमास। असुरावेशात् केवलं दुर्योधनस्य स्तुतिपाठक इव जिजीवेति'। (२७.१९०) अतः सूर्यपुत्रेति न कर्णो निर्दिष्टः। तदपि भवतु नाम। प्रकृते सूतजेति संज्ञा किंप्रयोजना? अत आह। 'सूतोऽपि हि स्तुतिपाठकेषु गण्यते– सूतमागधवन्दिनः' इति (२७.१९०)। सर्वमपि ग्रन्थजातं परिशीलितवान् आचार्यः बहून् नवनवोन्मेषशालिनोऽर्थान् आविश्चकार।

गोविन्दाचार्यस्य व्याख्यानं पठन्त्या 'विशेषतः सर्वविदां समाजे विभूषणं मौनमपण्डितानामि'ति न्यायमविस्मरन्त्या तूष्णीं भाव्यं मया। तथापि आचार्यवचोभिरेव धैर्यमवलम्ब्य यथामति विषयोऽनूदितः। भूमिकायां आचार्याः ऊचुः- 'नन्वपारे अन्तरिक्षे ताक्ष्र्योऽपि डयते। अणुश्चाटकैरोऽपि डयते। चाटकैरः पुनरन्तःसदनं प्रविश्य गोपानसीविटङ्के वसति। अणुतरैः पादैरुत्प्लुत्योत्प्लुत्य सर्वमुदवसितं परिचित्य परिचरति यत्र न गरुत्मतोऽपि सञ्चारः।' इति (पु. १०४)। यत्सत्यं आचार्यवचसां गतिर्न चाटकैरसदृशी। न चापि गरुत्मत्सदृशी। सलीलमणिमानं गरिमाणं वा भजतः सुरसावदन-विगाहिनः समुद्रसमुल्लङ्घिनः भगवतो हनूमतः गतिरिव गोविन्दाचार्यस्य गतिः। चाटकैरसदृशो मे यत्नः विद्वद्भिरनुमन्तव्य इति याचमाना विरमामि।

# दूषणत्रयम्

**अवधानी डा. वेङ्कटेश कुलकर्णी**

उत्सादिव जलधाराः विद्वद्वरेण्यस्य बन्नञ्जे गोविन्दाचर्यस्य बुध्देः नूतनाः विचारधाराः निस्सरन्ति। यासां नावसितिरस्ति नोपक्रमोऽस्ति, नान्तरायोऽस्ति। तदनुरोधेनैव च अर्थगभीराः रसमेदुराः परममहोदधिगामिन्यो वाक्सरितः स्यन्दन्ति। तासु च कश्चित् महानद्य इव वपुषा विषयैश्च महत्य उपनिषच्चन्द्रिकाद्याः। काश्चित् क्षुद्रापगा इव गात्रेणाल्पा अपि विषयेण गाम्भीर्येण च महत्य एव। तासु अन्यतमेयम् दूषणत्रयविवृतिः।

गोविन्दाचार्यस्य जीविताववधेरुपान्ते एकाशीतितमे वयसि सम्पादितोयम् ग्रन्थः जराग्रस्तशरीरस्यापि बुध्देरजराग्रस्तततामावेदयति। श्रीमदानन्दतीर्थ-भगवत्पादाचार्याणां बदरिकाश्रमप्रवेशादूर्ध्वं सप्तशतमानोत्सवशुभावसरे प्राकाश्यं नीतोयं ग्रन्थः इति मान्यतास्य ग्रन्थस्य धन्यता च ग्रन्थकर्तुः।

'दूषणत्रयम्' इति त्रैलोक्यगुरोः श्रीमध्वाचार्यस्य 'खण्डनत्रयम्' इति लोकप्रसिद्धस्य ग्रन्थत्रयस्य नामान्तरम्। ग्रन्थोऽयम् आद्यटीकया श्रीपद्मनाभतीर्थीयया अद्यतनीयया गोविन्दीयया च संवलिता विराजते।

## नामविमर्शः

आचार्यस्य विमर्शः नाम्ना एव सर्वत्र आरभ्यते। अत्रापि मायावाद-खण्डनम्, प्रपञ्चमिथ्यात्वानुमानखण्डनम्, उपाधिखण्डनम् इत्यभिधाभिः खण्डनत्रयमिति लोकप्रथितिरस्ति। इयमप्यभिधा

> **'प्रश्नः पृष्टः खण्ड्यते तेन नूनं**
> **युक्तां युक्तिं वक्ति चासावखण्ड्याम्'**

इति पण्डिताचार्यवाण्याधारा भवितुमर्हतीति सम्प्रतिपत्तिमपि प्रसिध्द-नाम्नोऽभिधाय प्राचीनहृषीकेशतीर्थीयपाठे विद्यमानं 'मायावाददूषणम्' इति नामावलम्ब्य 'दूषणत्रयम्' इति शीर्षिकाद्दतेति अवतरणिकायां जगाद।

**'पाठशुध्दिः'**

शुध्दपाठन्यस्तदृष्टिराचार्यो लघुग्रन्थेऽप्यस्मिन् साधु पाठं चिन्तयामास। यथा मायावाददूषणे 'द्वाविमौ..' इत्यादि पञ्चश्लोकोल्लेखानन्तरं पद्मनाभतीर्थीयटीकायां

**इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।**
**मनसस्तु परा बुध्दिर्बुध्देरात्मा महान् परः ॥**

**महतः परमयक्तमव्यक्तात् पुरुषः परः।**
**पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥'**

**'भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति'**

इति काठकोपनिषदः मन्त्रद्वयं ब्रह्मसूत्रञ्चैकं व्याख्यातं दरीदृश्यते। किन्तु हृषीकेशीयपाठे नानयोरुल्लेखोऽस्ति। कथमिदं भवितुमर्हति? उभावपि त्रैलोक्यगुरोन्तेवासिनौ। साक्षादेव गुरुमध्वमुखकमलादेव ग्रन्थानां श्रोतारौ, प्राज्ञौ च। तत्कथमत्र प्रक्षेपो विक्षेपो वा इति भवत्येव संशीतिः। तत्रैव समीहितं श्रीमता। पूर्वमुपदेशकाले इदं वचनद्वयमयोजयित्वैव कथितम्। ततः कालान्तरे पुनरुपदेशे स्फुटतायै वचनद्वयं स्वयमेव योजयित्वाऽभ्यधायि। अतः पाठद्वयमपि प्रामाणिकं, ग्राह्यञ्च।

**काव्यकौशलम्**

यल्लिखति गोविन्दाचार्यः सर्वं तत् रमणीयं काव्यमेव भवति। तस्य सर्वास्वपि भाषासु तादृशी एव गतिः, तादृश एव चमत्कारः। अत्र गद्यरूपस्य मायावाददूषणस्य टीकां पद्यैः, पद्यरूपस्य उपाधिखण्डनस्य गद्यरूपं व्याख्यानं गद्यरूपस्य प्रपञ्चमिथ्यात्वानुमानखण्डस्य च गद्यपद्यरूपां व्याख्यां लिलेख। समग्रं मायावाददूषणं पद्यपञ्चकेन प्रपञ्चयामास। 'तत्रैकं पद्यमस्ति'

**सिद्धं तत्वमथो विशेषरहितं कञ्चावृणोत्वज्ञता**
**यच्चाज्ञातचराभिधेयगमकं तद्धि प्रमाणं तव।**

**अज्ञानानुपत्तितस्तव मतं सर्वं निरस्तं स्वतो**
**मिथ्या चेदिदमैक्यमागमगणो मिथ्यार्थवादी भवेत् ।**

अत्र आद्यपादेन 'सिद्धत्वात् स्वरूपस्य विशेषभावाच्च नाज्ञानं कस्यचिदावरकं' इति वचनं व्याचख्यौ। द्वितीयपादेन 'अनधिगतार्थगन्तृ प्रमाणमिति तन्मतम्' इति वचनं विवार। तृतीयेन पादेन 'अज्ञानासम्भवादेव तन्मतमखिलमपाकृतम्' इति वाक्यं व्याख्यात्। तुरीयेण च पादेन 'मिथ्यात्वे चैक्यस्यातत्वावेदकत्वमागमस्य स्यात्' इत्याचार्यवचः व्याचष्ट। एवमेकैकेनैव पादेन श्रीमदाचार्यवचनानामाशयः साधु सङ्गृहीतो दरीदृश्यते।

**विमर्शः**

उपाधिदूषणे दृश्यमानानां-

**सुखदुःखादिभोगश्च स्वरूपैक्ये न भेदतः ।**
**दृश्यो ह्युपाधिभेदेऽपि हस्तपादिगो यथा ॥**

**नानादेहगभोगानुसन्धानं योगिनो यथा ।**
**न चेद् भोगानुसन्धानं तदिच्छा योगिनः कुतः ॥**

**अनुसन्धानरहितदेहबाहुल्यमन्यथा ।**
**सिद्धमेव हि तत्पक्षे विशेषो योगिनः कुतः ॥**

पद्यानामेषां बहुविस्तृतं विवरणमस्ति। अत्र श्रीमदाचार्यैः आत्मैक्यवादे यथा योगी नानादेहगभोगानुसन्धानवान् तथा सर्वेऽपि सर्वदेहगभोगानु-सन्धानवन्तः स्युरिति आपाद्यते। तत्र या सौभरेः कथा सा रमणीयतया गोविन्दाचार्येण विवृता। ततस्तेषामयं विमर्शो भवति। भवतु सौभरिः पञ्चाशद्देहवान्। तथापि तस्य तावद्देहगभोगानुसन्धानमस्ति इत्यत्र किं नियामकम्? सर्वमप्येक एवानुबभूव इति कुतोऽङ्गीकार्यम्? तस्येदं समाधानम्। यदि नास्ति भोगः, कुतो वा तावच्छरीरजिघृक्षा ?

**प्र-** कुतो न भवेत् ?

**स-** न विनोदेन पञ्चाशच्छरीरोपादानम्, अपि तु पञ्चाशज्जन्म प्रारब्धक्षयो भूयादित्येव। प्रारब्धक्षयश्च न शरीरस्वीकारमात्रेण। नापि भोगाशया शरीरोपादानम्। न ह्याशा कदाऽप्यन्तमेति। अतः अनुभूत्या कर्मक्षयो भूयादित्येव ग्रहणम्। तच्च तदैव भवति यदि सर्वशरीरावच्छेदेन एकस्यानुभूतिर्भवति।

**प्र-** कथं वा एकस्य पञ्चाशच्छरीरवचनादेन भोगः ?

**स-** न भवत्यन्येषामयोगिनाम्।चित्तवृत्तिनिरोधरूपयोगाभ्यासवतश्च अन्यासाध्यमपिसाध्यंभवति।वार्धकेऽपिमानिनीमनोमोहनरूपग्रहणसमर्थस्य पञ्चाशच्छरीरोपादानं, तदवच्छेदेनानुसन्धानं सर्वमुपपद्यते। योगो ह्यत्र भक्तियोगः। 'किमलभ्यं भगवति प्रसन्ने श्रीनिकेतन' इत्याह भगवान् बादरायणः।

एवमाक्षेपपरम्परायाः समाधानं विदधति आचार्यवचनानि हृदयस्पर्शीणि विलसन्ति।

## अपूर्वचिन्तनम्

मिथ्यात्वानुमानदूषणमेवारभ्यते 'विमतम् मिथ्या दृश्यत्वात्। यदित्थं तत्तथा यथा शुक्तिरजतम्' इति।

कथं वा मङ्गलं विना ग्रन्थस्यास्योपक्रमः इति भवति जिज्ञासा। तत्र द्वेधा समाहितं गोविन्दाचार्येण। दूषणत्रयमेको ग्रन्थः। 'नरसिंहोऽखिलाज्ञान...' इति पद्यमेव दूषणत्रयात्मकस्य समग्रस्य ग्रन्थस्य मङ्गलम्। अतो न पृथङ्मङ्गलापेक्षा। साक्षादेव मिथ्यात्वसाधकं परानुमानमनूद्य निरस्यति इत्येकं समाधानम्। अपरञ्च श्रीमदाचार्यैः प्रोक्तं 'विमतं मिथ्या दृश्यत्वात्। यदित्थं तत्तथा यथा शुक्तिरजतम्' इति वचनमेव मङ्गलमपि परोक्तानुमाना-नुवादोऽपि। गुह्यभाषारूपेणास्य भगवद्वाचित्वात् मङ्गलत्वमस्ति।

तथा हि- विमतमित्याद्यं पदम्। मतं - ज्ञातम्। वि- विलक्षणतया,

विशेषतश्च। तथा च जगद्भिन्नत्वेन ज्ञातत्वात् ब्रह्म विमतम्। सर्वोत्तमत्वेन विष्णुत्वेन च ज्ञातत्वात् ब्रह्म विमतम्। तत् मिथ्या। मिथुनीभूय ईयते इति मिथ्या। रमया युक्तत्वेनैव ज्ञानिभिः गम्यते इति मिथ्या। सदा मम वाक्यप्रयोक्तुः मध्वाचार्यस्य दृश्यत्वात् विशेषतो मतम्। अनेनैव क्रमेण समेषां पदानां भगवद्वाचित्वं प्रदर्शितम्। यस्य उपनिषद्भाष्याणि ऋग्भाष्यमपि च वचोविधेयं न तस्य एवं व्याख्यानं क्लेशसाध्यम्।

ग्रन्थस्यास्य गोविन्दाचार्याणां मङ्गलपद्यमपि वैशिष्ट्यपूर्णम्। तच्चैवमस्ति-

**विमतं विमतं वन्दे विमतं विमतं हरिम्।**
**विगतं विगतं दोषैरगतं सुगतं बुधैः ॥**

पद्यनिबन्धनचतुरेण चतुर्गुणं विमतपदं न्यधायि। कविहार्दं 'विमतं मिथ्या..' इति वाक्यव्याख्यानावलोकनेनैव विज्ञायते।

एवं गोविन्दाचार्यकृतिषु प्रतिपदमपूर्वता, मनोज्ञता, पाठशुध्दिर्नैर्भर्यं, काव्यकौशलं, भाषाप्रभुत्वमित्येवं शतशोगुणाः बुभुत्सून् नन्दयन्ति।

यस्य लेखानामध्ययनेन, प्रवचनानां श्रवणेन च बोद्धॄणामधिगतौ नूतना दृष्टिः भाषाप्रभुत्वं, मध्वगुरौ महादर इत्येवं गुणा विलसन्ति। किं पुनर्वक्तव्यं तस्य स्फूर्तिनिदानस्य गोविन्दाचार्यस्येति ॥

****

# न्यासपद्धतेः व्याख्या पद्धतिचन्द्रिका

डा. षण्मुख हेब्बार्

महदिदं सुकृतफलं यत् प्राणनारायणयोरपारानुग्रहभाजां बन्नञ्जे गोविन्दाचार्याणां समकालीना वयं भवामः तमपश्याम तद्वचांस्यशृणुम तद्ग्रन्थांश्चावलोकयाम इति। श्रीमदाचार्याणां समस्तग्रन्थानां संशोधकानां, अनुपलब्धाचार्यकृतीनां सम्पादकानां गरिमा कथंकारं परिमितपदगम्यो भवति। विशेषतः पण्डिताचार्यान्वयविरचितानां तदितरेषां च अप्रकटितानां ग्रन्थानां प्राकाश्यं नयतां श्रीमतां बन्नञ्जे गोविन्दाचार्याणां नैकभाषोद्भवासु कृतिप्रसूनेषु अन्यतमा श्रीमदाचार्यविरचितायाः न्यासपद्धतेः सम्पादनं व्याख्यानं च। न्यासपद्धतिः श्रीमदाचार्याणां लघ्वीषुकृतिषु अन्यतमा। गोविन्दाचार्यकृता व्याख्यापि नात्यलघ्वी। तथापि व्याख्याने व्याख्यायाः अनेकानि विशिष्टानि रूपाणि तत्र तत्र प्रकाश्य निलीयन्ते। व्याख्याविशेषाः अधोनिर्दिष्टरूपेण पठितॄणां मनोभित्तौ चकासति।

न्यासपद्धतिरित्ययं ग्रन्थः अस्तीत्येव व्यस्मरल्लोकः। मध्वग्रन्थानां सप्तत्रिंशत्त्वमेव आम्रेड्यते स्म। तदात्वे अस्यैव आचार्यस्य दृष्टेः पथमापतितः श्रीमदानन्दतीर्थप्रणीतः न्यासपद्धत्याख्यः ग्रन्थः। समुद्भूताः विप्रतिपत्तयः- ‘ननु व्यासतीर्थप्रणीतेन ग्रन्थमालिकास्तोत्रेण ग्रन्थानां सप्तत्रिंशत्त्वे सिद्धे न्यासपद्धतेः मध्वकृतित्वम् असम्भावनाग्रस्तत्वेन निरस्तम् रसानामष्टत्वमिव’ इत्याद्याः। अत एव आचार्यैः तत्र सुरोत्तमतीर्थवचनं प्रमाणीकृतम्- भगवत्पादकृतप्रणवकल्पन्यासपद्धत्यादौ कार्त्स्न्येन .. इत्यादिवचनम्। विप्रतिपत्तयश्च स्वयमेवोपशान्ताः समूलाः। श्रीमताम् आचार्याणाम् अयं विशेषः- नानिर्णायकापेतं निर्णयन्ति, नानिर्णायकं निर्णयायोपयन्ति। किन्तु निर्णायकेनैव निर्णयन्ति। सर्वत्राप्ययं गुणः संदृश्यते।

यद्यपि ग्रन्थस्यास्य पुरोवाच्येव ग्रन्थस्य महिमोपवर्णने शब्दतः लघुरपि अर्थतः महानयं ग्रन्थः इत्युदघोषि तत्रभवता व्याख्यात्रा। ननु अल्पमेव

दृश्यते व्याख्यानेऽपि इति न मन्तव्यम्। तत्रैवोक्तं विष्णुतीर्थीयम् अस्य विस्तृतं व्याख्यानरूपम् इति। अथापि क्वचिदस्य बह्वर्थत्वं अत्रापि प्राकाशि- तद्यथा 'धृत्वोर्ध्वपुण्ड्रं विधिना' इत्यत्र द्वादशपुण्ड्रस्थानानि कानि मन्त्राश्च के तत्र आदावन्तेच वासुदेवमन्त्रेण सम्पुटीकरणस्य औचित्यं, तिर्यक्त्वं निषिद्ध्य ऊर्ध्वपूण्ड्रस्यैव धारणे यौगिकं च महत्वं प्रकटीकृतम्। ऊर्ध्वपुण्ड्रविधानं वैष्णवत्वाधायकस्य मुद्राधारणस्यापि उपलक्षणार्थम् इति कथनेन ग्रन्थस्य बह्वर्थत्वमपि सूचितम्। अस्मिन्नेव श्लोके आसनं प्रकल्प्य इत्यस्यापि व्याख्यानावसरे द्विविधासनं लेशतः निरुच्य, अष्टमन्त्राणां विषयेऽपि विस्तारेण व्याख्यातम्।

मङ्गलाचरणे नरनारायणस्य वन्दनमाचरितम्। अपूर्वमिदं नमनम्। किमस्य स्यादौचित्यम्..? उच्यते आचार्येण 'इदमिह तर्क्यते- नरनारायणाश्रमे नारायणेन समाज्ञप्तः पुनरपि बदरीं गत्वा तत्रेमं ग्रन्थं प्रायः प्रणिनाय अतो नाराय्रणं ग्रन्थादौ सस्मारेति। न्यासधर्मान् सल्लोके शिक्षयितुमेव धर्मतनयत्वेन नाराय्रणस्य अवतरणात् तत्स्तुतिः अत्रादौ समुचिता एव इति च। ब्रह्मादिनराणां नारायाश्च अयमयनमिति नरनारायणमिति सामान्येन व्याहरणमित्यपि। अथवा नराणां नारं निर्दुष्टं ज्ञानमाययतीति बादरायणोऽपि नरनारायणः। प्रसङ्गानुगुण्येन पदानां औचित्यपूर्णतया व्याख्यानं बन्नञ्जे गोविन्दाचार्याणामेव अपूर्वं कौशलम्। अत्रैवानेकानि उदाहरणानि समुपलभ्यन्ते। स्थालीपुलाकन्यायः आश्रीयतेऽधुना। एतादृशं निर्वचनसामर्थ्यं मध्वाचार्याणां ग्रन्थानां व्याख्यानावसरे नितरामपेक्ष्यते।

यद्यपि यत्याश्रमे विषये श्रीमदाचार्यैः अन्योऽपि ग्रन्थः निर्मितः ओन्तत्सत्प्रणवकल्पाख्यः। न्यासपद्धतेरपि यत्याश्रमविषयत्वात् कुतोऽयं ग्रन्थभेदः इत्यस्य परिहारः अत्र प्रकटितः- ओन्तत्सत्प्रणवकल्पस्य सन्न्यास-विधिः विषयः, अस्यास्तु न्यासिनामाचारनिरूपणमिति। इत्थं ग्रन्थभेदे औचित्यं प्रदर्शितम्।

अरुणोदयवेलायाम् उत्थितः इति अत्रोच्यते। चतस्रो घटिकाः

प्रातररुणोदय उच्यते । यतीनां स्नानकालोऽयम्.... । इति अरुणोदयकालस्य स्नानकालत्वं उक्तम् । अत्र तु निद्रायाः उत्थानकालत्वमुच्यते । तत्कथम् पूर्वापरीभाववतोः समानकालत्वमिति प्रश्नः समुदेति परं व्याख्यानमत्र मौनमावहति इव । यद्यपि अरुणोदयवेलायाम्इत्यस्य विवरणे एव परिहारोऽपि निहितः । तत्र 'यदा अरुण उदेति तस्मिन् काले' 'वेला काले च सीमायाम्' इति च व्याख्यानम् । तदा इति वक्तव्ये तस्मिन् इति कथनं सामीपिकार्थं विवक्षित्वैव । उक्तार्थे कोशस्य प्रमाणीकरणं च अनया एव विवक्षया । वेला शब्दस्य तत्कालार्थत्वेवेलाकालेच इत्येवावक्ष्यत्, सीमार्थस्यैव विवक्षणात् सीमायाम् इत्यप्युक्तम् । अतः मूले अरुणोदयवेलायाम् इत्यस्य अरुणोदयसमीपकाले उत्थाय इत्यर्थः इति समस्या परिहृता भवति । इत्थमपि आचार्याणां कृतिषु गूढाभिसन्धिः सम्भाव्यते ।

स्नानं कुर्याद् यथोक्तेन विधिना इति मूलम् । पूर्वं स्नानविधानस्य अनुक्तत्वात् अनभिहितस्य आचरणं कथं सम्भवति इति प्रश्नस्य व्याख्याने इदमुत्तरम्- सदाचारस्मृतावुक्तेन विधानेन इत्यर्थः । प्रश्नः परिहृतः । - लाभे अलाभे च निर्विकारतया भिक्षार्थं अटनं भिक्षाटनम्, चरेद्भिक्षाटनं यतिःइति न्यासपद्धतौ । ननु त्यक्तसर्वसङ्गस्य भिक्षाव्याजेन स्नेहप्रवृत्त्यादेः पुनरारम्भः इति चेत् न । किन्नाम भिक्षाटनम् ?... उक्तं व्याख्यायाम् - 'लाभेऽलाभे च निर्विकारतया भिक्षार्थं अटनम् भिक्षाटनम्' इति । कुतोऽयमर्थलाभ इति चेद्धातुपाठादेव । तथाहि भिक्षयाच्ञायामलाभे लाभे च इति ।

इतोऽपि केचनांशाः- ऊर्ध्वपुण्ड्रं धृत्वा आसनं प्रकल्प्य अष्टमन्त्रान् जपेत् इत्युक्तम् । परं किमासनम् ? वीरं? स्वस्तिकं? पद्मं.. वा ? उच्यते आचार्येण यद्यस्य सुखं तत्तस्यासनम् । स्थिरसुखत्वमेव चासनकल्पने प्रकर्षः इति ।अतः न वीरादिनियमः । एतदेव च ब्रह्मसूत्रभाष्येऽपि श्रीमदाचार्येण विचारितम् ।

त्रिपञ्चसप्तसद्मानि गच्छेन्नातोऽधिकं पुनः इति विधिः । अस्य अध्यात्मिकं मुखं प्रादर्शि व्याख्यात्रा- प्रणवप्रतिपाद्यः प्रीयतामिति त्रीणि सद्मानि ।

पञ्चात्मा प्रीयतामिति पञ्चसद्मानि, सप्तविद्यावेद्यः प्रीयतामिति सप्त सद्मानि। यदि वा द्विचतुर्षु सद्मसु पर्याप्तता तदा न त्रित्वादिपूरणार्थं पुनर्गच्छेत्। अयं चव्याख्यानविशेषः। तथात्वेपि भगवद्रूपविशेषानुसन्धानं व्याख्याने निरूपितम्।

इदं च व्याख्यानं न केवलं विदुषां अपि तु छात्राणां संस्कृताभ्यासिनामपि यथा हितकरं भवेत् तथा अन्वयानुगुणं प्रतीकग्रहणयुक्तमस्ति। अत एव मूलस्यार्थान्वेषणं न कष्टाय भवति।

इत्थम् अनेकैः विद्वद्रमणीयैः अंशैरुपेतं इदम् आचार्याणाम् व्याख्यानं नान्यैः स्वकीयैर्व्याख्यानैर्विभिद्यते। तथापि अवशिष्टा अपि सन्ति विषयाः। 'दण्डोदकं जपस्यान्ते दद्याद्विधिविधानतः'। कोऽयं विधिः..? शास्त्राणाम् अवलोकः अपेक्षितः अस्ति। भिक्षासम्पादनावसरे 'प्रायः तदात्वे मुसुरे इतिकल्पना नासीत्दित्युक्तम् व्याख्यात्रा तत्रभवता आचार्येण। साम्प्रतं क्वचिद्व्यत्यासेन मुसुरे इति तु आचर्यत एव इत्यतः प्रामाणिकः विचारयत्नः एतद्दिशि विधेयः अस्ति।

****

## तन्त्रज्ञेन दृष्टः तन्त्रसारसङ्ग्रहः

**विद्वान्. कृष्ण नूरित्तायः**

तन्त्रसारसङ्ग्रहः आचार्यमध्वस्य सर्वमूलेषु अन्यतमा श्रेष्ठतमा कृतिः। तन्त्रशास्त्रप्रपञ्चे च अपूर्वा च। एतस्य ग्रन्थस्य विषये नारायणपण्डिताचार्या मध्वचरितं दृष्ट्वा ग्रन्थवैशिष्ट्यमपि अनुभूय मध्वविजयाख्यग्रन्थे इत्थम् अभ्यधुः-

**कस्तन्त्रसारं सम्प्राप्य न स्यात्पर्याप्तवाञ्छितः।**
**अमरैराश्रितच्छायं कल्पद्रुममिवोत्तमम् ॥**

तन्त्रग्रन्थास्तु बहवः। परन्तु तन्त्रार्थः कः? तत्र कति भेदाः?

**तनोति विफुलानर्थान् तत्तमन्त्रसमन्वितान्।**
**त्राणं च कुरुते यस्मात् तन्त्रामित्यभिधीयते ॥**

इति तत्वज्ञानं मन्त्रज्ञानं च दत्वा यस्त्रायते सः तन्त्रः।

**सर्वेऽर्थाः येन तन्यन्ते त्रायन्ते च भयाज्जनाः।**
**इति तन्त्रस्य तन्त्रत्वं तन्त्रज्ञाः परिचक्षते ॥**

इत्यपि तदर्थे अन्यत्रोक्तं मननीयम् ॥

एतादृशस्य तन्त्रस्य भेदास्तु शैव-गाणपत्य-वैष्णवेत्यादयः बहवः वर्तन्ते। तत्र वैष्णवतन्त्रमूलस्तु पाञ्चरात्रमेव।

**पाञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ॥**

इति भगवदुक्तवाक्यान्येव तत्र वर्तन्ते। रात्रिर्नाम - शब्दस्पर्शरूपरस-गन्धनामकपञ्चभूतगुणाः। तदसारतां प्रतिपाद्य अज्ञानं दूरीकृत्य तद्व्यतिरिक्त निरञ्जनं यस्तन्त्रः दर्शयति सः पञ्चरात्रतन्त्रः। अन्यग्रन्थास्तु तद्भिन्नं लौकिकार्थं सम्पादयन्ति। न तु भगवद्ज्ञानम्।

तन्त्रस्यागमः इत्यादि वर्तते नाम। 'तन्त्रं वै वेदसम्मितं' इति वेदतुल्यबुध्या गौरवेण तथोक्तम्। आगमो नाम-

**आगतं शिववक्त्रेभ्यो गतश्च गिरिजानने ।**
**गतं श्री वासुदेवस्य तस्मादाग उच्यते ।**

रुद्रयामलादितन्त्रेषु अवोचन् । नग्नदेवताराधन-शवाराधनादिकं स्मशानसाधनादिकमपि । परन्तु तद्व्यतिरिक्तं पाञ्चरात्रं सात्विकं, भगवज्ज्ञान-साधनाप्रकारं सत्वमार्गेण वदति । न तु मुक्तिमार्गम् ।

एतादृशानाम् अनेकेषां तन्त्रग्रन्थानामध्ययनं दुष्करमिति मत्वा श्रीशङ्कराचार्याः प्रपञ्चसारसङ्ग्रह इत्येकां कृतिं सर्वतन्त्राणि समीकृत्य आरचयन् । परन्तु तत्र शाक्तछाया बहु दरीदृश्यते । अतः सम्पूर्णसात्विकतन्त्रः न । अपि च ते पाञ्चरात्रागमविरोधिनः । परम्परया वैष्णवविरोधः तत्र वर्तते । अतः आचार्यमध्वः श्रीविष्णूदिततन्त्रसारग्रन्थस्य सारं सङ्गृह्य 'तन्त्रसारसङ्ग्रहः' इत्येकं ग्रन्थं अददात् । अयं ग्रन्थः अध्यायचतुष्केण ४४० श्लोकैश्च व्याप्तः बहु सङ्क्षिप्तः परन्तु अर्थदृष्ट्या विश्वतोमुखः ।

एतादृशग्रन्थः 'आह देवो रमोत्सङ्गविलसत्पादपल्लवः' इति प्रथमाध्याये, 'अथ विष्णूदिते तन्त्रसारे मन्त्रगणो हि यः' इति चतुर्थाऽध्याये च साक्षाद् भगवदुक्तत्वेन दृश्यते । अयं च ग्रन्थः पाञ्चरात्रसम्वादी । प्रथमाध्यायं मन्त्रपूजादिविषयः हितीये होमविषयः तृतीये च शिल्पदेवालयनिर्माणवास्तु-प्रतिष्ठादिकं, चतुर्थे तु फलप्रदमन्त्रोद्धाटनम् अवोचन् । योगसाधनमपि । आचार्यैरवोक्तं- 'अस्य सञ्क्षेपशास्त्रत्वात् न विस्तरविरोधिता इति । अल्पाक्षरोऽपि अर्थतः विस्तृतोऽयं ग्रन्थः न सुलभाध्ययनसाध्यः व्याख्यानेन विना ।

एतादृशस्य ग्रन्थस्य संस्कृते तन्त्रसारविवृतिः, छलारि, तत्वकणिकाख्यः लघुटिप्पणिश्च एतादृशव्याख्यानचतुष्टयं वर्तते ।

कर्नाटकभाषायां तावत् अपूर्वव्याख्यानं बन्नञ्जे गोविन्दपण्डिताचार्येण इदं प्रथमतया १९५८ तमे वर्षे संक्षिप्य प्राकारि । तेषां २०तमे वयसि । ततः पुनः १९९६ तमे वर्षे पुनर्मुद्रापितम् । सर्वमूलग्रन्थप्रकटनसन्दर्भे हृषीकेश-तीर्थश्रीपादानां मूलपाठः सम्पादितः च तैः ।

परन्तु तस्य पुस्तकस्य अलाभे बहुजनापेक्षया विस्तृतव्याख्यानसंहितं देवतामूर्तिचित्रेण सह होमोपयुक्ताचार्यमध्वोक्तमण्डसहितं, यन्त्रविन्यासं , चक्राब्द-भद्रकमण्डलविशेषविवरणेन सहितं विजयदासवर्योक्त कङ्कणाकार-सुळादि-उपासनाविधानमपि परिशिष्टे दत्तवन्तः।

अपि च प्रतिष्ठारम्भोपयुक्ताङ्कुरार्पणं, आन्दतीर्थभगवत्पादैः तन्त्रसारोक्त नाडीचक्रविवरणं, मन्त्राणां ऋषिच्छन्दोदेवातविचारश्च परतन्त्रोक्त आचार्य-मध्वोक्तवैशिष्ट्यसहितं, प्रणवगायत्रीमन्त्रापूर्वन्यासक्रमश्च, मुद्रणं विन्यासादि विशेषतः परिशिष्टे न्यधादि।

इत्थं बन्नञ्जे गोविन्दाचार्याः पौरोहित्योपयुक्तवैष्णवपद्धतिं तन्त्रसार सङ्ग्रहव्याख्याव्याजेन निर्ममिरे। तेषां भाषारीतिरप्यपूर्वा। साहित्यभूयिष्ठा सुन्दरी च। सररा प्रगल्भा च। तन्त्रसारसङ्ग्रहश्लोकव्याख्याने तस्य तस्य श्लोकस्य अपूर्वटिप्पणी विशिष्टा। अन्यान्यतन्त्रग्रन्थावलोकनं विना तादृश-टिप्पणी असाध्या। तेषां अध्ययनव्याप्तिं सा दर्शयत्यस्माकम्। तत्र च अन्यग्रन्थानां दोषोद्घाटनपूर्वकं आचार्यमध्ववैशिष्ट्यं तैः प्रत्यपादि।

**उदाहरणं- नारायणाष्टाक्षरमन्त्रध्यानम्-**

उद्यदभास्वत्......... भूषिताः इति।

तत्र ध्याने समग्रावरणपूजा निरूपिता इति गोविन्दाचार्या अवदन्। कथमिति चेत् - 'स्वमूर्तिगणमध्यगः' इत्यत्र परमपुरुषमारभ्य...... विश्वरूपपर्यन्तं पञ्चमावरणं न्यरूपयन्। ततः 'ब्रह्मवायुशिवाहीशविपैः' इयमनेन षष्ठावरणम् अवदन्। 'शक्रादिकैरपि' इत्यनेन सप्तमदिक्पालावरणं अवोचन् आचार्यमध्वा इति प्रतिपादयन्तः गोविन्दाचार्याः, अस्मान् पौनः-पुन्येन तत्र तत्र एतादृशाचार्यमध्वौक्तवाक्यानां सूक्ष्मविशेषाणां उद्घाटनद्वारा विस्मयं प्रमोदं च अददन्त।

चतुर्थाध्याये तु अन्यतन्त्रोक्तमन्त्राणां आचार्यमध्वोक्तमन्त्राणां च

व्यत्यासं आचार्योक्तमन्त्रमाहात्म्यप्रदर्शनद्वारा विस्मयावहविषयम् अवोचन् ।

इदानीन्तनवर्षेषु आचार्यमध्वानां सर्वमूलग्रन्थसम्पादनम् अध्ययनम् अध्यापनं पुस्तकप्रकटनम् उपन्यासादिकं एतादृशनानाविधसेवां बहुविधां कृतवन्तः। वयं तेषां काले एव जीवनं प्राप्तवन्तः, तेषां दर्शनेनोपान्यासेन संलापेन च वयं पुण्यशालिनः। तेषां ग्रन्थाध्ययनेन केवलं सर्वमूलग्रन्थस्य विशेषतः तन्त्रसारसङ्ग्रहव्याख्यापुरस्सराध्ययनेन समस्ततन्त्रग्रन्थावलोकनं भवेत् इति अहं धैर्येण निःसन्देहं वदामि ।

****

## खण्डार्थनिर्णयव्याख्या खण्डार्थचन्द्रिका

विद्वान्. कृष्णराज कुत्पाडि

**विषयेषु च संसर्गात् शाश्वतस्य च संशयात् ।**
**मनसा चान्यदाकाङ्क्षत् परं न प्रतिपद्यते ॥**

ज्ञानसूर्यः बलाहकान्तरितः। सकलसज्जनहृदयाकाशः अन्धतमसा आच्छादितः। धृतभगवदादेशो वायुरायात्। कालमेघा अपासरन्। हृत्तमः गुरुतेजसाऽपागच्छत्। गुरुकारुण्यतैलभृताः सर्वमूलग्रन्थदीपास्तमोनुद इव ते नः पान्ति। प्राज्वालयदेनान् दीपान् तत्वज्ञानप्रदोऽस्माकं मध्वगुरुः। वेदवेदान्ततन्त्रमन्त्रशिल्पागमपुराणेतिहासादीनि सर्वाणि क्षेत्राण्ययं स्वमातृभिः पस्पर्श। सर्वाणि शास्त्राण्यालोडयामास। शुशोध च। पूर्वप्रवृत्तान् वादान् विममर्श। दोषानेवोद्घाटयामास। गुणान् स्वीचकार। नैजसुखानुभूतिपथं दर्शयामास। युगचक्रेऽस्मिन्नाविर्भूतयोः व्यासवासुदेवयोः हृदयं प्राकटयत्। परशुरामदेवः यच्च क्षेत्रं स्वबाणतेजसा निरमात् तत्रैव जजान। शिवशक्ति-स्कन्दगणपतिसूरादीनां पारम्यवादिनां वैदिकानां मतानि विचार्य। 'कर्णाट-देशीयः आचार्यः' इति सामोदं धरामिमां अस्मत्कालीन इतीमं कालञ्च वन्दामहे नन्दामहे च। भाग्यशालिनो वयम्।

खण्डार्थनिर्णयः आचार्यमध्वप्रणीतासु सर्वमूलकृतिष्वन्यतमः। तत्व-वाददृशा ब्राह्मणारण्यकखण्डानामर्थनिर्णयमत्र चकार। कर्मपराणां श्रुतीनां निर्विवादं ज्ञानपरता विद्यत इत साधितम्।

महानाम्नीमन्त्राणां तथैव याज्यामन्त्राणां वैशिष्ट्यमत्र विववार। ग्रन्थस्यास्य व्याख्यामकार्षीत् बन्नञ्जे श्रीगोविन्दपण्डिताचार्यः। इयं व्याख्या 'खण्डार्थचन्द्रिका' इति नाम्ना प्रथिता।

अयि मागध! किं वृथा प्रशंससि ? कः पण्डिताचार्यः ? लिकुचकुलजो वा ? यतिकुलचक्रवर्तिनः श्रीविश्वेशतीर्थश्रीपादाः विषयेऽस्मिन् प्रमाणम्।

श्रीकृष्णपूजायाः पञ्चमपूजादीक्षावधौ अन्यैः कृष्णोपासकैः सह कृष्णमुख्य-प्राणसन्निधौ इममुपाधिं ददुः। मान्यास्तावत् मान्यान् मानयन्ति। अपि च पण्डितवंशीयानां नैके ग्रन्थाः सम्पादिताः, प्रकटिताश्चेति पुनः सार्थक्यं भजते। गुरुमध्वदेवस्य साक्षाच्छिष्याणां कृतिषु निहितविशेषादरः आजीवनं तत्रैव जिजीव। जीवयामास च।

विषयोपस्थितिः विषयोपस्थापनञ्च प्रवक्तुः व्याख्यातुश्च वैशिष्ट्यं व्यनक्ति। आभ्यां गुणाभ्याम् आचार्यस्य प्रवचनानि ग्रन्थाश्च जिज्ञासूनां मनीषामाकर्षन्ति। विद्यापक्षपाती यः कोऽपि चिन्तनसरणिमेताम् आश्लिषति। बहिर्भुग्ना अपि बहवोऽन्तश्श्लिष्टा एवेति निश्चप्रचम्।

व्यक्तिगौरवमविहाय गुणदोषयोः यथार्थचिन्तनं हि विमर्शः। न तु प्रशंसामात्रपरा, नापि दोषान्वेषणभरा वस्तुनिष्ठचर्चा न व्यक्तिनिष्ठा। परिसरपद्धतिरियम्। आचार्यमध्वः न कमपि विचचार। न किमपि तत्याज। गोविन्दाचार्योऽपि मार्गमेनमनुससार। दध्युपलपश्यकानां चन्द्रिकाव्याख्या न रोचेत। अभिप्रायभेदः न दोषाय। चन्द्रिकाव्याख्यानविषये किञ्चित् प्रस्तौमि।

प्रथमं तावत् पुरो काश्चन प्रतिज्ञाः कृताः। प्रबन्धुः गुरुबान्धवसम्बन्धं ताः विवृण्वन्ति। प्रतिदिनं ब्राह्ममुहूर्ते विना पूर्वाचार्यस्मरणं प्राथमिकं नित्यकर्म न कुर्वते स्म। मङ्गलाचरणं गुरुस्मरणं पारायणं पुनरध्ययनं नित्यकर्म पुनः लेखनं, पाठनं, स्वाध्यायः पूर्वावलोकनं, प्रवचनं, पुस्तकपरिष्करणं रात्रौ घण्टात्रयं यावत् निद्रा पुनरुत्थानमेव दिनचर्यासीत्।

'अत्यशक्येतु निद्रादौ पुनरेवसमभ्यसेत्' इति अस्य उदाहरणमिवासीत् आचार्यजीवनम्। सततं शास्त्रार्थविचारतत्परं, स्वाध्यायशीलमेव आचार्य-जीवितम्। पाठे, प्रलापे च विविधव्याख्यानेषु विद्यमानान् स्वारस्यपूर्णविचारान् प्रस्तौति स्म।

सर्वदा आचार्यस्य चिन्तनगतिः शुद्धपाठगवेषणे। पाठशुद्धावर्थशुद्धिः खलु। बीजभङ्गेऽङ्कुरस्य कुतो जनिः ? मठीयग्रन्थालयेषु विद्यमानानां

हस्तमातृकाणां पांसुमोचने आचार्यगोविन्दस्य योगदानं महदस्ति। तत्रापि शुद्धः श्रीहृषीकेशतीर्थीयपाठः अस्यैव श्रमेणोपलब्धः। तत्र यल्लुप्तः श्रीरघुवर्यतीर्थीये पुनर्लब्धः। यदा विदिततुळुलिपिगन्धः भवेत् तदैवैतस्य परिश्रमानुभूतिः भवेत्। शोधक्षेत्रे मातृकाणां प्रामाण्याङ्गीकरणेऽनेकेविचाराः अनुसन्धेयाः। कालः, देशः लेखक उत रचयिता ? लिपिज्ञता, भाषातज्ज्ञता, प्रमेयविज्ञता, गुरदेवताभक्तिः एवं बहुप्रकारेण विमृश्य प्रामाण्यमुररीक्रियते। तदलमतिविस्तरेण।

ऐतरेयारण्यकब्राह्मणानामर्थचिन्तनमत्र खण्डार्थनिर्णये कृतम्। तत्पूर्वं पूर्वेषां मताचार्याणाम् अन्येषां व्याख्यातॄणामभिमतं किमिति प्रस्तुतम्। आरण्यके केऽध्यायाः उपनिषद्भागत्वेन स्वीक्रियन्ते ? तत्रर्षिः कः ? पूर्वकथा का ? को मतभेदः ? आचार्यमध्वस्य अभिप्रायः कः ? मतभेदे किं कारणम्? इत्येते विषयाः चर्चिताः।

एतेषां मन्त्राणां द्रष्टा महिदासः। पुराणे कश्चन भक्तः महिदास श्रूयते। भागवते भगवान् महिदासः नारायणस्यांशत्वेन प्रतीयते। स एव ऐतरेयः। ऋङ्मन्त्राणां द्रष्टा। भागवतेऽपि निर्णये विवृतः। एवमेव कृष्णकपिलनामकौ वरमन्त्रौ पूर्वदेवौ स्तः। भगवन्नाम गृहीत्वा प्रसिद्धिं स्वार्थं च साधयितुं प्रयतितौ। वराहावतारस्य अपि कार्यप्रवृत्तिः द्विवारमभवत् इति भागवतगतसंशीतिं पर्यहरत्।

प्रथमरूपं आदिहिरण्याक्षं दंष्ट्राभ्यामहनत्। द्वितीयं हिरण्याक्षं गदया तताड। एवं भगवद्रूपाणां निश्चयज्ञानं प्राप्यैव ध्यायेत्। षड्गुरुशिष्यादयः भगवन्तं महिदासं, भक्तं च महिदासं सम्मिश्र्यैतरेयर्षिकथां विवृण्वन्ति। आचार्यः महिदासैतरेयचरितं सुस्पष्टं व्यवृणोत्।

ऐतरेयब्राह्मणस्य षोडशेऽध्याये तुरीयखण्डस्य तदुपबृंहणतया तृतीयखण्डस्य, तथा आरण्यकस्यान्ते पठितस्य महानाम्नीखण्डस्य च अर्थनिर्णयोऽयं ग्रन्थः। अत एव खण्डार्थनिर्णय इति सार्थकं नाम।

व्याजेनानेन समस्तकर्मकाण्डस्य भगवत्परता प्रतिपादिता आचार्यमध्वेन। अहो! भगवत्पादस्य दयालुता। प्रमुमुदुः सज्जनाः साधुवाण्या। आचार्य-मध्वस्य आशीः परम्पराः परिरक्षन्त्वस्मान् शास्त्रमथनकर्मणि वर्मभूताः।

विषयानुक्रमणी सङ्ग्रहणीयप्रमापुष्करिणीव भाति। ग्रन्थस्यास्य स्पष्टता स्फुटता निष्कृष्टता च अनयैव ज्ञायते। ब्रह्मणोनन्तगुणत्वप्रतिपादनभागे नैके मन्त्राः उद्धृताः, व्याख्याताः, गुणाः प्रदर्शिताः अपूर्वार्थाः प्रकाशिताश्च। मन्त्राणां व्याख्यातारः पूर्वसूरयः श्रीशङ्करसुरेश्वरसायणाद्याचार्याः कटाक्षीकृताः। गुणप्रतिपाद्यत्वेनैव ते मन्त्रान् व्याचख्युः। पुनश्च व्याख्यया अनया शाखान्तरे विद्यमानान् पाठभेदान् तत्रत्यं स्वारस्यं च प्रादर्शि। इतिहासपुराणवाक्यैः वेदवचसां समुपबृंहणमपि कृतम्। व्याख्यानमिदं नैकेषां दर्शनानां निकषाश्मायितं बभौ।

वादसरणिरियं जिज्ञासूनां बोधदायिका, ज्ञानिनां चित्तचोदिका च। सिद्धेऽर्थे व्युत्पत्तिनिर्णये तावत् कोषव्याकरणादीनां, सिद्धेऽर्थे प्रामाण्यस्य सर्वलोकप्रसिद्धेः सिद्धं महागुणवत्त्वं विष्णोः। महानाम्नीखण्डार्थनिर्णयावसरे आचार्यमध्वोदाहृतानां मन्त्राणां पूर्णपाठः, अर्थवैशिष्ट्यं, छन्दोविचारः, उपासनारहस्यम्, व्याकरणस्वारस्यं चाभिव्याञ्जीत्।

**आचार्योदाहृतमन्त्रः-**

'तेभिरिन्द्रं चोदय दातवे मघम्' अत्र विवरणम्-

**परिसोम प्रधन्वा स्वस्तये नृभिः पुनानो वासयाऽशिरम्।**
**ये ते मदा आहनसो विहायसः तेभिरिन्द्रं चोदय दातवे मघम्॥**

ऋ- 9-75-5

इति समग्रो मन्त्रः। पञ्चर्चं सूक्तम्। भार्गवस्य कवेः आर्षम्। जागतं छन्दः। पवमानः सोमो देवता। सर्वजीवेभ्यः उत्कृष्टया प्रमया सहितः पवमानो मुख्यवायुः प्रार्थ्यते- हे सोम! अस्माकं, सु+अस्तये सन्ततसौख्याय, सम्यक्

सत्वाय वा परितः रक्षकः सन् प्र धन्व। धन्वगतौ। परितो दत्तदृष्टिः सञ्चरन् भवेत्यर्थः।

दैर्घ्यमवधारणे। नृभिः स्वभक्तैः कृतया सेवया जगत् पुनानः आशिरं त्वमाश्रितं जनं त्वद्रक्षाकवचेन वासय आच्छादय।

ये ते मदा आनन्दजनका भक्तिरसाः तेभिः इन्द्रं नारायणं चोदय। किमिति ? अस्मभ्यं मघं विद्याविक्तात्मकं धनं दातवे दातुम्। कीदृशास्ते भक्तिरसाः ? सर्वान् दोषान् घ्नन्तीति आहनसः। विः विष्णुरेक एव हायते गम्यत एभिः इति विहायसः। ओ हाङ् गतौ। सदा विष्णुमेव यन्तः, आखणाश्मत्वात् असुरैरहन्यमाना इत्यर्थः।

इत्यपावृतो मन्त्रार्थः बन्नञ्जेपदोपाह्वेन आचार्यगोविन्दपण्डितेन।

एवमग्रे, प्रज्ञातानुष्टुभामर्थनिर्णयः फलवाचिखण्डार्थनिर्णयः अर्थवादानां स्वार्थे तात्पर्यनिर्णयः परीधानीयमन्त्रार्थनिर्णयः, याज्यमन्त्रार्थनिर्णयः, छन्दसां व्यतिषङ्गनिर्णयः इतिकर्तव्यतानिर्णयः इत्येते विषयाः सम्यङ् निरूपिताः। शतमानेऽस्मिन् गोविन्दपण्डिताचार्यस्तु प्रतनयोगमीमांसां प्राणसूत्राणि परिचय्य सूत्रकारो बभूव। प्राणाग्निसूक्तस्य भाष्यमकारि। भाष्यकारस्समजनि।

ब्रह्मसूत्रभाष्यस्य व्याख्यानभूतस्य तत्वप्रदीपस्य पुनष्टीकाकृतानेन चन्द्रिका नाम्ना। एवं टीकाकारः। पुनश्च भागवततात्पर्यनिर्णये अधोभागे टिप्पणीः आरचयत्। पुनः कन्नड अनुवादचन्द्रिकया संस्कृतमूलग्रन्थाः इतोऽप्यधिकं प्रकाशिताः।

गीर्वाणकार्णाटिक्युभयभाषाविचक्षणः। गद्यपद्यसाहित्यचतुरः। पठन-पाठनविज्ञः। प्रवक्ता रचयिता च। लौकिकवैदिकविचारनिष्णातः। सव्यसाची लेखकः। विमर्शकः, संशोधकः, अनुवादकश्च। मुख्यतः संशयच्छित् स्वयमसंशयश्च डा. बन्नञ्जे गोविन्दपण्डिताचार्यः।

# जयन्तीकल्पः

**हेर्गग्रामनिवासी रवीन्द्र भट्टः**

अज्ञानकल्पितानां प्राचीनधर्मशास्त्रविदुषां मिथ्याप्रलापं अपाकर्तुं आचार्यमध्वः 'जयन्तीकल्पः' इति ग्रन्थं निर्माय ज्ञानिजनसन्दोहं तुषितवान्।

द्वादशश्लोकात्मिका इयं तन्वीकृतिः महान्तं विषयं प्रतिपादयति। भुवमवतीर्णस्य भगवतः श्रीकृष्णस्य जन्मदिनरहस्यं मृदुगुञ्जति कर्णरन्ध्रे। तस्मात् सत्सु अनेकेषु ग्रन्थेषु, ग्रन्थोऽयं अमलजलमये सरोवरे राजहंस इव शोभते।

ईदृशोऽयं ग्रन्थरत्नः सर्वमूलेषु अन्यतमः तथापि अप्रसिद्ध इव आसीत्। यदा बन्नञ्जे गोविन्द आचार्यः स्वीयया 'चन्द्रिकया' अस्य अस्फुटितार्थं प्रकाशयामास तदा सर्वो लोकः अस्य सौरभं घ्रातुं आरभत।

मङ्गलपद्ये आचार्यगोविन्दः स्पष्टयति -

**आचार्यभावमज्ञात्वा सम्प्रत्यपि च केचन।**<br>
**भिन्नव्रतत्वं मन्यन्ते तदर्थं अयमुद्यमः ॥ इति ॥**

अतः श्रीमदाचार्यस्य भावं जिज्ञासूनां, विष्णुतीर्थीयं, तथा पौराणिकं वचः, अन्यच्च सङ्गृह्य अस्य रहस्यं उन्मोचयितुं नितान्तं अयतय।

**रोहिण्यां अर्धरात्रे तु यदा कालाष्टमी भवेत्।**<br>
**जयन्ती नाम सा ज्ञेया.................. ॥**

इतीमां माध्वीं वाणीं मनसि निधाय स्वाभिमतं निर्भीकतया परामृशति। प्रमाणान्तराणि अपि संवादति। पुराणेषु पठ्यमानस्य ''श्रावण'' शब्दस्य 'सिंहमासः' इत्येव अर्थः करणीयः नान्यः इति उद्घोष्य सोऽर्थः कथं घटते इति च साधयति। सर्वान् अपि अन्यान् प्रमादं सूचयति ''लिपिकृतः प्रमाद्येयुः' इति। अत्रैव केचन विशेषाः प्रज्ञामात्रगोचराः अर्थाः आचार्येण आविष्कृताः

दृश्यन्ते। यथा-

1) पाण्डवान् जयेन योजयामास इति योगः।

2. ज्ञानभक्तिकर्मयोगानां अयमीश्वरः इति योगेश्वरः।

3. भक्तियोगेन भक्तानां पुरः सम्भवति आविर्भवति इति योगसम्भवः।

4. नीला विवाहे सप्तगोवृषान् विन्दति निग्रहीतुमिति गोविन्दः कृष्णः।

5. याति च सर्वत्र जानाति च सर्वमिति यज्ञः।

एवमन्येऽपि सन्त्यनेके अर्थाः। विस्तरभयात् विरम्यते।

उत्तरत्र अष्टमश्लोकव्याख्यानावसरे अनर्थान् अपावरयति। अन्ते, रोहिणीनक्षत्रयोगात् सा 'जयन्ती' भवति नो चेत् केवल 'जन्माष्टमी' भवतीति कृष्णजन्माष्टमी-जयन्त्योः अनन्यतां साधयति।

उत्तरत्र पुण्यं पापहरं इत्यत्र 'पान्तं न पातीति पापम्। धर्मं रक्षितारं रक्षति। पापं रक्षितारमेव न रक्षति। हिनस्तीति। पापं पातकं हरति पातकिनं च हरति' इति स्वीयया मनोज्ञया शैल्या पापपदार्थं व्याख्याय विनेयान् आनन्दयति।

अग्रे आचार्यमध्वः योगायेति कश्चन मन्त्रप्रतीकं सूचयति। अयं मन्त्रः भविष्यपुराणे 'योगाय योगपतये योगेश्वराय योगसम्भवाय श्रीगोविन्दाय नमो नमः' इति पठितः। सम्प्रति प्रचलितः पुराणपाठः ईषद्भिन्नः- 'योगेश्वराय योगसम्भवाय योगपतये श्रीगोविन्दाय नमो नमः' इति पाठान्तरमपि प्रदर्श्य तत्र लिपिकृतां प्रमादं सूचयति। क्षीरोदार्णवसम्भूत अत्रिनेत्र समुद्भव. ......... इति श्लोकं समुच्चार्य सकृदेव अर्घ्यं दद्यात् इति सिद्धान्तयति। त्रिः अर्घ्यमिति रामानुजीयाः इति त्र्यर्घ्यस्य श्रीवैष्णवसम्प्रदायमूलत्वमपि सूचयति।

एवमेव 'जातः कंसवधार्थाय भूभारहरणाय च इत्ययं मन्त्रभागोऽपि

रामानुजीय सम्प्रदाये पठितः। मूलपाठं अजानद्भिः अर्वाचीनैः तत् श्लोकद्वयं जयन्तीकल्पेऽपि प्राक्षेपि। सः प्रमाद एव इति निर्भीकतया स्वाभिमतं उपस्थापयति।

श्रीकृष्णजन्माष्टमी पूजानन्तरं रात्रौ अनेके श्रद्धालवः जाग्रति। तत् जागरणं वैकल्पिकं इति आचार्यसिद्धान्तः। यदि कोऽपि जिजागरिषति तर्हि जागृयादेव। परन्तु उत्तरत्र क्रियामाणेषु कर्मसु अजामित्वाय सुषुप्स्यति। तर्हि जागरणविधिलोपः न सम्भवति इति। इत्थं अत्र श्रद्धालुः पूजार्थं उत्सहेत, न जागरणार्थमिति आचार्यहृदयं मुक्तहृदयः परामृशति। अन्ते

**आचार्यवचनं स्वच्छं नलिनं तदपीतरैः।**
**अपव्याख्यानमलिनं क्षालयामास शक्तितः।**

इत्यनेन अपव्याख्यानक्षालनार्थं अयमुद्यमः मया विहितः इति सादरं निवेदयन् उपसंहरति।

****

# वायुस्तुतिटीकाव्याख्या

**विद्वान् श्रीरामविट्ठलाचार्यः**

श्रीबन्नञ्जेगोविन्दाचार्याः प्रतिभापर्वतोपमाः पाण्डित्यशिखरप्रायाः। न केवलं धीमन्तः धृतिस्थितिमन्तश्च। बहवो विद्वांसः भवन्ति। न तु सर्वेऽपि संशोधकाः। संशोधकाः भवेयुरपि। तत्ववादश्रद्धालवो न भवन्ति।

प्रायो जनाः सिद्धमार्गेष्वेव सञ्चरिष्णवः। न नवीनमार्गसिषाधयिषवः। अत एव पण्डिताः बहुलाः। संशोधका विरलाः। संशोधकेष्वपि पिहितनयन श्रोत्राः विहितस्वविचाराग्रहाः अग्रहा एव दृश्यन्ते।

अकृतपरिश्रमा अपि कृतपरिश्रमं निन्दन्ति तेनैव स्वयं नन्दन्ति च।

वाङ्मयसागरः अगाधः अपारश्च। पारङ्गताः एव बहवः। ततोऽपि बहवः तीरंगताः। तलस्पर्शिनस्तु केचन एव।

बन्नञ्जे गोविन्दाचार्याः तलस्पर्शिपण्डिताः आयौवनात् संशोधनशीलाः। बाल्यादध्ययनशीलाश्च। पण्डितकुटुम्बे लब्धोदयाः। अभिजातकवयः। ते विदग्धा विवाददिग्धाश्च। सौहार्देन जिज्ञासया च परिपृष्टाः दत्तोत्तराः भवन्ति स्म। मदेन पृष्टाः अश्रोतारः अप्रतिक्रियाश्च भवन्ति स्म। सत्यवचने निर्भराः निर्भराश्चासन्। आक्षेप्तारः भवन्त्यधिकाः। प्रष्टारश्च। तदीयविचाराः सर्वैरपि अङ्गीकरणीया एव इति न ते साग्रहा आसन्। विचाररुचिराः भवेयुरिति भावयन्ति स्म। नैतावता ते प्रश्नार्हा नैवेति नैव भाव्यते। प्रहारः तेषां साधनानि, तेषामुपायनं च खुरि??? सम्भावयेत्येवाशयः।

आस्तां तावत्। साम्प्रतं च तेषां कृतिविशेषं तैरेव सम्पादितां वेदात्म-तीर्थकृतव्याख्यासहितां वायुस्तुतिमन्तरेण किञ्चिदिव प्रस्तोतुमुपक्रमे।

उपक्रमेऽस्मिन् ग्रन्थे पञ्चत्रिंशत् पुटपरिमितां स्तुतिभूमिकां व्यलिखन्। हृद्यगद्यमयी विमर्शमयी च सा भूमिका संस्कृतप्रेमिणां रसायनभूता प्रभूतं भासते।

आरम्भे लिकुचवंशीयानां परिचयः तेषां कृतिसञ्चयपरिचयश्च क्रियेते विव्रियेते च। वायुस्तुतिकर्तुः श्रीत्रिविक्रमपण्डिताचार्यस्य मध्वार्येण संगमः संवादः संभाषः संगमनञ्च न्यरूपि।

ततः परं वायुस्तुतिरचनसन्दर्भविषये किंवदन्तीः निरूप्य विममर्श। अन्ते कथाविसंवादेन विष्णुस्तुतिं कृत्वा मध्वप्रभावृतः वायुस्तुतिञ्च चकार। स्तोत्रावसाने 'स्तुतिमकृत हरेर्वायुदेवस्य चास्य' कविघोषः सुस्थ इति निश्चिकाय।

अथ नखस्तुतिविषये विमर्शबुद्धिः प्रसारिता। पान्त्वस्मानिति पद्यमेव नखस्तुतिपरं दृश्यते। द्वितीये पद्ये नखस्तुतिः न श्रूयते। भिन्नकालिकं पद्यद्वयं संयोजितमिति निरणायि। तत्र तत्राधारप्रमाणानि निरूपितानि च।

ततः नखस्तुतिछन्दस्सौन्दर्यं वर्णितम्। तदनु स्तुतेरस्याः मन्त्रकाव्यात्मतां वर्णयन्तः महिमातिशयं वर्णयन्ति- 'यद् गृहस्थेन रचितेयं सन्न्यासिभिरपि मन्त्रतुल्यतयाऽमान्यत, नित्यमपाठ्यत'। श्रीवादिराजयतिराजस्य- 'वायुस्तुतिरतिर्नित्यमिति' प्रंशसामुल्लिलेख।

अथ वायुस्तुतिटीकाः अधिकृत्य विचारः प्रास्तूयत। कन्नड-आङ्ग्ल-भाषानुवादाश्च उल्लिखिताः।

कृतेरस्याः हरिवायुस्तुतिरिति नामविषये नैकटीकाभावाः न्यरूप्यन्त। वायुस्तुतावेव तत्र तत्र हरिस्तुतिरपि कृतेति हेतुना हरिवायुस्तुतिरिति नामेति भावयन्ति। केचन टीकाकाराः समग्रायाः स्तुतेः प्रतिपद्यं हरिपरतां वायुपरतां सम्भाव्यव्याख्यान्ति। एवं विमर्शविषयाः।

ततश्च वाग्भूषणरूपायां स्तुतौ मायावादप्रखरदूषणप्रक्षेपः कुत इति केषाञ्चन आशयो विमृश्यते। एतद्व्याजेन सत्ये, सत्यमार्गे च लघुभावनावतां वामबुद्धिजीवानामर्वाचीनानां विमर्शः निष्ठुरतया कृतः।

ग्रन्थारम्भे कविकर्णामृताभिधान श्रीवेदात्मयतिकृतौ नखस्तुतिपद्यद्वयं न

व्याख्यातमिति स्तुतिचन्द्रिकाभिधायां स्वकृतटीकायामेव आद्यपद्यद्वय-व्याख्यानमाख्यातम् ।

'तथैव वायुस्तुतेः प्राचीनटीकायामस्फुटानामर्थानां प्रकाशनाय लघ्वी वायुस्तुतिटीका स्तुतिचन्द्रिका नाम' कृतेति प्रतिज्ञा कृता ।

हृद्यं मङ्गलपद्यमिदम्-

**हरिचरणं गुरुचरणं परिचरणेन प्रसाद्य भवतरणम् ।**
**कृतमुखहृदयाभरणं वितन्यते हरिस्तवनम् ॥**

आद्यं नखस्तुतिपद्यं- 'तदेतदृचाऽभ्युक्तम् सिंहं नसन्त मध्वो अयासं हरिमरूषं दिवो अस्य पतिम्' इति वेदवचसा प्रकाशितम् ।

इदश्चान्यत् हृद्यं मङ्गलपद्यं वायुस्तुतिव्याख्यारम्भे सहजतया स्फुरितम्-

**'लक्ष्मीशं तमनीशं परिपूर्णमनीषं च भारतीशम् ।**
**नत्वा त्रिविक्रमार्यं विहर मनस्तत्कृतावीषत् ॥'**

आचार्यगोविन्दकृता चेयं टीका न केवलं मूलटीकाविवरणपरा । अपि च स्वयमपि वायुस्तुतिविवरणपरा च । तत्र तत्र विविधकोशोल्लेखः व्याकरणपरिचयः श्रुतिस्मृत्यादीनां समुल्लेखश्च टीकायामस्यां क्रियन्ते ।

तदयं संक्षेपतः इक्षुकाण्डपरिचयः । सरसनाः सरसाश्च सहृदयाः स्वयं समास्वादयन्तु ॥

****

# श्रीमध्वविजय-तत्वचन्द्रिकाविष्कारः

डा.श्रीनिधि प्याटि

आचार्यत्रये मध्वाचार्यः कर्नाटदेशोत्पन्नेति अस्त्यस्माकं महद्गौरवम्। त्रैलोक्याचार्यः सः वायुरूपी मध्वः माघशुद्धनवम्यां भूमाववतीर्णः सन् वैदिकं सिद्धान्तं प्रतिष्ठाप्य तत्वजिज्ञासूनां महदनुग्रहमकरोदिति विदितचरोऽयं विषयः। तादृशस्यास्याचार्यस्य अभूतपूर्वं जीवनवृत्तान्तं ऐतिहासिक-काव्यग्रन्थरूपेण श्रीमध्वविजय इति नाम्ना निबबन्ध श्रीनारायण- पण्डिताचार्यः। महाकवये तस्मै आधमर्ण्यप्रवाहसमर्पणमपि ऋणपरिहाराय नालमिति सर्वेषां विश्वासः। काव्यस्यास्य कर्ता स्वयमेव व्याख्यानरूपेण भावप्रकाशिकाख्यां व्याख्यां निर्माय तत्र तत्र क्वचित् स्वाभिप्रायं, क्वचित् अधिकान् विचारान् प्रकटयामासेति महत्सौभाग्यमस्माकम्। मध्वविजयस्य प्रसिद्धानि त्रीणि व्याख्यानानि सम्प्रति उपलभ्यन्ते-वेदाङ्गतीर्थीया पदार्थदीपिका, विश्वपतितीर्थकृता पदार्थ-दीपिकोद्बोधिका, छलारी-शेषाचार्यकृता मन्दोपकारिणी चेति। सत्स्वपि व्याख्यानेषु किमावश्यकं नूतनं व्याख्यानं बन्नञ्जे गोविन्दाचार्यकृतं तत्वचन्द्रिकाख्यमिति सन्दिहमानं प्रति इदमेव उत्तरं यत्, आम् सर्वाण्यपि व्याख्यानि मूलभावाविष्कारकाण्येव, तथापि न प्रतनेषु व्याख्यानेषु विचारितानि सप्रसङ्गं श्रीमध्वविजयोक्तानि सूक्तानि, न वा छन्दोगतिः विमृष्टा, न वा काव्यालङ्कारादायः विवृताः, न खलु पूर्वाचार्याणां भावप्रकाशिकाग्रन्थः समग्र उपलब्ध यत्र अनेके विषयाः स्पष्टीकृताः, तदेत्सर्वमत्र सम्पादितं गोविन्दार्यैरिति नास्य व्याख्यानस्य गतार्थत्वम्।

**व्याख्यानस्य वैशिष्ट्यम् –**

व्याख्यानस्यास्य वैशिष्ट्यं सङ्क्षेपेणेत्थं सङ्ग्रहीतुं शक्यते – शुद्धपाठा-विष्कारः, वेदमन्त्रार्थविवरणम्, श्रीमध्वविजयप्रयोगसमर्थनं, छन्दोविमर्शः, अलङ्कारविमर्शः भावप्रकाशिकापाठशुद्धिः, वेदाङ्गतीर्थीयव्यख्यापरिशुद्धिः, पारिभाषिकानां ग्रामादिवाचिनां पदानां विवरणमित्यादि। अनेके अंशाः

आचार्यैः स्वयमेव 'किञ्चित् प्राथमिकं वचः' इत्याख्यभागे निरूपिताः, अतः प्रायः तत्राऽकथितानि वैशिष्ट्यानि द्वित्रोदाहरणपुरस्सरं निरूपयितुं प्रयते।

## शुद्धपाठाविष्कारः

ग्रन्थनाम आरभ्य शुद्धपाठोऽत्र शोधित इत्ययं विशेषः। परम्परायां खलु ग्रन्थस्यास्य सुमध्वविजय इति नाम। इदम्प्रथमतया 'मध्वविजय' इत्येव नारायणपण्डिताचार्याभिमतं नाम इति उद्घोषयामास। तत्र अनेकानि संवादि -प्रमाणान्यपि प्रादर्शिषत उपद्घाते, तत्र विस्तरेण चर्चितत्वात्, नात्र विस्तरेण युक्तयोऽनूद्यन्ते। तदनन्तरं बहवः पण्डिताः विषयेऽस्मिन् राघवेन्द्रतीर्थप्रभृति ज्ञानिनां प्रयोगमपि संवादप्रमाणत्वेन प्रकाशयामासुः।

बन्नञ्जे आचार्यैः कुत्रचित् वेदाङ्गतीर्थीयां व्याख्यां प्राचीनमातृकाश्चानुसृत्य शुद्धाः पाठाः आविष्कृताः। तद्यथा 'पदारविन्दप्रणतो हरीन्द्र' इति वेदाङ्ग-तीर्थीयः पाठ इति 'पदारविन्द इति' प्रतीकग्रहणात् ज्ञायते। प्रचलितपाठे पादारविन्दप्रणतो इति श्रूयते। तथैव 'प्रमाणकोटेः स हेळयाऽगात्' इति प्रतनः पाठः, 'हेलयाऽगात्' इति प्रचलितः पाठः। कोशेषु यत्र ळकारो दृश्यते तत्र ळकारो निबद्धः, यत्र लकारः दृश्यते तत्र लकारः।ननु हेळया इति कथमित्यस्य स्वयमेव समाधानञ्चाह –'हेळया अनादरेण। अनायासेनेत्येतत्। हेडृ=अनादरे। डस्य ळः इति वैयाकरणाः। वस्तुतस्तु हेळृ अनादरे इत्यपि पठनीयम्। तद् यथा 'ईड ईळ स्तुतौ' इति काशकृत्स्नः' इति। परन्तु पाणिनिः अक्षरसमाम्नाये ळकारं न पपाठ इत्याक्षेपस्य उत्तररूपेण कटाक्षी कृतश्च पाणिनिः स्वकृतमहा भारततात्पर्यनिर्णयटीकायां – 'लकारं रहयित्वा पाणिनिर्वर्णमालां पपाठ। नवपञ्चवारं ढक्कां नादयन्नपि शम्भुर्ळकारमुप-सङ्गहितुमहो विसस्मार। अज्मध्यस्थडकारस्याऽदेशरूपं बाहृच्यं ळकारमेव केवलं पाणिनीया अङ्गीकुर्वन्ति। तेनानेके प्रतनाः शब्दा अदर्शनमेव ययुः। प्राचीनसंस्कृते लळयोर्भेद एव' इत्यादिभिः वाक्यैः। स्वयमेव उपोद्घातिकायामाह' तद्यथा - काल इति समयः। काळ इति कृष्णः। बहून् लातीति बहुलम् न बहुळम्। अपितु बहळम् न

बहलम् । विरळं न विरलम् केरळं न केरलम् । बाहुषाळी न बाहुशाली । तदेतत् सर्वं मूलग्रन्थेषु भगवत्पादप्रयोगादवगम्यते तदनुगुणमत्रापि तत्रतत्र ळकारः प्रायोजि' इति । न तत्राग्रहविशेषः प्रदर्शितः । कुत्रचित् प्रचलित एव पाठ आदृतः । अत्रैव मध्वविजये 'कान्त्या विळम्बितनवेन्दु' इतिवेदाङ्गतीर्थीयः पाठः, प्रचलित-पाठस्तु 'कान्त्या विडम्बितनवेन्दु' इति प्रचलितः पाठः, अत्र प्रचलितं पाठमेव निबबन्ध, कारणञ्चाह –'प्राचीनलिपिकाराः प्रायेण डकारस्थाने ळकारमेव लिखन्ति । नायुक्तमेतत् । अमध्यस्थत्वात् । अथापि 'तेषां विडम्बनायैव' इत्याद्याचार्यपादप्रयोगात् 'विडम्बितनवेन्दु' इत्येव मूलपाठोऽत्राऽदृतः' इति ।

क्वचित् मूलकोशेऽदृष्टत्वात् समग्रः श्लोकः प्रक्षिप्त इति परित्यक्तः । तद्यथा एकादशे सर्गे 'हरितप्रसून' इति श्लोकादनन्तरम् ' उपचारनन्दनमिदं' इत्येकः श्लोकः प्रचलितपाठे पठ्यते, परन्तु मूलकोशेषु अनुपलम्भात्, प्राचीन-व्याख्यातृभिः वेदाङ्गतीर्थविश्वपतितीर्थैरव्याख्यातत्वाच्च प्रक्षिप्त इति निर्णीतः, तत्र गोविन्दाचार्यभणितिः – 'प्रचलितपाठे' हसितप्रसूनइत्यतः पद्यात् परम्, 'वरपारिभद्रक' इत्यतः पूर्वं पद्यमेकमधिकं पठ्यते । तद् यथा-'उपचार-नन्दनमिदं युवनं नियमेन नन्दयति यन्न जनम् । परमेव नन्दनमुपेन्द्रवनं सकलं सदा यदभिनन्दयति ।। ' इति । प्राचीनटीकाकारैः कैरपि न परिगृहीतमिति स्फुटं प्रक्षिप्तम् । अर्थास्वारस्याच्च नहि मोक्षगतमपि वनं सकलं जनमभिनन्दयति । किन्तु सात्त्विकमेव ।' इति

यत्र मूलकोशः प्रचलितपाठानुसारी तत्र वेदाङ्गतीर्थीयविरुद्धोऽपि प्रचलितः पाठ एव आदृतः । तद्यथा ' द्रुतसखिषु' इति वेदाङ्गतीर्थीयः पाठः, द्रुतसखेषु इति प्रचलितः पाठः, वस्तुतः प्रयोगोऽयं प्रसिद्धपाणिनि- व्याकरण-विरुद्धः, तथापि अयमेव पाठः समर्थितः'द्रुतसखिषु कथमेतत्? 'राजाहः सखिभ्यष्टच् [५.४.९१] इति टचि 'द्रुतसखेषु' इति भाव्यम् । सत्यम्, अथापि प्राचीनकोशे 'द्रुतसखिषु' इत्येव पठ्यते । समासान्तो विधिरनित्य इति सङ्गमनीयम् । तद् यथा- 'गङ्गासङ्गेन नैर्मल्यं रथ्याब्भिर्लभ्यते यथा', 'शुच्यम्पि तटाकानि 'इत्यादि' इत्यादिवाक्यैः ।

कुत्रचित् वेदाङ्गतीर्थीयानुसार्यपि प्रचलितपाठो नादृतः। तद्यथा – प्रचलितपाठे वेदाङ्गतीर्थीये च बुद्धिसागरः वादिसिंहेन सह वादार्थमागत इत्यर्थकः 'सवादिसिंहोऽत्र स बुद्धिसागरः' इति पाठः, परन्तु मूलकोशानुरोधेन अर्थस्वारस्यचिन्तनेन च 'स वादिसिंहोऽत्र सबुद्धिसागरः' पाठः 'स वादिसिंहः सबुद्धिसागरः वादार्थमागत इत्यर्थकः पाठ आदृतः। 'यः पूर्वं वेदवादी सन्नपि बुद्धिसागरमतावलम्बेन वेदद्विषां प्रथमः सम्बभूव सः समस्तवादीन्द्रगजप्रभङ्गदो वादिसिंहः सबुद्धिसागरः समाययौ। युक्तं चैवमन्वयनम् सिंहो हि गजप्रभङ्गदः न सागरः'। इति। समस्तवादीन्द्रगजप्रभंगदः इति विशेषणमेव पाठनिर्णये निर्णायकम् न भवति, तस्य तु अन्यथाऽपि योजयितुं शक्यत्वात्, परन्तु मूलकोशेऽपि तथैव पाठस्य लाभेन अर्थस्वारस्यस्यापि सद्भावात् निर्णयः। भावप्रकाशिकावचनमत्रसंवादिप्रमाणंस्यात्, परन्तुभावप्रकाशिकामुल्लिख्यापि वेदाङ्गतीर्थः 'सवादिसिंहोऽत्र स बुद्धिसागरः' इति पाठमेव जग्राह। तेन प्राचीनमातृका एव अत्र प्रमाणं। अतः सन्देहशीलैः मूलमातृका पठनीया परीक्षणीया वा, तद्विरुद्धं लभ्यते चेत् प्रदर्शनीया, बन्नञ्जे गोविन्दाचार्यो वा विश्वसनीयः। न हि केवलं वाचारम्भरणेन तत्वं निश्चीयते।

कुत्रचित् अनिर्णय एव शरणमित्यप्युवाचतद्यथा 'अत्रानन्तस्वान्तवेदान्तसिंहे'इति वेदाङ्गतीर्थीयः पाठः, 'तत्रानतस्वान्तवेदान्तसिंहे' इति प्रचलितः पाठः विश्वपतितीर्थानुसारी। कस्तावदत्र समीचीनम् इत्यस्मिन् विषये बन्नञ्जे आचार्याणां वचनमित्थं वर्तते –'तत्र रजतपीठपुरे' इति विश्वपतितीर्थीयः प्रकटितः पाठः। 'अत्र रजतपीठपुरे' इति तु वेदाङ्गतीर्थीयम्। कस्तावदत्र लिपिकृत्प्रमाद इति महान्तः प्रमाणम्'इति। तथैव 'भर्त्सयन्निति जहास सुहासो' इति प्रचलितः पाठः, भत्सयन्निति प्राचीनकोशानुसारेण पाठं निबबन्ध, परन्तु तत्र विषयोऽयं सन्देहास्कान्दित इति स्वयमेवोच –' प्राचीनकोशेषु 'भत्सयन्' इत्येव पठ्यते। नतु भर्त्सयन्' इति। वेदाङ्ग-तीर्थीयेऽपि तथा। श्रीहृषीकेशतीर्थादिभिरप्येवं लिखितं दृश्यते। किं भर्त्सधातोःप्रतनं रूपं भत्सेति, आहो धात्वन्तरमुतवा केवलं लिपिस्खलनमिति विशेषज्ञैर्विभावनीयम्' इति।

कुत्रचित् सम्भावनामात्रं प्रकटितं तद्यथा – 'विधानमात्रं तदुपाददे तदा' इति प्रचलितः पाठः, वेदाङ्गतीर्थीये तु आददे इत्येव प्रतीकग्रहणं कृतम्। परन्तु आददे इति पाठे छन्दोभङ्गः। तत्र गोविन्दाचार्यवचनं- व्याख्याने 'आददे' इत्येव पठ्यते। न 'उपाददे' इति तेन 'तदुताऽददे' इति वेदाङ्गतीर्थसम्मतः पाठः सम्भाव्यते विश्वपतितीर्थीयेऽपि तथा' इति। इत्येवं प्रकारेण अनेकैः प्रकारैः पाठः शोधितः मूलभावश्च प्रकाशित इत्ययं संशोधकस्य कर्तव्यं द्योतयन्निव विराजते।

**वेदमन्त्रार्थविवरणम् –**

तत्वचन्द्रिकाव्याख्यानस्य वैशिष्ट्यमिदं यत् मध्वविजयभावप्रकाशिकोदाहृतानां मन्त्राणामर्थविवरणम्। तद्यथा 'तां मन्त्रवर्णैरनुवर्णनीयां' इति श्लोकस्य भावप्रकाशिकाव्याख्याने वायुः -'बळित्था तद् वपुषे धायि दर्शतम्', 'भूषन्न योऽधि बभ्रुषु नम्नते', 'तां सुते कीर्तिं मघवन् महित्वा' इति मन्त्रवर्णैः अनुवर्णितः, पूर्वोक्तानि तु सूक्तानि। उत्तरत्र मन्त्रवर्णाः निरूपिताः 'विष्णोः पदे परमे मध्व उत्सः', 'विद्वान् मध्व उज्जभारा दृशे कम्' इत्यादयो मन्त्रवर्णाः'इति। बन्नञ्जे गोविन्दाचार्यैः तेषां सर्वेषां सूक्तानां, मन्त्रवर्णानां अर्थाः सप्रसङ्गं निरूपिता इत्यंशःतेषां पाण्डित्यस्यदर्पणायितः।

तथैव 'सद्दाददसुशंसननिन्दाकारिसूक्तगतमर्थमुपेत्य' इति श्लोकव्याख्याने भावप्रकाशिकायां सूचितस्य 'न वा उ देवा' इति सूक्तस्य समग्रतया व्याख्यानं विद्वज्जनानन्दकरम्। 'कन्यकादृतसुरेन्द्रवपुःश्रीदानवाचिवरसूक्तहृदुक्तौ' इति श्लोकसूचितसूक्तार्थविवरणं वेदाङ्गतीर्थीये यावद् आवश्यकं तावद्विवृतं, परन्तु बन्नञ्जे गोविन्दाचार्यैः समग्रं अपालासूक्तं व्याख्यातमिति वेदार्थजिज्ञासूनां रसायनम्।

न केवलं वेदमन्त्रार्थविवरणं, वैदिकयागप्रक्रिया तद्गतमन्त्रभागार्थनिर्णयोऽपि कृतः। तद्यथा ' याज्यया समुचितानुवाक्यया' इति श्लोकव्याख्यानावसरे भावप्रकाशिकाव्याख्यानमुपलक्ष्यीकृत्य का नाम याज्या,

का वा ऋगनुवाक्या, के वा अभिष्टवाः मन्त्रा इत्यादिविषयाणां विस्तरेण निरूपणमस्माकं कर्मकाण्डभागाऽपाण्डित्यं उपहसदिव विराजते।

न केवलं वैदिकप्रक्रियागतमन्त्रार्थनिर्णयः, अपि पुनः वेदोच्चारणक्रमः विशिष्टतया निरूपितः त्रयोदशसर्गे। 'उक्ताङ्गेभ्यः कादिकान् व्यञ्जयन्तं इति श्लोकादारभ्य 'काल्पीः क्लृप्तीर्व्यञ्जयन्' इति श्लोकपर्यन्तं आचार्यस्य वेदोच्चारणक्रमो वर्णितः। भावप्रकाशिकायामपि विशेषेण विवरणं प्रदत्तम्। शिक्षादिवेदोच्चारणशास्त्रानध्येतॄणां दुर्बोधं विषयं सज्जनुजिघृर्षया व्यवृणोत् श्रीगोविन्दाचार्यः इति नः भाग्यधेयम्। इत्थं वेदपुरुषानुग्रहेण वेदसम्बद्धः सर्वोऽपि भागः ऐदम्प्राथम्येन प्रकाशितः इतीदमस्य व्याख्यानस्य महत्वं वैशिष्ट्यञ्च।

## भावप्रकाशिकापाठशुद्धिः तद्व्याख्यानञ्च

श्रीमध्वविजयस्य भावप्रकाशिकाख्या व्याख्या श्रीनारायणपण्डिताचार्य-कृता ऐदम्प्राथम्येन मातृकाशोधनादिना शुद्धरूपेण प्राकाश्यं नीता इति विषये अस्माभिः सर्वदा गोविन्दाचार्याणां कृते आधमर्ण्यं प्रकटनीयम्। अनेके विषयाः, प्रसङ्गाः श्लोकव्याख्यानरूपेण नारायणपण्डिताचार्यैः वर्णिताः। कुत्रचित् ते वेदाङ्गतीर्थीयव्याख्यानेषु सङ्गृहीता, बहवो विषया असङ्गहीताः। तेषां सर्वेषां वाक्यानामपि व्याख्यानं व्यधायीति नकेवलमिदं श्रीमध्वविजस्य व्याख्यानं, अपि पुनः भावाप्रकाशिकाव्याख्यानमपि। तद्यथा 'सम्भूयामी चोळजद्वीपिपुर्योः' इति श्लोकव्याख्यानावसरेचोळजः पद्मतीर्थः शाक्ततन्त्रज्ञः आसीत् इत्ययं विषयो भावप्रकाशिकायामुल्लिखितो दृश्यते 'यो गुप्तपटलोक्तायां भैरवीचक्रसङ्गतौ। साङ्कर्यां परविद्यायां महावाग्गम्य सतां गुरुः' इति। अत्र केवलं पद्मतीर्थः भैरवीचक्रविद्यायां असज्जनानां गुरुरासीदित्येव ज्ञायते, का सा भैरवीचक्रविद्या, के वा तस्य विषया, कैराचर्यते इत्याद्याः विषयाः यौवनावस्थायामेव समधीततन्त्रशास्त्रैः व्याख्याततन्त्रसारसङ्ग्रहैः गोविन्दाचार्यैः व्याख्याताः – 'कौलानां तन्त्रस्य गुप्तपटल उक्तायां भैरवीचक्र सङ्गतावसतां गुरुः। साङ्कर्यां च परविद्यायां

महावाग्मी गुरुरिति। तथाहि कौलाचाराणां भैरवीचक्रम्-

**भैरव्याः कल्पितं चक्रं संस्थाप्य पूर्ववत् प्रिये।**
**सुराणां शोधनं कुर्याद् यथावत् परमेश्वरि ॥**

**प्रवृत्ते भैरवीचक्रे सर्वे वर्णा द्विजोत्तमाः।**
**निवृते भैरवीचक्रे सर्वे वर्णाः पृथक्पृथक् ॥**

इत्यादि त्रिपुरा, कामेश्वरी, भुवनेश्वरी, त्रिपुरबाला, अन्नपूर्णेश्वरी - इत्याद्या बहुविधा भैरव्यो भवन्ति' इत्यादिना।

कुत्रचित् पाठप्रक्षेपाः दूरीकृताः। तद्यथा 'योऽसौ देवो विश्वदीपः प्रदीप्त' इति श्लोकभावप्रकशिकायां 'किं ललाट इति पृष्टो राज्ञा करेण गदां भवन्तो बिभ्रन्ति (?) वयं ललाट इत्यूच इत्याद्यशब्दार्थ' इति भागः लभ्यते। नूनमिदं प्रक्षिप्तमिति गोविन्दाचार्यैः सकारणं प्रत्यपादि – 'भवन्तो विभ्रन्ती त्याद्यपपाठगर्भमिदमप्रबुद्धं वाक्यं संस्कृतभाषानभिज्ञैः प्रक्षिप्तमिति स्फुटम्। तुरुष्कराजः करे गदामबिभरुरिति चाद्भुतमितिहाससंशोधनम्। अनधीतानां शास्त्रेषु अप्रगल्भानामितिहासेषु अप्रबुद्धानां भाषासुभवन्तीदृशाः प्रक्षेपा इत्यतिरोहितम्' इत्यादिवाक्यैः।

क्वचित् सम्भावना, क्वचित् अनिर्णयशरणतापि प्रदर्शिता। तद्यथा दशमसर्गस्य एकविंशतिव्याख्याने भावप्रकाशिका 'दस्यूनवाप्तानवलोक्य सोऽब्रवीत् को मेऽस्ति शिष्यो विभयो जयीत्यलम् अभ्यासवांस्तूर्णमुपेन्द्रती र्थस्तत्तेजसा क्रूरचमूं प्रभोऽभ्ययात्' इति पठ्यते। अत्र 'क्रूरचमुं प्रभोऽभ्ययात्'इत्यस्यार्थः न स्फुटः। तदुच्यते तत्वचन्द्रिकायां –' क्रूरचमूं प्रभोऽभ्ययात्' इत्येव सर्वत्र पठ्यते। अर्थस्तु न स्फुटः। क इह नाम सम्बोध्येत 'प्रभो' इति 'समभ्ययात्' इति मूलपाठः सम्भाव्यते'।

इत्थं अनेकत्र मूलपाठप्रदर्शनेन, क्वचित् सम्भावनाप्रदर्शनेन, बहुत्र विशेषार्थविवरणेन बहूपकुरुते व्याख्यानमिदं भावप्रकाशिकाध्येतॄणाम्।

**वेदाङ्गतीर्थीयव्याख्यापरिशुद्धिः**

श्रीमध्वविजस्य अतिप्राचीनं व्याख्यानं वेदाङ्गतीर्थीयं कालगर्भ-लीनमासीत्, गोविन्दाचार्याणां प्रयत्नेन प्रकाशितमिति महानुपकारः अध्येतृपरम्परायाः। तत्र व्याख्याने लिपिकृत्प्रमादेन कुत्रचित् सूत्राणि, धातवः, कोशाः व्यत्यस्ता दृश्यन्ते। तत्सर्वमपि स्वव्याकरणभाषाशास्त्रज्ञान वैशाल्येन निरीक्ष्य पर्यहरत् गोविन्दाचार्यः। तद्यथा 'सौमेरवं गौरवमावहन्ति' इति श्लोकव्याख्यानवसरे 'विनश्यामः पुरा =नष्टाः स्म, यावत्पुरानिपातयोर्लट्' इति लट् ' इति वाक्यं दृश्यते। परन्तु 'यावत्पुरानिपातयोर्लट्' इति सूत्रं भविष्यदर्थे लटः विधानं करोति। तन्निरीक्ष्य अधस्तात् टिप्पणी प्रदत्ता गोविन्दाचार्यैः –' भविष्यदर्थे लड्विधायकमिदं सूत्रं सम्पातायातमित्युक्तम् 'पुरि लुङ् चास्मे' इति पठनीयम्' इति।

तथैव 'पूर्वजन्मसु हि वेद पुरेदम्' इति श्लोकभागव्याख्यानासवरे ' वेद पुरेत्यत्र ' यावत् पुरानिपतयोर्लट्' इति सूत्रेणातीतार्थे लडादेशः' इति वेदाङ्ग-तीर्थीयं वाक्यं पठ्यते, तत्रापि गोविन्दाचार्यः' पुरि लुङ् चास्मे' (३.२.१२२)। पुराशब्द उपपदे स्मशब्दवर्जिते लुङ् भवति, लडपि भवति। तेन वेद पुरा, अवेदिषं पुरा। अत्र यत् प्राचीनटीकासु पठ्यते - ' यावत् पुरानिपातयोर्लट्' इति सूत्रेणातीतार्थे लडिति, तल्लिपिकृत्प्रमादपतितं प्रतीमः। भविष्यदर्थे हि तत्र लड् विधीयते, नातीतार्थे'इत्यादिवाक्यैः लिपिकृत्प्रमादं संमार्जयामास।

कुत्रचित् लिपिकृत्प्रमादः कोशादिस्थलेषु।तद्यथा 'यतिराड्घनाघनः' इति पदव्याख्यानावसरे 'लिकुचान्वययतिश्रेष्ठाख्यः घनाघनः वार्षुकाब्दः, 'शक्र-घातुकमत्तेभवार्षुकाब्दा घनाघनाः' इत्यमरः', इति वाक्यं मूल-मातृकायामुपलभ्यते, अत्र सूक्ष्मेक्षी गोविन्दाचार्यः लिपिकृतां प्रमादं प्रादर्शयत्। तत्र च अधस्तात् टिप्पण्यां विवृतमेवम्- 'शक्रो धातुकमत्तेभो वर्षुकाब्दो घनाघनः' इति प्रचलितः पाठः। अत्र यत् कोशेषु पठ्यते -

'घनाघनः वार्षुकाब्दः' इति, 'वार्षुकाब्दा घनाघनाः' इति, 'वार्षुकमेघो जलधेर्जलम्' इति च, स लिपिकृत्प्रमादः 'वर्षुक' इत्येव साधुपदम्। अहो गोविन्दाचार्यस्य सूक्ष्मेक्षित्वम्। अहो तेषां शुद्धपाठा-विष्करणनैर्भर्यम्।

**श्रीमध्वविजयप्रयोगसमर्थनम् –**

श्रीमध्वविजये कुत्रचिदपाणिनीयाः प्रयोगाः दृश्यन्ते। पूर्वव्याख्यानेषु न प्रयोगाणां समन्वयो वा सङ्गमनं वा न प्राप्यते। तत्वचन्द्रिकायान्तु अनुपदं पाणिनीयानां प्रयोगाणां सूत्रोदाहरणपुरस्सरं व्याख्यानं, अपाणिनीयानां प्रयोगाणां साधुत्वसमर्थनम्। प्रसिद्धं खलु गोविन्दाचार्यवचनं, साधवः शब्दाः द्विविधाः पाणिनीया अपाणिनीयाश्चेति। अपाणिनीयानां प्रयोगाणां कुत्रचित् उत्तरोत्तरमुनिप्रामाण्यमङ्गीकुर्वतां वैयाकरणानां मतमनुकुर्वाणः भाष्याद्युत्तरग्रन्थसंवादेन साधुत्वं साधितवान्। तद्यथा – 'सन्मात्सर्यं बद्धुमूचेऽशुभानां' इति श्लोकव्याख्यानावसरे 'बद्धुम्' इति प्रयोगसमर्थनम् तत्वचन्द्रिकायां, 'कथमत्र 'बद्धुम् ' ? 'बन्धुम्' इत्येव मूलपाठः स्यात्। अथवा नेदं क्र्यादेः 'बन्ध बन्धने' इत्यस्य रूपम् किन्तु भ्वादेः 'बध बन्धने' इत्यस्य। नन्वयं नित्यसन्नन्तः। बीभत्सत इति च रूपं निष्यादयन्ति। पतञ्जलिरप्याह ' नेतेभ्यः प्राक् सन आत्मनेपदम् नापि परस्मैपदं पश्यामः' इति। सत्यम्। अथाप्यन्ये 'बधते' इत्यादि रूपमप्यङ्गीकुर्वन्ति। वार्तिकमप्यत्र संवदते 'अत्रापि सन्नर्थविशेष इष्यते [३.१.६] इति। जुगुप्सायामर्थविशेषे गम्यमान एव सन् प्रत्ययो भवतीत्युक्तं भवति। तेन बन्धनार्थे न सन् भवति। तेन बन्धनार्थे गम्यमाने 'बधते' इत्येव रूपम्। क्षीरस्वामी चाऽह- 'जुगुप्सायां सन् बीभत्सते अन्यत्र बधते' इति। काशकृत्स्नधातुपाठेऽप्येवम्। तेन 'बद्धम्' इति सुवचम् ' इत्यादिवाक्यैः कुत्रचित् अपाणिनीयानां प्रयोगाणां साधुत्वं, पाणिनीयप्रयोगाणामेव साधुत्वभ्रान्तिंनिराकृत्यसाधितम्।तद्यथा'विविधभूरतीत्यगोदावरीतटमगात्' इति श्लोके विविधभूः इति शब्दस्य साधुत्वसमर्थनम्। व्याख्यानान्तरेषु महाकविप्रयोगत्वात् साधुत्वं वा, औणादिकं उप्रत्ययं सम्पाद्य वधूशब्दवत्

प्रयोगमङ्गीकृत्य साधुत्वं साधयितुं प्रयत्नः कृतः। परन्तु गोविन्दाचार्यः मूले कुठारन्यायेन शब्दशास्त्रनिजभावं विमृश्य साधुत्वं प्रत्यपादयत्‘ ननु कथं शसि भूरिति ? तर्हि त्वमपि पृछ्यसे कथं शसि स्त्रीरिति ? ननु पाणिनिना मुखत उक्तम्- ‘स्त्रियाः’[६.४.७९ ‘वाऽम्शसोः’ [६.४.८० ] इयङादेश इति। तर्हि अन्यदपि पठ्यतां सूत्रम्- ‘भुवो वा शसि’ उवङादेश इति। ननु न पठितं प्राचीनैः। अत एवेदानीं पठ्यते। ननु पुरातनैः पठ्यते। पुरातनाः पेठुरिति वयमनुसराम एवं केवलं चक्षु निमील्य। अहो वैयाकरणम्मन्य अद्भुता प्रतिभा तत्रभवतः। उन्मीलय तावच्चक्षुषी। पाणिनिना न पठितमिति अक्षादूहिन्यामुपसङ्ख्यानं कात्यायनः पपाठ। केनाप्यपठितं पुंशब्दस्य सुपि ‘पुङ्क्ष्व’ इति रूपमनुभूतिस्वरूपाचार्यः पपाठ। कुर्मि कुर्वः कुर्म इति वाल्मीकिरपूर्वं पपाठ। बहुलमेवंविधाः प्रयोगभेदा भवन्ति देशभेदेन च। पाणिनिरप्याह तत्रतत्र प्राचां मतेनेदं रूपमुदीचां मतेनेदं रूपमिति। ननु ते सर्वेऽपि पुरातनाः? तर्हीदमवगच्छ पुरातना अप्यधुनातना आसन्। अधुनातना अपि पुरातना भविष्यन्ति। ये तलस्पृशः, ये पारदृश्वानः, ते क्वचिल्लीलया शास्त्रजलधिमतिक्रम्यापि जिगमिषन्ति’ इत्यादिवाक्यैः। अहो अधीतमहा भाष्यकैयटादिव्याकरणग्रन्थानां गोविन्दाचार्याणां विमर्शनशैली, वाक्यान्यपि महाभाष्यशैलीं स्मारयन्तीव विराजन्ते। एवमेव बहुत्र व्याख्यानमिदं पदनिष्पत्तिप्रदर्शनपुरस्सरं व्याकरणाधिजिगमिषूणाम् अधीतव्याकरणानाम् आम्ररसायनमिव विभाति।

## अलङ्कारछन्दोविमर्शः

व्याख्यानस्याऽस्य प्रमुखं वैशिष्ट्यं यत् प्रायः सर्वैः व्याख्याकारैरस्पृष्टस्य मध्वविजयगतस्य अलङ्कारछन्दश्शास्त्रस्य विमर्शनम्। गोविन्दाचार्येण सचित्रं बन्धादिस्वरूपं प्रतिपाद्य प्रायः विद्वज्जगति अन्यैरकृतं सुदुश्शकं कार्यं व्यधायि। स्वभावकविः खलु आचार्यः, तेषां अलङ्कारछन्दश्शास्त्रादिविषये कुतूहलप्रवृत्तिः सहजा एव। कुत्रचित् छन्दश्शास्त्रसाहाय्यात् मूलपाठशोधनं व्यधायि। तद्यथा ‘अयमेव गोविषयतोऽपि’ इति श्लोके ‘कुत्रचित्’ इति

अधिकं पदं प्रचलितपाठे दृश्यते। तत्र गोविन्दाचार्यवचनम्।' केचित् पठन्ति - 'अयमेव गोविषयतोऽपि कुत्रचित् सदसि जनतार्थितो जवात्' इति। अनधीतच्छन्दःशास्त्राणां विभ्रमविलसितमेतत्। तथा ह्यत्र उद्गता नाम विषमच्छन्दः। प्रथमपादे द्वितीये च दशाक्षराणि, तृतीय एकादश, चतुर्थे त्रयोदशेति। तथाहि लक्षणम्- 'प्रथमे सजसा लश्चेत् द्वितीये नसजा गुरुः। तृतीये भ्नज्लगास्तुर्ये सज्सज्गैः सहितोद्गता' इति तेन चतुश्चत्वारिंशदक्षरा त्रिष्टुबेवेयम्। यत् केचिदन्यथा वदन्ति तत् सर्वमप्रमाणकमित्युपेक्ष्यम्'इति।

तथैव कुत्रचित् छन्दोविशेषाश्रयणे प्रयोजनविशेषम् न्यरूपयत्। तद्यथा मङ्गलश्लोकव्याख्यानम्। दिङ्मात्रं निर्दिश्यते लेखनविस्तारभयात्। धन्योमह्यत इति श्लोकबन्धेन ग्रन्थनामदृढीकरणम्। आर्यादिमात्राछन्दसां लक्षणविवरणपुरस्सरं निरूपणम् इत्याद्यनेके विषया काव्यपीयूषरसास्वादन-चित्तानां आह्लादकराः। अलङ्कारविमर्शश्च आनन्दवर्धनादि-अलङ्कार-शास्त्रविदुषां ग्रन्थाध्ययनं विना अधिगन्तुमपि न शक्यते इति नाहं तस्य विमर्शने समर्थः इति निवेद्य 'अलङ्कारशास्त्रस्य विमर्शः ध्वनिरसादिलक्षण-विमर्शनपुरस्सरमकरोदिति शीर्षिकां प्रदर्श्य विरमामि।

सन्त्यन्येपि बहवो विशेषाः व्याख्यानस्यास्य। लेखविस्तरभयात् बहु न निरूप्यते। समग्रनिरूपणं शक्यमिति भ्रान्तिस्तु कालिदासस्य 'तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्' इति वाक्यस्मरणेन निवारणीया। दिग्दर्शनं व्यधायि। अनेन केषाञ्चित् तत्वचन्द्रिकापठनरुचित्पद्यते चेत् सार्थकं मे लेखनमिति धिया गोविन्दाचार्याय प्रणतिततीः निवेद्य विरम्यते।

*****

# सङ्ग्रहचन्द्रिकावलोकनम्

डा. श्रीनिधि प्याटि

**यावत् स्थास्यन्ति गिरयः सरितश्च महीतले ।**
**तावत् रामयणकथा लोकेषु प्रचरिष्यति ॥**

इत्युक्तिस्तु लोकेषु रामायणस्य सार्वकालिकत्वं द्योतयन्तीव विराजते। रामायणकथा तु नैकैः कविभिः नैकैः विमर्शकैः प्राकृते संस्कृते च विभिन्नदृष्ट्या वर्णितापि तस्याः विषये अधुनापि नूत्नाः कृतयः, नूतनानि काव्यानि विरचयन्त एव विराजन्ते पण्डिता इति तु कथायाः, कथानायकस्य, कथावस्तुनःसार्वकालिकं माहात्म्यं निरूपयति। सर्वेपि वाल्मीकीयं रामायणमाश्रित्यैव काव्यादिकमरचयन्निति निश्चप्रचम्। तद्यथोक्तं नारायणपण्डिचार्यैः सङ्ग्रहरामायणे –

'वाल्मीकेर्गौः पुनीयान्नो महीधरपदाश्रया। यद्दुग्धमुपजीवन्ति कवयस्तर्णका इव' ॥ इति। वाल्मीकीयं रामायणं सर्वैः श्रुतमेव, परन्तु ततोऽपि प्राचीनं मूलरामाणं वर्तते इति न कस्यचित् ज्ञातम्। अत एव आचार्यमध्वेन व्यासनिर्मितं मूलरामायणं किञ्चन वर्तते इति प्रमाणपुरस्सरं प्रत्यपादि। 'मूलरामायणश्चैव पुराणश्चैतदात्मकमिति' हि प्रमाणवाक्यं ब्रह्माण्डपुराणान्तर्गतमुदाहृतं विष्णुतत्वविनिर्णये आचार्यैः। रामायाणेऽपि च 'चरितं रघुनाथस्य शतकोटिप्रविस्तरम्' इति मूलरामायणस्यास्तित्वं सूचितम्। नहि वाल्मीकिरामायणं शतकोटिप्रविस्तरम्। न हि वस्तुनः अनुपलब्धिः तस्याभावे प्रमाणं भवितुमर्हति। व्यासवाल्मीक्योः व्यासस्यैव अतिशयाप्तत्वम्। अत एव मूलरामाणाविरोधेन कथं वा अध्येतव्यं वाल्मिकिरामायणं, कथं वा वाल्मिकिरामायणस्य पद्मपुराणादिषु निरूपितायाः रामकथायाश्च विरोधपरिहारः इत्यादिसंशयैः व्याकुलीभूतान् जनान् बोधयितुं आचार्यैः रामकथानिर्णयात्मकं व्यासहृदभिप्रेतं माध्वरामायणं प्रणीतं महाभारततात्पर्यनिर्णये। अथ च काले सम्प्रवृत्ते चतुर्विंशति-

सहस्रश्लोकात्मकस्य वाल्मीकिरामायणस्य अध्येतारो विरला भवेयुः, अथ च माध्वं रामायणं निर्णयात्मकं स्वल्पमिति धिया तस्यैवाध्ययने प्रवृत्ताः जनाः वाल्मिकिरामायणकाव्यसौन्दर्यास्वादनरहिताः विस्तृतरामकथावञ्चिताश्च भवेयुरिति कलियुगप्रवृत्तिं जानन्निव माध्व-वाल्मिकिरामायणयोः सेतुरिव विराजमानं 'सङ्ग्रहरामायणं' काव्यमग्रथयत् करुणया नारायणपण्डिताचार्यः। इदञ्च काव्यं मध्वनिर्णयगर्भितं वाल्मिकिरामायणसौन्दर्योपेतञ्च विराजते।

अथापि काव्यमिदं पाठप्रवचनादिपरम्परायाम् लुप्तमिव अदृश्यत। अत एव अपपाठादिभिर्दूषितमभवत्। विद्याभूषणीयविश्वपतितीर्थीयादिटीकाभूषितमपि घुणभक्षितमातृकादिना अनाविष्कृतशुद्धटीकं तत्र तत्र अपपाठविशिष्टमेव नैकाभिः संस्थाभिः मुद्रितं वर्तते स्म। अथ च बन्नञ्जे गोविन्दाचार्यस्य साहसेन, अपरिमितश्रमेण, महावैदुष्येण काव्यास्यस्य शुद्धप्रायो पाठः, शुद्धश्च व्याख्यानं प्रकटितम्। अहो सौभाग्यमस्माकं यदिदानीं मूलपाठबालेन नारायणपण्डिताचार्यहृदयमवगन्तुं पारयेम। अथ च विलसति विश्वपतितीर्थीयं व्याख्यानं सरलं, मनोहरं, व्याकरणादिविशेषविशिष्टं, कालिदासकाव्यस्य मल्लीनाथीयसञ्जीविनीव्याख्यानमिव बालपण्डितोभोयोपकारकं गोविन्दाचार्याणां प्रयत्नबलेन। अथापि एताः टीकाः सम्पूर्णतया काव्यसौन्दर्यप्रकटने असमर्था इति मन्वानेन गोविन्दाचार्येण स्वकृतसङ्ग्रहचन्द्रिकाख्यया शब्दालङ्कार-अर्थालङ्कार-प्रयोगविमर्शन-शुद्धपाठविमर्शन-प्रमेयविशेषनिरूपणादिविशेषविशिष्टया व्याख्यया काव्यमिदं समलङ्कारि। तद्यथा स्वोपज्ञे आचार्यस्य भणितिः– 'अध्यगामिषत प्राचीनटीकानां गुणाः। अध्यगामिषत च दोषाः। तदेवं सतीष्वेतासु टीकासु किमप्यपूर्णमिव काप्यसमग्रविवरणमिव, क्वाप्यनुद्घाटितहृदयमिव भाति सङ्ग्रहरामायणम्। अकृतप्रायैव अपाणिनीय-प्रयोगेषु शब्दसाधुत्वचर्चा। यथा 'वत्सा वत्स्यामि' इति। विद्याभूषणटीकायां को धातुरिति न स्फुटम्। 'वत्स्यामि हनिष्यामि, वध सम्प्रहारे लृट्' इति विश्वपतितीर्थीयम्। श्रीनिवासाचार्योऽपि निमील्य चक्षुषी प्राचां वचनमेव अनुवाच- 'वत्स्यामि हनिष्यामि। वध सम्प्रहारे लृट्' इति। एतावताऽपि न

शङ्कापरिहारः। वधधातुरेव पाणिनिनये न पठ्यते। यद्यपि प्राचीना वधधातुं पठन्ति। तत्पक्षेऽपि वधिष्यतीत्याद्येव रूपम्, न वत्स्यामीत्यादि। अतो न शङ्काशङ्कुपरिहारः। न स्पृष्टमेव छन्दोलक्षणादिकम्। क्वचिदस्पष्टमितव। कचिदस्वरसमिव। अतः काव्यहृदयस्पृक् छन्दो-व्याकरणादिविश्लेषणपरा काव्यरसिकानां पुराणकृषिकाणां च हृदयङ्गमा काचिदन्यैव टीकाऽपेक्षितेति बहवो मामभ्यर्थयामासुः। मयि च स एव भावो जजागार। तदर्थमेकां नवीनां टीकां सङ्ग्रहचन्द्रिकां नाम विरचय्यात्र समयोजयम्।' इति

यद्यपि बन्नञ्जे-आचार्यकृतव्याख्यानस्य विशेषांशाः तत्कृतसङ्ग्रह-रामायणपीठिकाभागादेव ज्ञातुं शक्याः,'लिलेख च तत्रसङ्ग्रहरामायणे साङ्कर्यं', 'सङ्ग्रहरामायणे छन्दोविलासः', 'सङ्ग्रहरामायणे शब्दार्थालङ्काराः', 'सङ्ग्रहरामायणे अपाणिनीयाः प्रयोगाः', 'इदमुपज्ञं शुद्धप्रायः पाठः' इत्यादिभिः उपशीर्षिकाभिः स्वकृतव्याख्यानस्य वैशिष्ट्यम्। वस्तुतः तत्तु केवलं दिग्दर्शनं, न पुनः तावानेव विशेषः व्याख्यानस्यास्य। अथ च अनधीतसमग्रसङ्ग्रहरामायणोहं कथं वा व्याख्यानस्य वैशाल्यं वा वैदुष्यं वर्णयितुं वा प्रभवेयम्। तथापि सङ्ग्रहचन्द्रिकापुरस्सरं यत्किञ्चित् मया शिष्याणां कृते पाठितं, तदनुलक्ष्य स्थालीपुलाकन्यायेन केचन मद्-दृष्टिपथं गताः व्याख्यातृकृतपीठिकायामनुक्ताः विशेषांशाः विव्रियन्ते।

## बन्नञ्जे गोविन्दाचार्याणां मूलपाठनैर्भर्यम्, तदाविष्करणप्रतिभा च

ज्ञातमेव यत् सर्वेषां आचार्यस्य शुद्धपाठाविष्करणे मुद्रणे च दीक्षा। अपिचाचार्यः महाकविः इति लोकप्रसिद्धमेव। कवेः पुनः काव्यसौन्दर्ये रतिः। संशोधकस्य पाठशोधने। तदेतदुभयस्य साङ्कर्यम् आचार्ये। उभयधर्मे सङ्कृष्टे तत्र को विजेता संशोधको वा कविर्वा इति जिज्ञासायां स्वप्रणीतकाव्ये कवेः, परकाव्यविमर्शने संशोधकस्य जय इति प्रामाणिकं पन्थानमनुसरतः आचार्यस्य प्रामाणिकता श्लाघ्या। तद्यथा बालकाण्डे द्वितीये सर्गे सुमन्त्रदशरथयोः एकान्तवृत्तायाः आख्यायिकायाः वर्णनप्रसङ्गे श्लोकक्रममेवं

मूलपाठान्वेषणेननिबबन्ध –'एकान्तेऽकान्तवदनं राजानं पुत्रलालसम्' इति। अत्र वस्तुतः विश्वपतितीर्थीयः पाठः' एकान्ते कान्तवदनम्' इति, ' कान्तं मनोहरं वदनं यस्य सः तथा तम्,' इति चाख्यायि, कान्तवदनं प्रसन्नमुखमिति विद्याभूषणीयेपि स एव पाठः आदृतः। परन्तु मूलापाठानुसरेण अकान्तवदनं म्लानवदनमिति व्याचख्यौ सङ्ग्रहचन्द्रिकायां, तन्मार्गानुसरी क्लान्तवदनमिति पाठः स्वरसः, काव्यसौन्दर्यवर्धकः काशी-आचार्यपाठे उपलभ्यते, तथापि मूलपाठं तथैव जग्रन्थ, पुटस्य अधस्तात् 'क्लान्तवदनम्' इति का.श्री पाठ इति भाति। तदपि रमणीयम्।' इति पाठमसूचयत्। अत्र क्लान्तवदनमिति पाठस्य सौन्दर्यमनुभूयापि मूलपाठानुरोधेन पाठं निबबन्ध इति तु तस्य प्रामाणिकतायाः निदर्शनम्। तथैव शुद्धपाठान्वेषणं सूक्ष्मेक्षिकत्वं, महतीं प्रतिभां, कोशव्याकरणादिषु पाण्डित्यञ्चापेक्षते। त्रयस्यास्य सङ्गमः त्रीवेणीसङ्गमः प्रयागराजे इव पण्डितराजे आचार्ये दृश्यते – तद्यथापायसं भक्षयित्वा ताः स्त्रियः रेजिरे इति वर्णनप्रसङ्गे 'मधुकालगुणान् भुक्त्वा माधव्य इव सल्लताः' इति प्रचुरः पाठः, तत्र च आचार्यस्य पाठविमर्शनरीतिः अनुसन्धानयोग्या सर्वेषां संशोधाकानाम् - तद्यथा आचार्यवाक्यम्' 'मुन्मनाः' इति वि.ती पाठः। अत्र महान् पाठभ्रंशः। माधव्यइव सल्लताः' इति प्रचुरः पाठः। स्यादपि। परन्तु न केनापि व्याख्यात्रा समादृतोऽयंपाठः। माधव्य इव सन्मनाः' इति क्वचित्। सर्वथाऽसङ्गतम्। 'माधव्यइव सन्मदाः' इति क्वचित्। प्रायः 'सम्मदाः' इति साधुः पाठ इति भाति। 'सन्तुष्टाः' इति विद्याभूषणस्य काशी श्री. आचार्यस्य च व्याख्यानमेतमेव पाठं कटाक्षयति। 'माधव्यः भ्रमरस्त्रियः' इति तु सर्वेषां व्याख्यातॄणामैककण्ठ्यम्। माधवी लतेति प्रसिद्धार्थं विहाय तथा व्याख्याने कारणं तु मृग्यम्'।

सूक्ष्मेक्षिकत्वस्योदाहरणं तत्रैव चतुर्दशे श्लोके 'तं मुनीन्द्रं समानयत्' 'तं मुनीन्द्रमुपानयत्' इति पाठान्तरम्। तत्रैव तृतीये सर्गे द्वितीये श्लोके 'निर्ज्जरा विज्वरा स्वस्था भवत माचिरम्' इति पाठः, 'मा चिरम्' इति अधष्टिप्पण्यां पाठान्तरं विश्वपतितीर्थीयमसूचयत्। न केवलं काव्ये, व्याख्यानेपि

मूलपाठनैर्भर्यं दृश्यते। तत्रैव त्रयोविंशतिश्लोकव्याख्याने विश्वपतीये 'अदेर्घस्लृ' घस्लादेशः इति वाक्यं वर्तते, तत्र अधस्तात् टिप्पण्याम् 'अदेर्धातोः लिट्यन्यतरस्याम्' घस्लृ इत्ययमादेशो भवतीति वचनाद् घस्लादेश इत्यर्थः। अतोऽत्रअदेर्लिटि घस्लादेशः 'इत्येवस्वरसो मूलपाठः' इति मूलपाठमाविश्चकार स्वप्रतिभया पाण्डित्येन च।

तादृशेस्मिन् त्रिवेणीसङ्गमे स्नानं कुर्वतां नैकानि रत्नानि प्राप्यन्ते एव। लेखविस्तरभिया अग्रे गम्यते।

## काव्यभावाविष्कारः व्याख्यानवैशिष्ट्यञ्च

काव्यस्य हृदयं वर्णयतुमेव व्याख्यानानि भवन्ति। तत्र प्रसिद्धामर-कोशबलेन भावं ज्ञापयितुं प्रायः सर्वेपि प्रयतन्ते। गोविन्दाचार्यस्य रीतिस्तु भिन्ना वर्तते। प्रसिद्धम् अमरकोशं विहाय हलायुध-मेदीनी-विश्वाभि-धानादिबलेन अर्थनिरूपणं सङ्गहचन्द्रिकाव्याख्यानवैशिष्ट्यं, प्रसिद्धार्थेन सह नूतनस्य स्वरसस्यार्थस्य निरूपणम् बहुत्र प्रस्तूयत इत्यपरम्। क्षीरसमुद्रस्य तीरमधिष्ठाय देवाः परमात्मनः स्तुतिं चक्रुरिति वर्णनप्रसङ्गे नारायणवाचकं विष्टरश्रवस् इति पदं प्रयुक्तं पण्डिताचार्येण'

**तस्य तीरमधिष्ठाय कञ्जोद्भवभवादयः।**
**तुष्टुवुस्तुष्टमनसो विष्टरश्रवसं सुराः॥**

इति श्लोके। विष्टरश्रवस् इति पदस्य प्रसिद्धार्थः वर्णितः विश्वपतीये व्यापनशीलकीर्तिमानिति, सङ्गहचन्द्रिकायान्तु प्रसिद्धार्थः पूर्वैरेव व्याख्यातत्वात् स्वरसमर्थत्रयं वर्णितम् –' विष्टरश्रवसम्। देवेष्विव दैत्येष्वपि विष्टो रमत इति श्रवः कीर्तिर्यस्य तम्। अन्तःस्थित्वा रमणकृदन्तरः। अन्तर्विष्ट्वा रमणकृद् विष्टरः। अथाप्याहुः वृक्षः। 'पलाशी विष्टरः स्थिरः' इत्यभिधानात्। विष्टरे अश्वत्थवृक्षे श्रूयत इति विष्टरश्रवाः। 'अश्वत्थः सर्ववृक्षाणाम्' इति स्मरणात्। विष्टरो दर्भमुष्टिरिव श्रवसी कर्णावस्येति विष्टरश्रवा इत्यन्ये॥' इति।

तथैव देवतानां वचनं श्रुत्वा ब्रह्मणा प्रतिवाक्यमित्थभिहितमिति कथनावसरे सङ्ग्रहरामायणे –

'यो योगक्षेमदाता नस्तेन हीदं विधित्सितम्' इति श्लोकः वर्तते। अत्र योगक्षेमपदस्य प्रसिद्धार्थः सर्वैः ज्ञात एव, परन्तु अभिधानबलेन तमर्थमसर्थयत् 'योगक्षेमदाता। आह हि भगवानेव- योगक्षेमं वहाम्यहम्' इति। को योगः? अपूर्ववस्तुसंयोगो योगः। कः क्षेमः? अक्षीणो भोगः 'जानीयान्मङ्गलं क्षेमंक्षेमं लब्धार्थरक्षणम्' इत्यभिधानम्।

अयोध्याकाण्डे प्रथमसर्गे 'मातामहस्यौकसि कैकयस्य' ओकश्शब्दार्थ-निरूपणावसरे 'गृहं सद्माऽश्रयश्चौकः' इति मङ्ख' इत्यप्रसिद्धकोशोदोहारणम्। 'विश्वं च यद्वश्यमवश्यमेत्' इत्यत्र अवश्य-पदार्थकथनावसरे 'अवश्यं तु निश्चिते' इति यादवप्रकाशोद्धरणम्। 'लालप्यमानस्य भृशं शरणं भव भामिनि' इति श्लोके शरणपदार्थोक्त्यवसरे ' 'शरणं गृहरक्षित्रोर्वधरक्षणयोरपि' इति मेदिनी' इति मेदिनीकोशोदा-हरणम्। तेन व्याख्यातुः मनः अमर-कोशादन्यात्रापि जिज्ञासवः नेत्रं प्रसरयेयुरिति निवेदयन् दिव भासते।

बहुत्र पूर्वव्याख्यानेष्वप्रकटितं काव्यकर्तृभावम् उद्घाटयामास। तद्यथा वालिसुग्रीवाङ्गदसुषेणावतरक्रमनिरूपणावसरे श्लोकस्य अभिप्रायविशेष-वर्णनम् –

**वासवो वालिनामाऽऽसीदिन्दुस्तत्तनयोऽङ्गदः।**
**रविः सुग्रीवनामाऽभूदनलो नीलनामकः॥**
**वरुणश्च सुषेणोऽभूद् विश्वकर्मा नळोऽजनि।**
**अभूतां मैन्दविविदावश्विनौ सेवितुं विभुम्॥'**

इत्यत्र सङ्ग्रहरामायणे अग्न्यवतारभूतस्य नलस्यावतारनिरूपणानन्तरं वरुणावतारभूतस्य सुषेणस्यावतारनिरूपणम् अकरोत्। वस्तुतः अग्निः तारतम्यक्रमे वरुणादनन्तरः अथापि तस्य वरुणात् पूर्वमेव निरूपणे किं बीजम्?, अङ्गदस्य सुग्रीवात् पूर्वं निरूपणं कुतः? किमर्थं सुग्रीवेण सह

नीलस्य निरूपणम्? विश्वकर्ममैन्दविविदयोरवतारक्रमपूर्वापरीभावे किं निमित्तमिति जिज्ञासापूर्वकमपूर्वं कविभावमाविश्चकार –' यद्यपि तारतम्य-क्रमेणानलो वरुणादनन्तरः। अथापि सोमसूर्याग्नीनां ज्योतिषां सहोक्ति-सौकर्याय क्रमव्यत्ययः। तेषु हि त्रिषु भगवानुपास्यः। 'अष्टपत्रे हृत्पद्ममध्ये सूर्येन्दुवह्निगम्' इति ओन्तत्सत्प्रणवकल्पे। पितापुत्रयोः सहोक्ति-सौकर्यायाङ्गदस्य पूर्वमुक्तिः। सेनापतित्वाच्च नीलस्य सुग्रीवेण सहोक्तिः। यद्यपि विश्वकर्माणमश्विनोरनन्तरमेकोनविंश्यां कक्ष्यायां पठन्ति। वस्तुतस्तु त्वष्टा किल विश्वकर्मा। 'विश्वकर्मा तु वर्धकिः। त्वष्टा नाम स देवानाम्' इति यादवप्रकाशाचार्यः। स तु द्वादशादित्येष्वेकोऽष्टाविंश्यामेव कक्ष्यायां पठित इत्यश्विसमानकक्ष्य एव। तत्र वानरवर्धकिरिति विश्वकर्मणः पूर्वमुद्देशः। असुराविष्टाविति मैन्दविविदयोः पश्चात्। विश्वकर्मा देववर्धकि-र्नळनामा कपिः सन्नजनि स्वयं स्वतनयो भूत्वा।' इत्यादिना सङ्ग्रहचन्द्रिकायाम्। इदं केवलमेकमुदाहरणमात्रं, सर्वेष्ववतार क्रमनिरूपणश्लोकेषु पूर्वापरीभावस्य सार्थक्यं चिन्तितम्।

मध्वरामायणवाल्मीकिरामायणयोः सेतुरिव इदं काव्यमिति ज्ञातं किल। तत्सूचयन्निव वाल्मीकिमपि ननाम कविरादौ मङ्गलाचरणे। तत्प्रकाशयितुमेव सङ्ग्रहचन्द्रिकायां रामायणश्लोकाः कथानुसरेणोल्लिखिताः। तेन च अनधीत-रामायणानां रामायणकाव्यसौन्दर्यरसास्वादनेन सम्पूर्णतया अधिजिगमिषापि जागर्तीत्यन्यत्फलम्। तथैव सेतुत्वं मनसि निधाय व्याख्यातत्वादपूर्वाः विशेषांशा अपि ज्ञायन्ते – तद्यथावनवासवर्णनप्रसङ्गे अरण्यकाण्डे द्वितीये सर्गे 'ससौमित्रिर्न्नव समा निन्ये मुनिजनप्रियः' चतुर्दशसु वर्षेषु नव वर्षाणि अतीतानीति पण्डिताचार्याभिप्रायः। रामायणे तु सम्प्रति 'ययुः संवत्सरा दश' इति दश वर्षाणि अतीतानीत्यर्थे पाठः लभ्यते। तत्र 'ययुः संवत्सरा नव' इति ग्रन्थकृत्सम्मतः पाठः' व्याख्यानेनरामायणेपि पाठभेदं प्राकाशयत् व्याख्याकारः।

तत्रैव 'विराधं दृष्टवान् वीरो मुनिमांसांशिनं वने। अष्टौ सिंहान् विनिर्भिद्य

शूलेनाक्रम्य च स्थितम्' ॥ इतिसप्तदशश्लोकव्याख्यानावसरे रामायणविरोधं आक्षिप्य समादधन् चन्द्रिकाकारः प्रमेयद्वयमाविर्भावयामास –'यद्यपि विराधप्रसङ्गानन्तरं शरभङ्गप्रसङ्गो रामायणे पठ्यते । अथाप्यत्र पाठक्रमादर्थ-क्रमो बलीयानिति व्यत्यस्य पपाठ। तथाहि तात्पर्यनिर्णये- 'शूलेन विनिर्भिद्य तान् शूलेनैवाऽक्रम्य अवसज्य च स्थितम्' । यद्यपि रामायणे - 'त्रीन् सिंहांश्चतुरो व्याघ्रान् द्वौ वृकौ पृषतान् दश। सविषाणं वसादिग्धं गजस्य च शिरो महत्' (२.७ ) इति पठ्यते। 'अष्टौ सिंहान्' इति तु मूलरामायणादि ग्रन्थान्तरोदितमिति भाति। रामायणं तु क्रौर्यातिशयोप-लक्षणम् । एकदा सिंहानन्यदा व्याघ्रानवसज्येति व्याख्येयम् । रामदर्शनकाले त्वष्टौ सिंहान् ॥ ' इत्यादिना ॥ अनुपदं एतान्यनेकान्युदहरणानि लभ्यन्ते ।

अथ च बन्नञ्जे गोविन्दाचार्याणां अध्येत्रनुजिघृक्षेच्छा सर्वत्र स्फुटा। क्षीणे वयस्यपि न केवलं मातृकां संशोध्य शुद्धप्रायपाठमाविर्भावयामास, अपि पुनः अध्येतृसौकार्याय विश्वपतितीर्थीयादिव्याख्यानगतानंशान् स्पष्टीचकार। तद्यथा बृहस्पतिशब्दनिर्वचनप्रसङ्गे 'बृहतां महतां ब्रह्मर्षीणां बृहत्या वा पतिर्बहस्पतिः । 'तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तुलोपश्च'इति सुडागमलोपौ'इति विश्वपतीयम्, अत्र' 'पारस्करप्रभृतीनि च संज्ञायाम्' इत्यत्र पठितं वार्तिकमिदम्' इति सूत्रोदोहरणेन अध्येतृसौकर्यं कल्पितम् । कुत्रचित् व्याख्यानस्पष्टनं- तद्यथा बालकाण्डे तृतीयसर्गस्य द्वितीये श्लोके 'स्वस्थाः' इति पदव्याख्यानावसरे 'स्वर्गेषु तिष्ठन्तीति स्वस्थाः ।'वा शरि' इतिविसर्गलोपे स्वर्लोकस्थिता इत्यर्थो भवति' इति वाक्यमबोधकं विद्यार्थिनां, तदर्थं 'वा शरि' इति सूत्रविवरणाय प्रवृत्तेन 'खर्परे शरि वा लोपो वक्तव्यः' इति वार्तिकेन विसर्गलोपे सतीत्यर्थः । विसर्गस्य लोपेन तत्स्थाने सकारादेशे 'स्वस्स्थाः' इति रूपं सम्पद्यत इति वा' इति विवरणं दत्वा विद्यार्थिमनश्शङ्का-कलङ्कः प्रक्षालितम् । अन्यथा वा शरि इति सूत्रेण कथं वा लोपो विधीयत इति शङ्का तथैव अवतीष्ठेत्। तस्मिन्नेव श्लोकव्याख्याने 'वत्स्यामि' इति प्रयोगविमर्शनं पण्डितानामपि मोदावहम् ।

अनेकत्र प्रचीनव्याख्यानेषु वस्तुसंज्ञादिव्याख्यानावसरे वृक्षविशेषः, वर्णविशेषः इत्यादिरीत्या अबोधाकन्येव पदान्युपयुज्यन्ते। सङ्ग्रहचन्द्रिकायां बहुत्र लक्षणवर्णनपुरस्सरं कन्नडादिप्राकृतभाषायां सः पदार्थो वर्णितः इति महदुपकारकत्वं जिज्ञासूनां, तद्यथा- अरण्यकाण्डे द्वितीये सर्गे 'सालतालतमालांश्च' इत्यादिना निर्दिष्टानां वृक्षाणामर्थनिरूपणम् - सालः सर्जः। **ಹೆಮ್ಮೃತ್ತಿ** इति भाषायाम्। तालस्तृणराजः। '**ತಾಳಿ**' इति भाषायाम्। तमालस्तापिच्छः='**ಹೊಂಗೆ**', नागः='**ನಾಗಸಂಪಿಗೆ**' पुन्नागः='**ಹೊನ್ನೆ ಸುರಗಿ,ಸರಗಿ**', चम्पकः **ಸಂಪಿಗೆ**, चन्दनः गन्धद्रुमः। स्यन्दनः = **ಅತಿಮುಕ್ತ ಹುಲಿಗಿಲು** चूतः प्रसिद्धः। खर्जूर। खर्जूरद्रुमः सम्प्रति भारते दुर्लभः। पुराणेषु बहुधा पठ्यते। तेन ज्ञायते तदात्वे खर्जूरोऽपि भारते प्रचुर आसीदिति।' इत्यादिना। एवमनेकगुणविशिष्टस्यास्य व्याख्यानस्य विशेषंशाः अहमहमिकतया लेखनप्रवेशनमिच्छन्तः धावन्त इवभासन्ते, कं वा प्रवेशयामि, कं वा सन्निरुणध्मि। विषयवैशाल्यमनुलक्षयन् लेखन-परिमितिश्च मनसः ज्ञापयन् अधिकात् विवरणात् विरमामि।

अहो अस्य तत्ववेत्तुः कवेः काव्यगाम्भीर्यं, आश्चर्यकरश्चास्य व्याख्यातुः व्याख्यानलौशलम्, ऐकाग्र्यमध्ययनवैशाल्यम्। स्मारं स्मारं मोदते चेतः। नान्यत् किञ्चित् निवेदयितुं प्रभवामि 'भूयिष्ठां ते नम उक्तिं विधेम' वाङ्गतिं विना।

****

# आनन्दमालाविमर्शः

**विद्वान्. चिप्पगिरि नागेन्द्राचार्यः**

शतं वद। एकं मा लिख। इतीयमुक्तिः ग्रन्थमात्रस्य लेखके अपेक्षितम् असाधारणसामर्थ्यं ध्वनयति। श्रीमदाचार्यमध्वस्य च ग्रन्थाः वेदादिसर्वमूल शास्त्रार्थनिर्णायकाः स्वयं सर्वमूलनामाभिधाः। तेषामपि व्याख्यानं व्याख्यातुः अतिशायितम् सामर्थ्यं द्रढयति। तत्र निदर्शनीभूताः श्रीमन्तः डा. बन्नञ्जे गोविन्दाचार्यः।

बन्नञ्जे गोविन्दाचार्यकृतयः बह्व्यः बहुविधाश्च। काश्चिद्देवभाषीयाः काश्चिच्च देशभाषीयाः। पुनः काश्चित् स्वतन्त्राः, काश्चिच्च व्याख्यानरूपाः पाठसम्पादनात्मकाश्च। आचार्यकृतिषु काचिद्दृष्टिः विद्यते। तत्र शुद्धपाठ-सम्पादनात्मिका काचित्। मध्वाचार्याणां साक्षात् सम्बन्धवतांपण्डिताचार्यवंशीयानाम् ग्रन्थानां सम्पादनं तत्रापि पुनः शुद्धपाठस्यान्वेषणम् विशिष्टं योगदानम्। न हि अप्रकाशितत्वमेव प्रकाशने कारणम्, किन्तुतद्व्याख्यानं विशेषतया।

यद्यप्यत्र बन्नञ्जे गोविन्दाचार्यैः आनन्दमालायाः पाठसम्पादनं कृतम्। परं न हि आचार्याणां कृतिषु मक्षिकालिपिकरणमस्ति (नोणप्रति इति भाषायाम्)। तत्र तत्र अपेक्षितेषु स्थलेषु व्याख्यानमकृत्वा अग्रे सरणं नैव सम्भवति। अतः पाठसम्पादनमपि लघ्वी व्याख्या इत्येव मन्तव्यम्। तद्भागधेयमस्माकम्। तत्रोदाहरणार्थम्-व्याख्यानं- मूले 'नचेश्वरस्याक्रियत्वं कर्तृत्वनिवारकम्' इत्यस्ति। तत्र पादटिप्पण्यां तद्व्याख्यानम्- अक्रियत्व-मित्यक्रियमाणत्वमेव। युज्यतेतत् सर्वकर्तुरित्याह - नचेत्यादिना। अत एव 'सर्वकर्ता न क्रियत' इत्याह आचार्यः। न विक्रियते च। तेन उपादानता एव निरस्ता। न निमित्तता। लघुवाक्येपि गर्भीभूतस्याशयस्य अभिज्ञानम् अपूर्वमपि समधीतसर्वमूले आचार्ये किन्तत्र चित्रम्।

अपि च आनन्दमालायां- 'अतः परममङ्गलो मुख्येष्टदेवो भगवान्....' इत्यादि। अस्य व्याख्यानं च ' परममङ्गल इत्यतश्शब्दस्यैवार्थान्तरम्। मुख्येष्टदेव इति कार्यतावादापनोदनम्...... तदेवाह इष्टफलदत्वात् इति अतःशब्दार्थोयम्' । यद्यपि अणुभाष्यम् अत्यन्तं संक्षिप्तमिति तद्व्याख्यातम् नारायणपण्डिताचार्यैः। तस्यापि अनतिविस्तृतत्वात् व्याख्यानसापेक्षमिति गोविन्दाचार्याणां व्याख्यानमपेक्षितम् इति तद्व्याख्यानदर्शनादेव प्रतिभाति।

## आशयाविष्करणचातुर्यम्

'आगमोदितः' इति अणुभाष्ये अस्ति। आनन्दमालाव्याख्यानव्याजेन मूलस्यैव आशयाविष्कारः कृतः आचार्यैः। तद्यथा- निर्दोषं वाक्यम् आगमः अत एवैतावन्तमर्थमभिसूचयितुं तत्पदमुपादत्त भगवानागमोदित इति। अन्यथा शास्त्रोदितो वेदोदित इत्यवक्ष्यत्। उक्तं च 'प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य हि' इति। नह्यत्रैवैवं व्याख्यानम्, परन्तु तत्र तत्रैवमेव व्याख्यानं विद्यते।

यद्यपि आचार्यैः किं व्याख्यातमिति नाधिकं मृग्यमस्ति। पाठ-सम्पादनस्यैव लक्ष्यत्वात्। आनन्दमालायाः अध्येतारस्तु आचार्यैः बहूपकृताः ज्ञेयाः। आनन्दमालायाः यत्र यत्र श्रुतयः संस्पृष्टाः तत्र सर्वत्रापि भाष्यगताः श्रुतयः पादटिप्पण्यां निबद्धाः। मूलस्यावगमने ये प्रमेयाः सामान्येन अपेक्षिताः भवन्तिते सर्वेऽपि तत्त्रैव मूलाधस्तात् प्रदत्ताः। पूर्वं प्रदर्शिताः अंशाः स्थालीपुलाकमाश्रिताः। न हि सर्वस्यापि गोविन्दाचार्ययोगदानानां निरूपणं लक्ष्यमस्ति। तस्यैव ग्रन्थान्तरप्रसङ्गात्। तावानस्ति विनिवेद्यप्रसङ्गः।

## प्रयोगसौन्दर्यम्

बन्नञ्जे गोविन्दाचार्याणां भाषामाधुर्यविषये नैव वक्तव्यमस्ति। द्राक्षायाः माधुर्यवर्णनमिव। 'पौनःपुन्येन ग्रन्थगौरवं श्रोतृशेमुषिमधिरोहितुमाह', यद्यप् यविषयत्वात्प्रतिपाद्यत्वमपि समस्तीति पुरस्तात् प्रास्तावि। तथाप्यभ्युपगम्य इदम् दोषान्तरमुच्यते- तर्हि तद्भेद इति। संसृष्टिः सर्वापिहि भेदेन गर्भिणी

भवति। इत्यादयः काव्यधर्माः अकाव्येऽपितत्र तत्र स्वभावकवेः वाक्येषु सहजतया अहम्पूर्वमहम्पूर्वं समुद्भवन्ति।

प्रधानं तावदत्र पाठसम्पादनमेव। न ह्येकेनैव ताळपत्रेण पाठसम्पादनमत्र न विहितम्। चत्वारः पाठा अत्र विमृष्टाः। अथापि क्वचित् प्रचलितः पाठः प्राचीनपाठः इत्यपि पादटिप्पण्यां उल्लिख्यते। पाठेषु एतेषु शुद्धपाठः तत्त्र तत्त्र युक्तिपूर्वकं च तर्क्यते। क्वचित् पाठान्तरवैशिष्ट्यमप्युदघाटि, तद्यथा मूलपाठे यद्यप्यस्मदाचार्यादयो मध्वसूक्तिसन्दर्शितार्थान् इत्यस्ति परस्मिन् च अस्मदाचार्याग्रयः मध्वसूर्यसन्दर्शितार्थान् इति च। द्वितीयपाठोऽनादृतश्चेदपि न तिरस्कृतः आचार्यैः। तत्पाठस्यापि अर्थविशेषप्रख्यानेन विभूषयाम्बभूव च। अतः बहुतरपाठाः अवलोकिताः इति तु स्पष्टम्। अपूर्वस्य कस्यचित् प्राचीनग्रन्थस्य प्राप्तिमात्रेण तत्प्रकाशयितुं नैव त्वरते आचार्यः। किन्तु शुद्ध पाठादिगुणानामाधानमपेक्षते।

****

# श्रीमद्भागवतपुराणोक्तनाडीपात्रस्य चिन्तनम्

डा.रमेश वासुदेवराव्

## सारांशः

अस्मिन् प्रबन्धे भागवतपुराणोक्तदिशा नाडीपात्रस्य चिन्तनं विज्ञानरीब त्या विवरिष्यामः। द्वौ कोष्टकौ चात्र दत्तौ यस्मिन् कालभारयोः परिमाणौ चोक्तौ यथोक्तं भागवते। प्रचलिष्यमाणरीत्या तेषां सङ्गमनं च कृतमत्र। द्रवगतिशीलताशास्त्रानुसारेण (Fluid Dynamics) नाडीपात्रस्य विश्लेषणं कृत्वा तादृशपात्रे जले निक्षिप्ते सति एकस्मिन्नेव घटिकायां निमज्जितं भवतीति च प्रदर्शितमत्र ॥

## प्रस्तावना

भागवततृतीयस्कन्धे विशेषेण ब्रह्माण्डस्य सृष्टिरुक्ता। तत्र कालाऽव काश-द्रव्यादीनां च सृष्टिः प्रस्ताविता। एतस्मिन्नेवाऽवसरे कालगणनार्थं नाडीपात्रस्य विवरणं च दत्तम्।

**द्वादशार्द्धपलोन्मानं चतुर्भिश्चतुरङ्गुलैः ।**
**स्वर्णमाषैः कृतच्छिद्रं यावत् प्रस्थं जलं पिबेत् ॥** (३-१२-९)

तथा च द्वादशार्धपलेन, षड्पलेन कपालाकृतिं शुल्बमयं घटीपात्रं निर्मेय-म्। तस्मिंश्च पात्रे जलकटाहे निक्षिप्ते सति अधःकृतरन्ध्रेण यावता कालेन प्रस्थं जलं पिबति निमज्जति च सा घटिका नाडी चेति कथ्यते। रन्ध्रश्च चतुर्माषपरिमितस्वर्णरचितया चतुरङ्गुलदीर्घया सूच्या करणीयः। आर्खिमिडिस् सिद्धान्तानुसारेण (Archimedes Priniciple) षड्पल-प्रस्थयोः समाहारे कृते यावद्भवति तावता जलप्रमाणेन प्रपूर्य कपालाकृतिपा-त्रं निर्मेयं च।

भागवतानुसारेण [१] भागवततात्पर्यानुसारेण तथा श्रीबन्नञ्जे गोविन्दा-चार्यस्य व्याख्यानुसारेण [२] द्वौ कोष्टकौ अत्र प्रदत्तौ। तौ प्राचीनस्य तथा

अद्य प्रचिलितस्य कालद्रव्यपरिमाणयोः सङ्गमनं कुर्वीते। ताभ्यां कोष्टकाच भ्यां द्रवगतिशीलताशास्त्रानुरीत्या च नाडीपात्राध्ययनं कुर्मः।

**कोष्टकः १ – कालगणनासूची**

1 मुहूर्तः = 48 minutes (2880 seconds)

2 घटिके = 1 मुहूर्तः

[ 1 घटिका = 48/2 = 24 minutes = 2880/2 = 1440 seconds ]

15 लघूनि = 1 घटिक

[ 1 लघु = 1440/15 = 96 seconds ]

15 काष्ठाः = 1 लघु

[ 1 काष्ठा = $\frac{96}{15}$ = $\frac{32}{5}$ seconds ]

5 क्षणाः = 1 काष्ठा

[ 1 क्षणः = $\frac{32}{25}$ seconds ]

3 निमेषाः = 1 क्षणः

[ 1निमेषः = $\frac{32}{75}$ seconds ]

3 लवाः = 1 निमेषः

[ 1 लवः = $\frac{32}{225}$ seconds ]

3 वेधाः = 1 लवः

[1 वेधः = $\frac{32}{675}$ seconds ]

3 त्रुटयः = 1 वेधः

[ 1त्रुटिः = $\frac{32}{2025}$ seconds ]

3 त्र्यणुकाः = 1 त्रुटिः

[1 त्र्यणुकः = $\frac{32}{6075}$ seconds ]

3 द्व्यणुकाः = 1 त्र्यणुकः

[1 द्व्यणुकः = $\frac{32}{18225}$ seconds ]

2 परमाणू = 1 द्व्यणुकः

1 परमाणुः = $\frac{16}{18225}$ seconds

**कोष्टकः २ – भारपरिमाणसूची**

1 प्रस्थः = 4 कुडवाः [ = 560 grams]

1 कुडवः = 4 पलानि [ = 140 grams]

[ 1 पलम् = 3 तोलकानि [3] = $\frac{140}{4}$ grams]

1 पलम् = 4 कर्षाः [ = 35 grams]

1 कर्षः = 16 माषाः [ = $\frac{35}{4}$ grams]

1 माषः = 4 गुञ्जाः [ = $\frac{35}{64}$ grams ]

1 गुञ्जः = 4 काकणिकाः [ = $\frac{35}{256}$ grams ]

1 काकणिकः = $\frac{35}{1024}$ grams

एतयोः कोष्टक अनुसारेण इदं ज्ञायते। ६ पलानि २१० grams, १ प्रस्थः इति ५६० grams, ४ स्वर्णमाषाः २.१८७५ grams इति। १ नाडी अथवा घटिकेति च २४ minutes. ।

अत्र भागवततात्पर्योक्तपाद्मवचनं च ग्राह्यम् -

**प्रस्थस्य नाडीपात्रस्य षड्वलस्य शुभे जले।**
**भाराधिक्येनोदकेन क्षिप्रपूर्तिर्भविष्यति।**

**अतिशैत्ये कळंके च मान्द्ये नैव तु पूरणम्।**
**तस्मात् वसन्तकाले च प्रयागस्थोदकेन च।**
**नाडीशुद्धिः परीक्ष्या स्यादन्यथा न समं भवेत्।**

## कपालाकृतिपात्रस्य निमज्जनकालव्युत्पत्तिः

अत्र कपालाकृतिः पात्रं परिगृह्यते। पात्रस्य भारः (weight) W grams, आन्तरं त्रिज्या(inner radius) R cms, पात्रस्य स्थौल्यं (thickness) dR cms रन्ध्रस्य क्षेत्रं(area) dA $cm^2$ , जलस्य घनत्वं(density) च **r** grams/$cm^3$ . एतत् सर्वं १ चित्रे सूचितम्।

जलकटाहे निक्षेपणानन्तरं आरम्भक्षणे पात्रं '$Y_o$' cm निमज्जितं भवति। आर्खिमिडिस् सिद्धान्तानुसारेण पात्रभारस्य समानभारो जलं वि-स्थापितं भवति। एतेन समीकरणं(equation) (१) लभ्यते।

चित्रम् १.

$$W = r\left(\pi R y_o^2 - \frac{\pi y_o^3}{3}\right)$$

जलकटाहे निक्षिप्तपात्रस्य किञ्चित्कालानन्तरं निमज्जनपूर्वस्थितिः २ चित्रे सूचिता। पात्रं जले 'Y' cm निमज्जितं सत् पात्रस्य अन्तरे 'X' cm

औन्नत्येन जलं पूरितं भवति। पुनः आर्खिमिडिस् सिद्धान्तेन पात्रविस्थापित-जलस्य भारः, अन्तस्थजलसहितपात्रभारसमः भवति। ततः समीकरणं (equation) (२) जायते।

$$W + r\left(\pi R x^2 - \frac{\pi x^3}{3}\right) = r\left(\pi R y^2 - \frac{\pi y^3}{3}\right) \qquad (२)$$

निमज्जनक्षणे y=R, अन्तस्थजलस्य औन्नत्यं च $X_f$ cms भवतु, पुनः पूर्वोक्तसिद्धान्तेन समीकरणं (३) उपलभ्यते।

$$W + r\left(\pi R X_f^2 - \frac{\pi X_f^3}{3}\right) = \frac{2}{3}\pi r R^3 \qquad (3)$$

चित्रम् 2.

अथ निमज्जनकालस्य व्युत्पत्तिं कुर्मः। २ चित्रे सूचितप्रकारेण रन्ध्रद्वारा पात्रस्यान्तरं जलं 'V' cm/sec वेगेन प्रविशति। ३ चित्रे सूचितप्रकारेण $\delta t$ secs अल्पसमये $\delta Q$ cm3 जलप्रवेशेन पात्रे $\delta x$ cms प्रमाणेन कश्चित् औन्नत्यवृद्धिः भवति। रन्ध्रद्वारे बर्नुलिसिद्धान्तस्य प्रयोगेण ( by application of Bernoulli's principle) (४) समीकरणं उपजायते।

$$rgy = rgx + \frac{1}{2} r v^2 \qquad (४)$$

उपरिस्थनसमीकरणे g गुरुत्वाकर्षणशक्तेः त्वरां (acceleration due to gravity) सूचयति, तस्य आयामाश्च(dimensions) cm/sec2, (४) समीकरणस्य पुनः संस्कारेण (५) समीकरणं उपजायते।

$$v = \sqrt{2g(y - x)} \qquad (५)$$

चित्रम् 3.

$\delta Q$ जलप्रमाणं च एवं प्रकारेण व्यञ्जयितुं शक्यते यथा लिखितं (६) समीकरणे।

$$\delta Q = C_d\, dA\, v\, \delta t \qquad (६)$$

अत्र $C_d$ निर्वहणगुणाङ्कं (discharge coefficient)[4] सूचयति, तस्य मूल्यं च ०.६११ वृत्ताकारस्य रन्ध्रस्य भवति। अस्मिन् विश्लेषणे तन्मूल्यश्च नियतमस्ति (constant) समस्तप्रपूर्णप्रक्रियायाम्।

$\delta Q$ प्रमाणेन जलप्रवाहः पात्रे $\delta x$ प्रमाणेन औन्नत्यं वर्धयति। तयोः सम्बन्धश्च (७) समीकरणेन सूचितः।

$$\delta Q = \pi[R^2 - (R - x)^2]\delta x \qquad (७)$$

(६) (७) समीकरणयोः सहायेन $\delta t$ साधिते सति तस्य अवकलन-समीकरणं (differential equation) (८) च उद्भवति। तस्य च समाकलनेन(by integrating) (९) समीकरणं जायते। तेन च ज्ञायते निमज्जनस्य कालः। अत्र Xf निमज्जनसमये पात्रस्यान्तरे औन्नत्यं सूचयति।

$$dt = \frac{\pi(2Rx - x^2)}{C_d dA\sqrt{2g(y - x)}} dx \qquad (८)$$

$$T = \int_0^{Xf} \frac{\pi(2Rx - x^2)}{C_d dA\sqrt{2g(y-x)}} dx \quad (९)$$

X तथा Y औन्नत्ययोः सम्बन्धश्च (२) समीकरणरीत्या नियम्यते। पात्रस्य स्थौल्यगणने सति जलस्य विस्थापनं पात्रस्य बाह्यत्रिज्यया निरूपितः, अतः (२) समीकरणस्य सव्यभागे R स्थाने R+dR क्षिप्ते सति समुचितः भवति तथा सम्बन्धश्च (१०) समीकरणेन दृश्यते।

$$W + r\left(\pi R x^2 - \frac{\pi x^3}{3}\right) = r\left(\pi(R + dR)y^2 - \frac{\pi y^3}{3}\right) \quad (१०)$$

पात्रस्य भारश्च W इति नियते सति, (९) समीकरणं च सरलतया निरूपयितुं शक्यते यथा सूचितं च (११) समीकरणेन.

$$TdA = I \qquad (११)$$

पात्रस्य भारः त्रिज्या च निश्चिते सति समाकलिताङ्कः $I$ (integral value) च निश्चितो भवति।

स च x y इत्यनयोः मूल्यं एव अवलम्बते। (१०) समीकरणद्वारेण $I$ इत्यस्य मूल्यं च सङ्ख्यात्मकसमाकलनेन(numerical integration) निश्चेतुं शक्यते। तस्य विवरणं नात्र प्रस्तापितं विस्तरभयात्।। इति निश्चितं समाकलनं (definite integral) $X_f$ (needs to be integrated up to upper limit of) पर्यन्तं समाकलनीयम्। (३) समीकरणेन $X_f$ ज्ञातो भवति। पात्रस्य स्थौल्ये परिगणिते सति बाह्यत्रिज्यया (३) समीकरणस्य सव्यभागः विपरिणमति। तच्च (३A) समीकरणे निरूपितम्।

$$W + r\left(\pi R X_f^2 - \frac{\pi X_f^3}{3}\right)$$
$$= \frac{2}{3}\pi r(R + dR)^3 \qquad (३A)$$

$$I = \int_0^{Xf} \frac{\pi(2Rx - x^2)}{C_d\sqrt{2g(y - x)}}dx \qquad (१२)$$

पात्रस्य भारः त्रिज्या च निश्चिते सति (११) समीकरणेन T तथा dA अनयोर्मध्ये सरलतरः 'अतिपरवलीयः' सम्बन्धः( simple hyperbolic relation) निरूपितो भवति।

विशेषतः भागवतोक्तपरिमाणानि पश्यामः, पात्रस्य भारः षट् पलं, तत् 210 gms भवति, निमज्जनसमये पात्रे प्रस्थं जलं पीता- मस्ति च, जलस्य घनत्वं 1gm/cc इति मत्वा प्रस्थजलस्य भारः 560gms भवति। अतः आर्खिमिडिस् सिद्धान्तेन (Archime- des Priniciple), 210+560 = 770gms जलं पात्रेण विस्थापितं भवति । अतः पात्रस्य आयतनं(volume) 770cc च भवति। ततश्च कपालाकृतिपात्रस्य बाह्यत्रिज्या च अनेन समीकर- णेन प्राप्यं $\frac{2}{3}\pi r\tilde{R}^3 = 770,$ सा च त्रिज्या। शुल्बमये पात्रे सति, तस्य घनत्वं $r_c$ =8.96gms/cm$^3$ , यदा पात्रस्य भारः 210gms, तथा त्रिज्या च 7.164cms, तदा पात्रास्य स्थौल्यं(thickness) dR , अनेन समीकरणेन लभ्यते $2\pi\tilde{R}^2 dR r_c = 210$ ।स्थौल्यं dR=0.73cm भवति। पात्रस्य आन्तरी त्रिज्या $R = \tilde{R} - dR = (7.164 - 0.73) = 7.091cm$ ।
'रन्ध्रश्च चतुर्माषपरिमितस्वर्णरचितया चतुरङ्गुलदीर्घया सूच्या

करणीयः' इत्युक्तं पूर्वत्र। तादृशस्य रन्ध्रस्य क्षेत्रमूलं(value of area) तथा व्यासमूलं(value of diameter) च (१३) समीच करणेन ज्ञायते। अत्र समीकरणे $w_g$ = चतुर्माषस्वर्णस्य भारः = 2.1875gms, $\rho_g$ = स्वर्णस्य घनत्वं = 19.3gms/cm$^3$, $L$ = सूच्याः दैर्घ्यं = 4(inches) x 2.54 = 10.16cms. तैः प्रमाणैः $dA$ =0.011153cm$^2$, $d_g$ = 0.119165cm. भागवतोक्तपात्रस्य (३A) समीकरणेन $x_f$ = 5.8979cms.

$$(dA)(L)(\rho_g) = w_g, \quad dA = \frac{\pi}{4}d_g^2 \qquad (१३)$$

एतैः सर्वैः प्रमाणैः (९) समीकरणेन च निमज्जनस्य कालः $T$ = 1440 secs = 24 mins इति लभ्यते। तथा प्रतिज्ञा च साधिता भवति ॥

**ग्रन्थान्तरेषु नाडीपात्रस्य उल्लेखनम्**

विष्णुपुराणे[2] पठ्यमाने एकस्मिन् श्लोके रीत्यन्तरेण परिमाणमुक्तम्-

**उन्मानेनाम्भसः सा तु पलान्यर्द्धत्रयोदश।**
**हेममाषैः कृतच्छिद्रा चतुर्भिश्चतुरङ्गुलैः ॥**
**मागधेन प्रमाणेन जलप्रस्थस्तु संस्मृतः ॥**

अनेन प्रमाणेन, 'पलान्यर्द्धत्रयोदश' यदा पात्रस्य भारः सार्धषट्पल-मेव तदैव निमज्जनकालः नाडी भवति।

दैवज्ञाः पुना रीत्यन्तरेण कथयन्ति[2]। तद् यथा -

**शुल्बस्य दिग्भिर्विहितं पलैर्यत् षडङ्गुलोच्चं द्विगुणायतास्यम्।**
**तदम्भसा षष्टिपलैः प्रपूर्यं पात्रं घटार्धप्रतिमं घटी स्यात्।**
**सत्र्यंशमाषत्रयनिर्मिता या हेम्नः शलाका चतुरङ्गुला स्यात्।**
**विद्धं तया प्राक्तनमत्र पात्रं प्रपूर्यते नाडिकयाऽम्बुभिस्तत् ॥**

अत्र तु चतुरङ्गुलया दीर्घया सत्र्यंशमाषत्रयनिर्मितया हेम्नः शलाकया रन्ध्रस्य निर्माणमुक्तम् । परन्तु तादृशः रन्ध्रः अस्मिन् प्रबन्धोक्तप्रकारेण नाडी कालस्य मापकः न भवति । किन्तु एकोननवतिस्वर्णमाषैः कृतया चतुरङ्गुलया दीर्घया शलकया रन्ध्रे कृते सति नाडिकयाऽम्बुभिस्तत् पात्रं प्रपूर्यते । कथं सङ्गमनीयं इत्यत्र महान्तः प्रमाणम् ॥

## कृतज्ञतासमर्पणम्

प्रबन्धस्य परिशोधने सहकारिणः, वि । माळगी रामाचार्यः, वि । तोंटंतिल्लाय विजयसिंहाचार्यः, भारतीयविज्ञानमन्दिरस्य(Indian Institute of Science) Prof. एस्. एम्. देशपान्डे, एतेभ्यः हार्दाः प्रणामाः । एनं प्रबन्धं भागवतादिशास्त्रोपदेष्टॄणां अस्मद्गुरूणां बन्नञ्जे गोविन्दाचार्याणां पादारविन्दयोः सप्रणति समर्पयामि ॥

****

## ग्रन्थसूची

[1] श्रीमद्भागवतम्, वैष्णवपाठः, Sri Pejavara Adhokshaja Mutt, Udupi,Poornapragna Samshodhana Mandiram, Edited By P.S.Sheshagiri Acharya. Fourth Edition 2012.

[2] A commentary on Sri Bhagavata Maha Purana, Sri Anandatirtha Bhagavatpada, Edited with several critical notes by Bannanje Govindacharya, Akhila Bharata Madhva Maha Mandala Publication, 1980.

[3] https://en.wikipedia.org/wiki/Tola_(unit)

[4] Discharge equation of a circular sharp-crested orifice, PRABHATA K. SWAMEE, Professor of Civil Engineering, National Institute of Tech. Jalandhar, Jalandhar, 144 011, India. Journal of Hydraulic Research Vol. 48, No. 1 (2010), pp. 106– 107.

# प्राणसूत्राणि

डा. म. जयरामः

**उपोद्घातः**

बन्नञ्जे गोविन्दाचार्याः वेदेषु वेदान्ते चकृतभूरिपरिश्रमाः। बहूनां ग्रन्थानां विस्तृतानि सङ्क्षिप्तानि च संस्कृतव्याख्यानानि तैः रचितानि। नैकाः संस्कृतकृतयः कन्नडभाषया तैः अनूदिताः। तेषां प्रवचनान्यपि अत्यन्तं ज्ञानपूर्णानि प्रेरकाणि च। इत्थम् अत्यन्तं वैदुष्यपूर्णाः ते एकं विशिष्टं योगग्रन्थमपि व्यरीरचन्। स्वोपज्ञव्याख्यापि तस्य ग्रन्थस्य निबद्धा तैः। तस्य योगग्रन्थस्य नाम 'प्राणसूत्राणि' इति। आधुनिके काले प्रायः जगति सर्वोऽपि मानवः योगस्य कमपि प्रकारम् अनुतिष्ठत्येव। योगस्य आसनं, प्राणायामः, ध्यानम् इत्यादीन्यङ्गानि प्रसिद्धानि। तत्रापि योगाङ्गेषु प्राणस्थानीयः प्राणायामः। हठयोगप्रदीपिकायाः एकं वचनम् अत्र स्मरणार्हं यच्च प्राणायामपारम्यं बोधयति -

> **प्राणायामैरेव सर्वे प्रशुष्यन्ति मला इति।**
> **आचार्याणां तु केषाञ्चित् अन्यत् कर्म न सम्मतम्॥** (२.३७)

किञ्च - 'प्राणायामः परं तपः' (मनुस्मृतिः २.८३) इत्येतादृशानि प्राणायामवैशिष्ट्यज्ञापकानि बहूनि विद्यन्ते वचनानि। सर्वास्वपि वैदिकक्रियासु 'आचम्य, प्राणानायम्य' इत्येतत् वचनम् आदावेव श्रूयते, तदनुगुणश्चानुष्ठीयते। वैदिककर्मानुष्ठानयोग्यताप्रदायकत्वमपि प्राणायमस्य विद्यते इत्यपि अनेन व्यज्यते। पतञ्जलिमहर्षिणापि 'ततः क्षीयते प्रकाशावरण्म्' (यो.सू २.५२) इति प्राणायामस्य तमोनिवर्तकत्वम्, तेनच ज्ञानप्रदत्त्वंसमसूत्रि। इत्थं महत् विद्यते वैशिष्ट्यं प्राणायामस्य। प्राचीनेषु ग्रन्थेषु प्राणायामस्य महत्त्वं बहुधा कथितं चेदपि अर्वाचीने काले देववाण्या आचार्यैः बन्नञ्जे गोविन्दाचार्यैः योऽयं प्राणसूत्राख्यः ग्रन्थः निबद्धः तस्य परिचयः, वैशिष्ट्यद्योतनं च अनेन लेखेन कर्तुमुद्दिष्टम्।

## ग्रन्थस्वरूपम्

तत्रादौ ग्रन्थस्य स्वरूपंप्रदर्श्यते।अयं ग्रन्थः पञ्चाध्यायात्मकः। अत्र संहत्य १०८ सूत्राणि विद्यन्ते।

अध्यायानां नामनि तद्गता च सूत्रसङ्ख्या इत्थं वर्तते -

- प्रथमः अनिरुद्ध-प्राणपादः। अत्र १६ सूत्राणि विद्यन्ते।
- द्वितीयः प्रद्युम्नापानपादः। अत्र २० सूत्राणि विद्यन्ते।
- तृतीयः सङ्कर्षण-व्यानपादः। अत्र १६ सूत्राणि विद्यन्ते।
- चतुर्थः वासुदेवोदानपादः। अत्र २० सूत्राणि विद्यन्ते।
- पञ्चमः नारायण-समानपादः। अत्र ३६ सूत्राणि विद्यन्ते।

अत्रावलोकितुं शक्यं यत् – अध्यायनामस्वेव किञ्चन वैशिष्ट्यं विद्यत इति। अस्य ग्रन्थस्य पञ्चाध्यायाः अनिरुद्धः, प्रद्युम्नः, सङ्कर्षणः, वासुदेवः इति चतुरः व्यूहान्, परं नारायणं चशिरसा शीर्षकत्वेन वहन्ति। किञ्च प्राणस्य पञ्च वृत्तयः अपि शीर्षकेषु प्रतिफलिताः दृश्यन्ते। इदं च बोधयति यत् -प्राणायमविषयकः अयं ग्रन्थः, केवलं श्वासोच्वासाभ्यास-विधान-बोधकः स्वास्थ्यविचारपरः न। किन्तु वेदान्तसम्प्रदायानुगुणं योग-सम्प्रदायानुगुणं च ईश्वरप्रणिधानपूर्वकं भगवत्तत्त्वावगतयेचैतन्यस्वरूपेणावस्थानाय च क्रियमाणः प्राणनियमविधानबोधकः इति। एतदुद्देशेन क्रियमाणः प्राणायामः स्वास्थ्यमपि प्रददाति इत्यत्र नास्ति संशीतिलेशोऽपि। अधुना अध्यायशः अस्य ग्रन्थस्य परिचयः कार्यते।

## प्राणायामो नाम कः?

अध्यायसारप्रतिपादनात् पूर्वं तत्रादौ अस्य ग्रन्थस्य प्रथमसूत्रस्यभाष्ये प्राणायामस्यकेचन प्राथमिकाः विचाराःस्पष्टीकृताः अवधेयाः वर्तन्ते। तत्र तावत् प्राणो नाम कः इति ग्रन्थप्रणेता कथयति। तदित्थम् -

'प्राणो बलम्। प्राणा इन्द्रियाणि। प्राणापानाद्या अपि प्राणाः। पञ्च दश वा। प्रणेता च मुख्यः। जीवाश्च प्राणाः। परमश्च प्राणः। एक एव पञ्चधा प्रवर्तमानः प्राणा इत्युच्यते। चतुर्धा वा। अशना पिपासाऽपानश्च मृत्युश्चेति चतुर्विधः। एक एव महान् वायुः सर्वदेवेषु संस्थितः।'

प्राणस्य सर्वेऽपि प्रभेदाः, प्रभावाः च विस्पष्टं प्रकटिताः भाष्यवचनैरेभिः। अनेन यस्य प्राणतत्त्वस्य विषये ग्रन्थः प्रणीतः तद्विषये बोधशुद्धिः भवति अध्येतॄणाम्। प्राप्तव्यस्य विषये एव अस्पष्टतायां सत्यां साधनानि कथां सश्रद्धम् अनुष्ठातुं शक्यानि ? अतः समग्रे ग्रन्थेऽस्मिन् पूर्वोद्धृतानि वचनानि अत्यन्तमेव मननीयानि।

आयामशब्दः अपिग्रन्थप्रणेत्रा निरुक्तः। स चइत्थम् -

'प्राणानां यथायथमायामः। वशीकरणं विजय इत्येतत्। यथायथमिति कथम् ? क्वचित् प्रणयिनीमिव तरुणीं प्रणयप्रावण्येन। क्वचिदपि च प्रभुमिव प्रोद्धतं प्रपत्तिप्राग्भारेण। तद् यथायथा सम्भवति तद्विधानं प्रस्तूयते। '

आयामशब्दः विजयः वशीकारः इत्यनयोः अर्थयोः ग्रन्थेऽस्मिन् प्रयुक्तः इति, स च वशीकारः विजयो वा नानाविधैः उपायैः प्राप्तव्यः इति च पूर्वोद्धृतैः वचनैः प्रभोः तरुण्याः च उदाहरणेनसरसं ग्रन्थकर्त्रा विचारः प्रस्तुतः अवधेयः।

## प्रथमः अनिरुद्ध-प्राणपादः

वेदः प्राणस्य महत्त्वं गायति -

**तमेव मृत्युममृतं तमाहुः। तं भर्तारं तमु गोप्तारमाहुः।**
**स भृतो भ्रियमाणो बिभर्ति। य एनं वेद सत्येन भर्तुम् ॥**

(तैत्तिरीयारण्यकम् ३.१४)

प्राणः यदि सम्यक्(प्राणायामादिभिः, आहारादिनियमैः) भ्रियते, तर्हि सः अस्मान् बिभर्ति। तेन वयम् इतरान् अस्मत्सहजीवनं?? सम्यक् पालयितुं

प्रभवामः इति वेदभाष्यकाराः सायणाचार्याः व्याख्यान्ति। एतदनुगुणमेव प्राणसूत्रग्रन्थकर्तारः गोविन्दाचार्याः अपि ग्रन्थस्य प्रथमाध्यायस्य अवतरणिकाभाष्येकथयन्ति–

'प्रसन्नो हि वशो क्रियते। तदर्थोऽयमधिकारः' इति।'

अत्र प्राणप्रसादसिद्ध्यर्थं- पूर्वाङ्गत्वेन आसनम् उल्लिखितम्। किन्तु आसनानुष्ठानविधानं तुविस्तरेण द्वितीये पादे प्रतिपाद्यते। अस्मिन् प्रथमपादे तावत् - प्राणायामाभ्यासाय शुचिः देशः, नदीतटाकोद्यानादिरूपः चेतव्यः इति ग्रन्थकर्तुः अभिमतं सविस्तरं प्रकटितमस्ति। ग्रन्थकारः अभिप्रैति यत्प्राणायामानुकूलः देशः -

●वालुका-सूक्ष्मपाषाणादिभिः विहीनः भवेत्

●नातिशीतः नात्युष्णः भवेत्

●मनोनुकूलः च भवेत्।

सूत्रकारः पुनः कथयति यत् -

●केवलायां भूमौ प्राणायामः न कर्तव्य इति

●कुशाजिनकम्बलैः आसनं निर्मितं भवेत्

ततश्च - पूर्वां दिशम्, उत्तरां वा दिशमभिमुखीकृत्य अनुष्ठाता उपविशेत् इति कथयति सूत्रकारः। तत्र च एतयोः दिशोः एव चयनस्य कारणं बोधयति ग्रन्थकृत् –

'ध्रुवानुकूल्यात्॥ १ ॥ १४॥' इत्यनेन सूत्रेण।

ग्रन्थकृत् अभिप्रैति यत् - प्राचीं दिशम्, उत्तरां वादिशम् अभिमुखीकृत्य उपविशतः साधकस्य उत्तरध्रुवस्य आकर्षणं, पितृयाणपरिपन्थिता (अर्थात् देवयानोन्मुखता च) च क्रमेण सिद्ध्यति।

यथा विस्पष्टतया अनुष्ठानयोग्यः देशः निर्दिष्टः ग्रन्थकर्त्रा। एवं कियन्तं कालम् प्राणायामः अभ्यस्तव्यः इति कालविषयकं स्वीयं चिन्तनं निगदितम्-

**'आभ्यासपाकम् ॥१ ॥१५ ॥' - इत्यनेन सूत्रेण।**

पूर्वोक्तनियमपूर्वकम् प्राणायामाः अभ्यस्तव्याः। तेन हि अभ्यासस्य परिपाकः सिद्ध्यति इति अभिप्रैति ग्रन्थकृत्। तादृशाभ्यासपरिपाकपर्यन्तम् अभ्यासः आवर्तनीयः।

इत्थं च प्रथमे पादे साधारणकारणभूतौ देशकालौ विवृतौ सूत्रकारेण। एतेषां विषयाणां विस्तारः योगयाज्ञवल्क्यसंहितायाः द्वितीये अध्याये (१३ शतमानम्), हठयोगप्रदीपिकायाः प्रथमोपदेशे (१५ शतमानम्) च तपोवनम्, योगमठः इत्येतेषां विवरणावसरे द्रष्टुं शक्यः।

**द्वितीयः प्रद्युम्नापानपादः**

अस्मिन् पादे प्राणायामार्थमनुकूलानि आसनानि कथ्यन्ते। विशिष्य पञ्च आसनानि विवृतानि। तानि च - 'पद्मस्वस्तिकभद्रवज्रवीराणि' (२.१) पद्मासनम्, स्वस्तिकासनम्, भद्रासनम्, वज्रासनम्, वीरासनम्।

न केवलम् आसनानाम् उल्लेखः किन्तु, आसानानुष्ठानविधानमपि विधिवत् कथितमस्ति अस्मिन् पादे। प्राणायामार्थं पूर्वोक्तानि पञ्चापि आसनानि पञ्चस्वन्यतमं वा आसनमास्थेयम् इति न नियमः। एतद्विषये ग्रन्थकृत् कथयति यत् –

**'यथानुकूलं यथासुखं च ॥२ ॥२ ॥' इति।**

तन्नाम एतेषु आसनेषु अन्यतरत् यच्च सौख्यं, स्थिरतां च प्रयच्छेत् तद् अनुष्ठातुं शक्यते इति। आसनेषु ब्रह्ममुद्रा, ज्ञानमुद्रा वा आस्थेया। पादस्यास्य समापनंशवासनस्य विवरणेन कृतमस्ति।

## तृतीयः सङ्कर्षण-व्यानपादः

षोडशसूत्रात्मके अस्मिन् पादे प्राणायामस्य अन्याः काश्चनइतिकर्तव्यताः सूत्रकारेण बोध्यन्ते। तेषां बिन्दुशः सङ्ग्रहः अधः दत्तः -

१) औत्सर्गिकरूपेण प्राणायामः भोजनात् पूर्वं कर्तव्यः। यदि भोजनानन्तरं क्रियेत अवरपक्षे घटिकाकालात् (२४ निमेषाः) परं प्राणायामः कर्तव्यः।न ततः पूर्वम्। (३.२, ३)

२) मलमूत्रे विसृज्यैव प्राणायामः कर्तव्यः। (३.४)

३) प्राणायामाभ्यासकाले जायमानः स्वेदः न परिमार्जनीयः। (३.५) ग्रन्थकर्तुः इदं वचनम् - ' जलेन श्रमजातेन गात्रमर्दनम् आचरेत्' (२.१३) इति हठयोगप्रदीपिकावचनं स्मारयति।

४) वसन्तकालः प्राणायामस्य युक्ततमः कालः।(३.६)

५) कर्णादिषु शीर्षण्येषु अवयवेषु वेदनायां सत्यां प्राणायामाभ्यासः नैव कार्यः।(३.८)

६) समन्त्रकः अमन्त्रकः वा प्राणायामः कर्तव्यः। ओङ्कारः तत्र प्रशस्तः मन्त्रः। प्राणायामानुकूलः सव्याहृतिः, सप्रणवः, सशिरस्कः गायत्रीमन्त्रः कथितः (३.९)।

७) कुम्भककालस्य क्रमेण वृद्धिः कर्तव्यः। (३.१०)

८) चतुर्दशवर्षीयः प्राणायामाभ्यासस्य आरम्भं कुर्यात्। अशीतिवर्षपर्यन्तम् अभ्यासः कर्तुं शक्यः इति सूत्रकृतः आशयः। (३.११)

९) प्राणायामकाले चक्षुषी निमीलिते एव स्याताम्। क्वचित् ग्रन्थेषु कर्णपिधानमपि विहितमिति भाष्ये विचारः प्रस्तूयते। (३.१२)

१०) बन्धत्रयवित् प्राणायामं कुर्यात् इति सूत्रकारः अभिप्रैति। (३.१३-१६) अत्र विशिष्य उड्डियानबन्धः प्राणस्य विरेचनानन्तरं कर्तव्य

इत्युक्तम् अवधेयम्। लोके अभ्यासिभिः रेचकानन्तरमेव उड्डियानबन्धः विहितः चेदपि - हठयोगप्रदीपिकायां प्राणम् अन्तःकुम्भयित्वा अयं बन्ध-विशेषः कर्तव्यः इत्युक्तमस्ति। तद्विषयकं वचनमित्थम् - ' कुम्भकान्ते रेचकदौ कर्तव्यस्तूड्डियनकः (२.४५)।

किञ्च त्रिष्वपि बन्धेषु मूलबन्धस्य प्राधान्यमिति ग्रन्थकारः अभिप्रैति। (३.१६)

एवञ्च प्राणायामप्रक्रियातः पूर्वम् अत्यन्तं प्रमुखाः इतिकर्तव्यताः, प्राणायामाभ्यासिभिः अवधेयाः पादेऽस्मिन् प्रस्तुताः।

## चतुर्थः वासुदेवोदानपादः

अस्य अध्यायस्य विषयवस्तु अधिकृत्य अध्यायावतरणिकायां ग्रन्थकारः इत्थं कथयति – 'कुम्भकाङ्गं नासाजयो नाडीजयश्च चतुर्थे'।

१) नासाजयप्रकारः-आदौ नासाजयप्रकारः कथ्यते। तत्र अनुलोम-विलोमः, चन्द्रानुलोमः, सूर्यानुलोमः इति त्रिविधः क्रमः उपदिश्यते। (४.१-१०)

अ) अनुलोमविलोमः (४.१-८) - तत्र तावत् अयं क्रमः विवृतः- आदौ उभाभ्यामपि नासापुटाभ्यां निश्शेषं रेचनं करणीयम्। ततः परं द्वाभ्यामपि नासापुटाभ्यां वायोः पूरणं कर्तव्यम्। रेचकपूरकयोः कालः सम एव भवेत् आरम्भे। विषमवृत्तिः प्राणायामः अत्र स्थैर्यप्राप्त्यनन्तरमेव इति ग्रन्थकृतः आशयः। किञ्च उच्छ्वासनिःश्वासौ अत्यन्तं गाढौ पूर्णौ भवेताम्। तदर्थम् उरसः, उदरस्य शिरसः यथायोग्यं विन्यासः कर्तव्यः। इदं विवरणं ग्रन्थान्तरे दुर्लभम् (सूत्रं ४.६, तद्भाष्यं च)। अस्मिन् प्रारम्भिके अभ्यासे कुम्भकः अपि न विहितः। गाढतया श्वासोच्छ्वासस्य अभ्यासे सत्येव तदुत्तरं कुम्भकः अभ्यसितुं शक्यः इति सूत्रकारः अभिप्रैति। अस्य अभ्यासस्य आवृत्तिःपञ्चवारं, दशवारं, पञ्चदशवारं कर्तुं शक्यते। किन्तु प्रातः सायं चेति वेलाद्वये अभ्यासः कार्यः। अयम् अनुलोमविलोमः।

आ) चन्द्रानुलोमः (४.९) इति द्वितीयः प्राणायामप्रकारः बोध्यते ग्रन्थेऽस्मिन् यत्र पूरकरेचकौ वामनासापुटेन एव ।

इ ) सूर्यानुलोमः (४.१०) तृतीयः यत्र पूरकरेचकौ दक्षिणनासापुटेनैव ।

एभिः त्रिभिः अनुष्ठानैः नासाभागे सञ्चरतः वायोः जयः भवति इति ग्रन्थकृतः आशयः ।

२) नाडीजयः (४.१२-२०) - नासाजयानन्तरं नाडीजयक्रमः कथ्यते। एतदर्थं किञ्चन विशिष्टं कुम्भकरहितं नाडीशुद्धिप्रकारं प्राणायामक्रममाह सूत्रकारः। अत्र तावत् इडया पूरणं, पिङ्गलया रेचनम्, ततः परं पिङ्गलया पूरणम्, इडया रेचनं कर्तव्यम् । हठग्रन्थेषु नाडीशुद्धिक्रमः कथितश्चेदपि तत्र अन्तःकुम्भकः विहितः अत्र तावत् स च न कथितः । किञ्च - इडानाड्याः पिधानं मध्यमानामिकाभ्याम् इति कथितम् (४.१४) अवधानार्हम् । हठग्रन्थेषु 'मध्यमातर्जनीभ्यां विना' (२.६४) प्राणायामकाले अङ्गुलीभिः नासापुटस्थप्राणनियन्त्रणं करणीयमिति कथितमस्ति। अत्र ग्रन्थे तावत् मध्यमायाः अङ्गुल्याः उपयोगः न निषिद्धः ।

अस्याः नाडीशुद्ध्याः अनुष्ठानम् - साधकस्तरानुगुणं पञ्चदशतः - त्रिंशत्-वारपर्यन्तम् अनुष्ठातुं शक्यते। क्रमेण सङ्ख्यावृद्धिः कर्तव्या, न हठात् एकदैव इत्यपि भाष्ये ग्रन्थकारः स्पष्टीकरोति। (४.१८)

अस्यानुष्ठानस्य प्रयोजनं स्वयं सूत्रकारः द्वाभ्यां सूत्राभ्यां कथयति - 'नाडी-शुद्धी रसोत्पत्तिर्मलबन्धवारणं मांसखण्डेषु शक्तिवृद्धिरग्निमान्द्यवारणं च ॥ ४ ॥ १९ ॥'

'कासश्वासादिनिवृत्तिर्निवृत्तिः ॥ ४ ॥ २० ॥' इति ।

अस्यार्थस्तु स्पष्ट एव। अत्र विशेषो नाम - अनेन प्राणायामाभ्यासेन इडापिङ्गले शुध्यतश्चेदपि तेनैव सुषुम्नायाः अपि शुद्धिः भवति। यतो हि

इडापिङ्गलयोः मध्ये एव सुषुम्नायाः अपि संस्थितिः इति सप्रमाणं भाष्ये स्पष्टीकरोति ग्रन्थकारः। (४.१९)

**पञ्चमः नारायण-समानपादः**

अस्मिन् पादे बाह्याभ्यन्तरकुम्भकप्रकारौ निरूप्येते। पूर्वतनेषु पादेषुप्राणायामविधानं निरूपितं चेदपि तत्र कुम्भकानुष्ठानविधानं नैव विहितम्। कुम्भकस्तु प्राणायामापरपर्यायः। तस्मात्कुम्भकस्य अत्यन्तमेव वैशिष्ट्यं विद्यते प्राणायामानुष्ठाने। तदेव हि च लक्ष्यम्। तस्मात् अस्मिन् पादे कुम्भकस्य निरूपणं विधीयते। अयं कुम्भकाभ्यासः समन्त्रकः, अमन्त्रकः वा भवितुमर्हति इति अभिप्रैति ग्रन्थकृत्। (५.२) ततः परं कुम्भकप्रकारान् निरूपयति।

**आदौ अन्तःकुम्भकप्रकाराः**

१) प्रथमः प्रकारः- अयम् अनुलोमविलोमाभिधः कुम्भकः (५.४-९)। आदौ द्वाभ्यां सूर्य-चन्द्रनाडीभ्यां पूरकः कर्तव्यः। तदुत्तरम् अन्तः वायुः निरोद्धव्यः। तदुत्तरं द्वाभ्यामेव नाडीभ्यां वायोः रेचनमपि कार्यम्। आदौ यथासामर्थं वायोः अन्तःकुम्भकं कार्यम्। अभ्यासे दृढे जायमाने क्रमेण १६ मात्रया पूरणं, ६४ मात्रया कुम्भनम्, ३२ मात्रया रेचनं विधेयम् इति सूत्रभाष्याभ्यां स्पष्टयति ग्रन्थकारः। प्रतिदिनं दशावृत्तितः प्रारभ्य अधिकाधिकं विंशत्यावृत्तिपर्यन्तं अयं प्राणायामः सकुम्भकः अनुलोमविलोमाभिधः प्राणायामः अनुष्ठातुं शक्यः। दिने च द्विवारम् ईदृशः अभ्यासः शस्तः। अनेन राजयक्ष्मरोगः विनश्यति इति कथयति ग्रन्थकृत्।

२) द्वितीयः प्रकारः - सुखपूरकाभिधः अयम् (५.१०-१२)। आदौ वामेन नासापुटेन रेचनम्। ततः परं वामेनैव पूरणम्। ततः परं कुम्भकानुष्ठानं विधेयम्। एवमेव दक्षिणेन अपि करणीयम्। अन्ते च रेचनं वामेन। एषा एका आवृत्तिः। अनेन प्राणायामेन मधुमेहादिदोषाः नश्यन्ति, प्राणश्च प्रतिष्ठितः भवति।

३) तृतीयः प्रकारः - अयं च सूर्यभेदनाभिधः कुम्भकः (५.१३, १४)। दक्षिणेन नासापुटेन रेचनम्। ततः दक्षिणेनैव पूरणम्। तदनन्तरम् अन्तःकुम्भकः। अन्ते रेचनमपि दक्षिणेनैव।शैत्यादिदोषाणां निवारणम् अनेन भवति।

४) चतुर्थः प्रकारः - अयं चन्द्रभेदनाभिधः (५.१५, १६)। या प्रक्रिया दक्षिणानाड्या कृता पूर्वोक्तविधानेन तस्या एव वामनाड्या अनुष्ठानं चन्द्रभेदनकुम्भकः। विशिष्य अयं प्राणायामः स्त्रीणाम् उपकारकः तासां योनिदाहहृत् भवति अयं कुम्भकः इति कथयति सूत्रकारः। पुरुषाणामपि आरोग्यं सिद्ध्यति अनेन इति भाष्ये स्पष्टीकृतमस्ति।

**बाह्यकुम्भकप्रकाराः**

१) बाह्यकुम्भकस्यानुष्ठानं (५.१७-२०) शववत् उत्तानं शयानेन करणीयमिति अभिप्रैति ग्रन्थकारः। उपविश्यापि कर्तुं शक्यते। हृदय-दुर्बलतावतां शवासने अन्तःकुम्भ्कानुष्ठानं सुकरं स्यादिति प्राणसूत्रभाष्ये स्पष्टीकृतमस्ति। द्वाभ्यां नाडीभ्यां वायोः बहिः रेचनं करणीयम्। ततः परं वायुः बहिरेव निरोद्धव्यः। उच्छ्वासः न करणीयः। ततः परं द्वाभ्यां नाडीभ्यां पूरकः करणीयः, पुनरपि विरेच्य, बाह्यकुम्भकानुष्ठानं विधेयम्। षड्वारम् अस्यावृत्तिः करणीया। एवं दिने द्विवारं विधेयम्। हृदयदुर्बलतावतां तद्दौर्बल्यं विनिवारितं भवति अनेन इति अस्य अनुष्ठानस्य प्रयोजनं कथयति ग्रन्थकृत्।

२) बन्धत्रयेण बाह्यकुम्भकः (५.२१-२९) - मूल-जालन्धर-उड्डियानबन्धानां बाह्यकुम्भकानुष्ठानवेलायां विनियोगविधानं कथ्यते। सूर्यचन्द्राभ्यां द्वाभ्यां नाडीभ्यां पूरकं कृत्वा, जालन्धमूलबन्धाभ्याम् अन्तः वायोः धारणं करणीयम्। एतत् हठयोगिनाम्। वायोः अन्तः अवस्थितौ उड्डियानबन्धस्य वर्जनं करणीयम्। अन्ये तु अन्तःकुम्भकं केवलेनमूलबन्धेन सह कर्तुमर्हन्ति। ततः परंद्वाभ्यां नाडीभ्यां वायुरेचनं करणीयम्। एवं षड्

अष्ट वा आवृत्तयः कार्याः। दिने द्विवारम् अनुष्ठातव्यम्। वीर्यदोष-स्वप्नस्खलन-अजीर्णतादयः दोषाः, निवारिताः भवन्त्यनेन।

एते प्राणायामाः नैमित्तिकाः इति ग्रन्थकृता सूचिताः (५.३० - अवतरणिका). नित्यः प्राणायामः (५.३०-३५)

नित्यः प्राणायामः यश्च जपाङ्गः सः अधुना कथ्यते।

स च इत्थम् - दक्षिणतः रेचनं करणीयम्। दक्षिणभागे हि अशुद्धेः सञ्चयः अतः प्रथमम् अनया क्रियया अशुद्धेः निवारणम्। तदनन्तरं वामतः वायोः पूरणं करणीयम्। हृदि अवधानेन कुम्भकानुष्ठानं करणीयम्। ततः परः दक्षिणेन निरवशेषं वायोः रेचनं करणीयम्। तत्र रेचक-पूरक-कुम्भकानां क्रमात् मात्राकालः तु - ३२: १६:६४: इति भाष्ये स्पष्टीक्रियते (५.३४)।

## ग्रन्थस्य अन्तिमं सूत्रम्

अस्य पादस्य अन्तिमं सूत्रं तावत् –

**'प्राणः प्रीणाति प्राणः प्रीणाति ॥५ ॥३६ ॥'**

एतेन विधानेन अनुष्ठाने कृते सति प्राणः प्रसीदति। न केवलं तावत्। अस्य सूत्रस्य भाष्ये स्पष्टीक्रियते यत् - प्राणः, तत्प्रणेता भगवान् नारायणोऽपि अनया प्राणायामप्रक्रियया अनुष्ठीयमानया प्रसीदति इति। यतो हि अस्यां प्रक्रियायां न केवलं वायोः आचमनं, निरोधः, त्यागः इत्येते विधीयन्ते। अत्र मन्त्रः, तदावृत्तिरूपः जपः, तेन जायमानं भगवतः ध्यानम् इत्येतत् सर्वमपि अस्तीत्यतः परमात्मा नारायणोऽपि अनेन प्रीतः भवति। इत्थं च अयं ग्रन्थः समाप्तिमेति।

## उपसंहारः

आधुनिकसंस्कृतग्रन्थाः गद्यपद्यमयाः काव्यविषयाः, शास्त्रविषयाः च प्रणीयमानाः एव सन्ति। किन्तु शास्त्रविषयाः सूत्रग्रन्थाः तु विरलाः।

तादृशेषु ग्रन्थेषु आदरणीयैः बन्नञ्जे गोविन्दाचार्यैः प्रणीतः प्राणसूत्राणि इत्ययं ग्रन्थः विशिष्टं स्थानं भजते।

किञ्च कालेऽस्मिन् योगेन अरोगता-स्वास्थ्यप्राप्त्यादिकं च यद् भवति तद् वैज्ञानिकैः अपि प्रमाणीक्रियते इत्यतः आर्षमूलकस्य अस्य शास्त्रस्य विषये जनानां मध्ये महती श्रद्धा दरीदृश्यते। किन्तु प्राचीनयोगशास्त्रपरम्परां परिशील्य निजाभ्यासबलेन च आधुनिकाः योगग्रन्थाः संस्कृतभाषायां विरलाः। किन्तु प्राणसूत्रग्रन्थः तादृशीं समस्यां परिहरति। शास्त्रीयया शैल्या, शास्त्रप्रमाणपूर्वकं, स्वानुभवं च संयोज्य रचितः अयं ग्रन्थः सर्वैः अपि योगाभ्यासनिरतैः अध्येयः, ज्ञेयश्च।

किञ्च, विनूतनाः केचन योगविचाराः ये चात्र दृश्यन्ते तेऽपि अस्य ग्रन्थस्य उपादेयतां नितराम् अभिवर्धयन्ति। ते च अभिलक्षिताः नूतनाः विषयाः अधः सङ्गृह्यन्ते -

१) आदौ कुम्भकेन विना प्राणायामकथनं, तदनन्तरं सकुम्भकं प्राणायामकथम्।

२) प्रायः हठयोगप्रदेपिकादिषु हठग्रन्थेषु अन्तःकुम्भकस्य एव विवरणं दीयते, किन्तु अस्मिन् ग्रन्थे स्पष्टतया बाह्यकुम्भकस्यापि अनुष्ठानविधानं कथितम्।

३) उड्डियानबन्धस्य बाह्यकुम्भके विनियोगः, जालन्धर-मूलबन्धयोः च अन्तःकुम्भके विनियोगः इतः पूर्वं योगग्रन्थेषु अदृष्टपूर्वः। इदं विधानम् अनुष्ठानपरम्परायां विद्यते चेदपि ग्रन्थेषु नैतावत् लक्षितः। अतः इदंप्रथमतया तस्य विचारस्य गन्थे निबन्धनम् साधकानां सन्देहनिवारणं करोति, येन च अनुष्ठाने सविश्वासं प्रवर्तितितुं शक्यते अभ्यासिभिः।

४) प्राणायामकाले चक्षुषोः निमीलनमपि अनुष्ठानपरम्परायां विद्यते चेदपि, ग्रन्थे तस्य निबन्धनम् इदम्प्रथतया प्राणसूत्रे एव दृश्यते।

५) १४-८० इति येयं वयोमितिः कथिता प्राणायामार्थं सोऽपि अनुभवसिद्धः विचारः इति भाति।

६) मधुमेहनिवृत्तिः, हृदाघातनिवृत्तिः इत्यादीनि यानि प्रयोजनानि कथितानि, तानि विनूतनानि प्राणायामस्य। इदं च अनुष्ठाय स्वानुभवगम्यं करणीयम्। वैज्ञानिकैश्च प्रमाणीकरणीयम्।

७) सूर्यभेदन-चन्द्रभेदनादयः प्राणायामप्रकाराः ये चास्मिन् ग्रन्थे निरूपिताः ते विशिष्टाः विनूतनाश्च। तेषां च यथायोग्यं अनुष्ठानं विधाय अभ्यासिनः तत्फलभाजः भवेयुः।

८) प्राणायामस्य भगवदाराधनरूपतापि अस्मिन् ग्रन्थे या प्रपञ्चिता तदत्यन्तं महत्त्वम् आवहति। आसन-प्राणायामादिरूपः योगः, अनीश्वरः आरोग्यार्थः अभ्यासः इति आधुनिके काले काचिद्धारणा प्रसृताऽस्ति। आसन-प्राणायामदिपूर्वकः योगः मूलतः भगवदाराधनार्थकः। तेन आरोग्यादिकमपि सिद्ध्यतीत्ययं सनातनधर्मानुसारी विचारः अस्मिन् ग्रन्थे विस्पष्टतया निरूपितः।

इत्थं च प्राचीन-परम्परानुगुणं, निजाभ्यासबलेन नूतनविचारसहितः अयं प्राणसूत्राभिधः ग्रन्थः पुरापि नवः पुराणः। एतदर्थं ग्रन्थकाराः आचार्याःबन्नञ्जे गोविन्दाचार्याः वन्दनीयाः। एषः च ग्रन्थःअभ्यासिभिः साधकैः अधीति-बोधाचरण-प्रचारणैः चतुर्दशावत्त्वं प्रापणीयः इति विनिवेद्य विरम्यते।

**आकरग्रन्थाः**

1. प्राणसूत्रगळु, संस्कृत सूत्र भाष्य मत्तु (कन्नड) अनुवाद, बन्नञ्जे गोविन्दाचार्य, ईशावास्य प्रतिष्ठानम्, उडुपि-बेङ्गलूरु, २०११-१२

2. Haṭhayogapradīpikā of Svātmārāma with commentary jyotsnā of brahmānanda and English Translation, The Adyar Library and Research Centre, 1972

# प्रत्नप्रयोगमीमांसा

डा. रामकृष्ण पेजत्तायः

## अवतरणिका

प्रयोग एव भाषाया जीवातुः। व्याकरणं तावद् व्यवहारस्थानां शब्दानां व्युत्पादकम्। तदेतत् प्रस्फुटं शाब्दिकानामपि 'प्रयुक्तानामिदमन्वाख्यानम्' इति स्वं शास्त्रं परिचाययताम्। न पुनर्व्यवहारे विद्यमानाः सर्वे प्रयोगाः साधवो भवन्ति। शिष्टकर्तृकाणामेव प्रयोगाणामिह साधुताभ्युपगमः। के पुनरिह शिष्टाः? तल्लक्षणं नैकैर्वर्णितं चेदपि न तथाभूतानां साम्प्रतं दर्शनम्। तथा च अस्माकमुपलभ्याः शिष्टाः शास्त्रप्रणेतारो महाकवयश्च। अमीषां प्रयोगे न क्वाप्यास्पदमपशब्दानाम्। तेषु क्वाप्यसाधुतायां दृष्टायां तदाभासमात्रमिति वेद्यं न तु वस्तुगत्या। अत एव केषुचन महाकविप्रयोगेषु पाणिनीयनयानुसारेण[1] दृष्टायामप्यसाधुतायां तेषां पाणिनीयपरिधौ प्रवेशयितुं यतन्ते शाब्दिकाः, न पुनरसाधव इति तान् प्रतिक्षिपन्ति। यथा त्रिलोकनाथः। 'त्रयो लोकास्त्रिलोकाः, तेषां नाथ' इति व्युत्पाद्योऽयं शब्दः। किञ्च संख्यावाचकस्य विशेषणस्य विशेष्येण समासं संज्ञायामेवाभ्युपैति पाणिनिः।[2] प्रकृते त्रिलोकशब्दो न कस्यापि संज्ञा। त्रयाणां लोकानां समाहारे विवक्षिते त्रिलोकीति शब्दः शक्यो व्युत्पादयितुम्। ततस्तत्पुरुषे कृते त्रिलोकीनाथ इति वक्तव्यम्। तथा च प्रागुक्तस्त्रिलोकनाथशब्दः असाधुरिति सिद्धम्। परन्तु 'त्रिलोकनाथः पितृसद्मगोचर' इति प्रायुङ्क्त प्रत्नः कवितल्लजः कालिदासः। न्यायसूत्रादिष्वपि एतद्विधाः शब्दाः सन्त्युपलभ्याः। एवं च शब्दोऽयं शिष्टप्रयोगपरिपूत इति कृत्वा असाधुरयमिति प्रतिक्षेपं सर्वथा नार्हति। अत एनं पाणिनीयपरिधावानेतुं प्रयेतिरे पदशास्त्रनिपुणाः।

1. इह व्याकरणानि नैकानि। तेषु प्रथमोपस्थितं भवति पाणिनीयम्। साम्प्रतं सर्वत्र व्याकरण विचाराः पाणिनीयनयानुसारेणैव प्रवर्तन्ते। तदीया परिपूर्णता प्रामाणिकता चात्र मूलम्। अत इह तदेवोल्लिखितम्।

2. दिक्संख्ये संज्ञायाम् (2.1.50)

संज्ञायामेव समास इति नियमः कर्मधारयविषयः किल! अतो मार्गान्तरेणेह समासो द्रष्टव्यः। त्रिसंख्याका लोकास्त्रिलोका इति। तमेनं मध्यमपदलोपिनं न किञ्चिन्निरुणद्धि शास्त्रम्। अतोऽनेन वर्त्मना प्रयोगोऽयं सूपपाद इत्याख्यान्ति व्याख्यातारः। तदेवंविधं साधुत्वोपपादनमेव लक्ष्यीकृत्य प्रवृत्तानि ग्रन्थरत्नान्यपि नैकानीति अवधानार्हं नः।

किञ्चैतदिह चित्रं यद् द्वैतराद्धान्तप्रतिष्ठापकानाम् असंख्योद्ग्रन्थप्रणेतॄणां प्रत्नप्रयोगप्रवणानां श्रीमदाचार्याणाम् अपाणिनीयाः प्रयोगा नव्यैर्वैयाकरणैः साधुत्वोपपादनार्थमुपात्ता न विलोक्यते। सर्वथा साध्वी ननु माध्वी वाणी। न पुनस्ताम् असाधुतायाश्छायापि स्प्रष्टुमर्हति। क्वचित् तैः प्रयोजनविशेषं पुरस्कृत्य श्रौता आर्षाश्च प्रयोगा विहिता इत्यपि न मतिं नारोहेत् सुमतीनाम्। न केवलं श्रीमदाचार्याणां किञ्च अन्येषामपि केषाञ्चन प्रत्नप्रयोगाणां साधुत्वं पाणिनीयनयानुसारेण दुरुपपादम्।[1] यथा, नैकेषु तन्त्रग्रन्थेषु भूयः प्रयुक्तो दृश्यते ळकारः। कलत्रादिष्वपि शब्देषु ळकारघटितं (कळत्रमिति) लेखनं दृश्यते दाक्षिणात्यासु मातृकासु। किञ्च पाणिनिना ळकारविषये न किञ्चिदभिहितमिति सर्ववेद्यम्। एवमेतद्विधानां प्राचीनानां प्रामाणिकानां च प्रयोगाणां साधुत्वमुपपादयितुं काचिल्लघुकाया कृतिः प्रणीताऽचार्यगोविन्देन यस्याः प्रत्नप्रयोगमीमांसेति नाम।

प्रत्नं नाम प्राक्तनम्।[2] प्राक्तनानामपि पाणिनिनयेन अनुपपन्नानां प्रामाणिकानां प्रयोगाणां व्युत्पत्तिं तदध्वना तेषां साधुत्वं च विवरीतुमसावुद्यम इति स्वयं निगदति ग्रन्थकृद् यथा -

---

1. नेह पाणिनीयो नयोऽपूर्णोऽग्राह्यो वेति विवक्षितम्। गैर्वाण्या व्याप्तिर्देशकालाभ्यामुभाभ्यामप्यपरिमेया। तामिमाम् अपरिमेयां पदसम्पत्तिं मुष्टिमेयैः पदैरन्वाख्यातुं न सुशकम्। तदेतदेतावद् व्यवस्थितं विधातुं न पाणिनेरन्येन शक्यमित्यपि शते शतं व्यक्तं नः। यदि कश्चन शिष्टप्रयोगः पाणिनीयं परिधिं न प्रविशति तर्हि तत्समन्वयनविधिश्चिन्त्यो न पुनरसावसाधुरिति प्रत्याख्येय इत्येवात्र मनीषितोऽर्थः।

2. पुराणे प्रतनप्रत्नपुरातनचिरन्तनाः (अमरः 3.1.77)

**पाणिनीयनये प्रायो ये शब्दा न निरूपिताः ।**
**प्रत्नास्तेषां तु निष्पत्तिप्रक्रियात्र प्रदर्शिता ॥**

इह प्रयोजनान्तरमप्यस्ति ग्रन्थकर्तुः। वैदिकान् प्रयोगान् व्युत्पादयितुं क्वचिद् 'बहुलं छन्दसि' इत्याकारकाणि सूत्राणि सृजति स्म पाणिनिः। न तदर्थास्तदुक्तया व्युत्पत्त्या स्फुटीभवन्ति। क्वचित् केचन शब्दा अर्थविशेषनिमित्ताः प्रयुक्ता भवन्ति। तेऽप्यर्थविशेषा न नः पाणिनिनयेन वेद्याः। ईदृशीनामपि न्यूनतानां परिहृतिं लक्ष्यीकुरुते प्रकृता कृतिः। इहोक्तेषु प्रत्येकमप्यंशः सोदाहरणम् उत्तरत्र प्रपञ्चयिष्यते।

## सूत्रमयं वर्त्म

गोविन्दाचार्याणां कार्येषु सर्वदा भवति काचिदभिनवता। सा चाभिनवता साम्प्रदायिकीं काञ्चन सृतिं रीतिं वा आवहन्ती कामप्यभिख्यामाकलयति। एतदध्वन्येतावता कृतप्रवृत्तयो वाग्विचिन्तकाः पाणिनीयमेव सूत्रम् अन्यथा व्याख्यान्तः, अभीष्टं शब्दं प्रकारान्तरेण व्युत्पादयन्तो वा नैजं लक्ष्यं प्रतिपन्नाः। परं नितान्तविलक्षणोऽयं बन्नञ्जेमार्गः। इह हि पाणिनिशैल्या नूत्नानि सूत्राण्येव प्रणीतानि। सूत्राणि किल भारतीयशास्त्रपरम्पराया एकसूत्रताम् अभिव्यञ्जते। सूत्रं नाम वृत्तिं भाष्यं वाऽपेक्षते। प्रकृते तां वृत्तिमपि स्वयमुपकल्प्य अन्यथाव्याख्यानं निरास्पदं कृतवानस्त्याचार्य-गोविन्दः। तदिदं सूत्रजालं वृत्तिश्चोभे अभिजातशैल्येह सम्पन्ने। इत्थं विषये प्रस्तुतौ चोभयत्रापि नौतन्यमस्याः कृतेर्वैशिष्ट्यम्।

तदधुना कृतेरस्याः संरचना विषयजातं च स्तोकमिव परिचाययिष्यते।

असौ कृतिर्वर्णसमाम्नायः ळकारसमाम्नायः क्रियासमाम्नायः शिष्ट-समाम्नायश्चेति चतुर्भिः पादैर्विभक्तास्ति। अमूनि नामान्येव तत्तत्पादगान् विषयान् साधु सङ्गिरन्ते। अतो नात्र तद्विस्तरप्रसङ्गः। पादक्रमेणैव तत्तत्पाद-गतानां द्वित्राणां स्वारसिकानां विषयाणां प्रस्तुतिरुचिता भवेत्।

## प्रथमः पादः - वर्णसमाम्नायः

वर्णानां गुणस्वभावादिकं विवृण्वन्नसौ पादश्चतुर्दशसूत्रीं बिभर्ति। अत्रत्या द्वित्रा विशेषा यथा -

### ह्रस्वयोः ऐकार-ओकारयोः दीर्घस्य ॡकारस्य च अङ्गीकारः

व्यावहारिक्यां वर्णमालायां ह्रस्व ऐकार ओकारश्च नोपलभ्येते। तयोः प्रयोगोऽप्युपलभ्ये गैर्वाणे वाङ्मयप्रपञ्चे न दृश्यते। व्याकरणान्यपि एकार-ओकारयोर्ह्रस्वभेदं नाभिदधति। परन्तु गोविन्दाचार्यास्तमेनं ह्रस्वप्रभेदम् ऊरीकुर्वाणाः तत्कारणं विवृण्वन्ति यथा – 'लघुतयोच्चारदर्शनान्न्यूङ्खेषु गानेषु च' इति। अयमत्र सारः। वैदिका न्यूङ्खेषु अमो३ ओ ओ ओ ओ ओ३ इत्यादिरूपेण ह्रस्वमुच्चारयन्ति। तमेनं ते ह्रस्वम् ओकारं सङ्गिरन्ते। अथ गीतेषु ह्रस्व-ओकारस्य प्रयोग आनन्दतीर्थीय उपलभ्यते यथा – 'अतितम-तमोगिरि-समितिवि-भेदन जगदेक-कारण-रमरम-रमण' इति। गीतमिदं चतुर्मात्रागतिकम्। इह 'तमोगिरि' 'जगदेक' चैतयोर्गणयोः क्रमेण ह्रस्व ओकार ऐकारश्च यदि नाभ्युपगम्येत तर्हि गतिभङ्गप्रसङ्गः। गतिमाश्रित्यैव किल भवन्ति च्छन्दोनियमाः। अतो गतिभङ्गो नाम च्छन्दोभङ्ग एव यो हि दोषाणामग्रणीः। न तादृशो दोषः प्रसजत्यभिज्ञानां वाण्यां विशिष्या-चार्यमध्वानाम्। अत इहाचार्यैर्ह्रस्वावेव ओकार-ऐकारौ प्रयुक्ताविति गोविन्दमतम्। एवमेव दीर्घ-ॡकारोऽप्यस्यां मीमांसायामूरीकृतोऽस्ति यश्चैतैस्तन्त्रादिगतैः प्रयोगैरुपपादितः।

अत्रत्याऽपरा स्वारसिकी मीमांसैवम् – अवर्गीयव्यञ्जनान्यस्माभिः यरलवेति क्रमेण आम्नायन्ते ननु। किन्तु यवरलेति क्रमः पाणिन्यभिमतः।[1] तदनयोः कतरः क्रमः साधीयानित्यत्र इदं गोविन्दहृदयम् – वस्तुतः पाणिनिक्रमो युक्तियुक्तः। स्वराणामानुपूर्वी 'इ उ ऋ ऌ' इति। अमुमेव क्रमं चेदनुसरेम तर्हि इ+अ=य, उ+अ=व, ऋ+अ=र, ऌ+अ=र – इति

1. हयवरट्, लण् – चैतत् सूत्रयुगलम् इह स्मार्यम्।

यवरलाकारा आनुपूर्वी एव युज्यते। तथापि यरलवेति याऽनुपूर्वी समुत्पन्ना सा देवताक्रमेण। तद्यथा – 'यमिति वायुः। रमित्यग्निः। लमिति भूः। वमिति जलम्। शमित्याकाशः।' तदेवं वर्णसम्बद्धा बहवो हि रसवद्विचारा इह शक्या विलोकयितुम्।

**द्वितीयः पादः – ळकारसमाम्नायः**

संस्कृतवाङ्मये ळकारो वर्तते किन्नवेति विचारश्चिराद् वरीवर्ति। वैदिकवाङ्मये दृश्यो ळकारस्तदुत्तरवर्तिन्या भाषया नाभ्युपेत इति भूयसां भाषाविदां मतम्। पाणिनीये वर्णसमाम्नायेऽपि न ळकारो लब्धास्पदः। किन्त्वत्र न संवदन्ते गोविन्दाचार्याः। लौकिकेऽपि वाङ्मये ळकारप्रयोगश्चिराद् वरीवर्तीति द्रढीयांस्तदभिप्रायः। एतदुपोद्बलकानि नैकानि प्रमाणानि[1] स्वीयेषूपन्यासेषु तैर्विव्रियमाणान्यपि स्मर्तुमर्हाणि। आचार्याणामेतद्विषयको विचारो नैतावता विरमति। प्रत्युत, प्रयोगेषु लकार-ळकारयोर्भेदं तद्व्युत्पत्तिसहितं ते प्रस्तुवन्ति। तथा च कृत्स्नोऽयं पादस्तन्मीमांसापरत्वेन तै रूपित इति विशेषोऽपीहावधार्यः। सेयं मीमांसा नवदशभिः सूत्रैरिह निर्वर्तितास्ति। पिपठिषूणामामोदाय द्वित्राण्युदाहरणानीह सन्दृभ्यन्ते।

**राल्लो ळः समानपदे**

रकारात् परस्य लकारस्य ळकारादेशो भवतीति प्रकृतसूत्रार्थः। सोऽयमादेशः स्थानिनिमित्तयोः समानपदस्थितयोरेव। यथा – विरळः, सरळः, कराळश्च। विपुल-चञ्चल-प्रभृतिषु निमित्ताभावान्न ळादेशः।

अथ कालशब्दः। अस्य विभिन्नानां प्रयोगस्थानानां सूक्ष्मया पर्यालोचनया समुदिते विद्येते 'कलतेः कालः' 'कडतेः काळः' चेति द्वे सूत्रे। अत्रायं सारः। शब्दसंख्यानयोरर्थयोः कलधातोर्निष्पद्यमानाः शब्दा लकारघटिता एव। यथा समयार्थकः कालशब्दः। एवम् अव्यक्तशब्दार्थकः कलशब्दोऽपि लकारघटितः। अस्त्यन्यः 'कड' धातुः यस्य मदाभ्यवहारावर्थौ।

1. यथा दक्षिणभारतोपलब्धेषु नैकेषु संस्कृतताडग्रन्थेषु ळकारघटिता उल्लेखा भूयांसो दृश्यन्ते।

अस्य डकारो ळकारो भवति। यथा काळवर्णः, काळाष्टमी, काळी चेत्यादिषु शब्देषु। तथा चैते शब्दा मदार्थपरतया अभ्यवहारार्थपरतया वा व्याख्येया इति भावः। अस्मिन्नेव प्रसङ्गे कळत्रं कळा चेति शब्दावप्याचार्यैरुदाहृतौ विशेषेणावधानार्हौ। इह कळत्रशब्दे मदार्थे, कळाशब्दे अभ्यवहारार्थे च कडधातुर्द्रष्टव्यः। इमां मीमांसामनुवर्तयन्नाचार्य आह – 'कलेर्वर्णे वा ळः' इति। कलधातुरपि वर्णार्थे चेत् प्रयुक्तः[1], तस्य लकारो ळकारो भवतीत्यर्थः। यथा – काळाष्टमी। अत्र कलधातोर्निष्पन्नः कालशब्दः कृष्णवर्णवाची। अतोऽस्य लस्य ळादेशः। अथ चेदत्रत्यः कालशब्दः संख्यानार्थे विवक्षितः तर्हि लकार एव तिष्ठति।

प्रकरणेऽस्मिन्नित्थम्भूतानि भूयांसि मीमांसितानि सन्ति चेदपि गौरवभयादिह विरम्यते।

## तृतीयः पादः – क्रियासमाम्नायः

क्रियापदसम्बद्धान् पाणिनिनानुक्तान् कांश्चिदंशान् विवृण्वन्नसौ पादः सप्तविंशत्या सूत्रैरुपनिबद्धः। अत्रत्यान् द्वित्रान् विशेषानधुना पश्येम।

**अडभावश्चाल्पाख्यायां लङि**

लङ्लकारे धातूनामडागमः संस्कृतज्ञानां विदित एव।[2] यदि क्रियाया अल्पत्वं विवक्षितं तर्हि अडागमोऽयं न भवतीति प्रकृतसूत्रार्थः। यथा – 'स ईक्षतेमान् लोकान्नु सृजा इति' (ऐतरेयोपनिषत् ४.१) इत्युपनिषद्वाक्ये ईक्षणक्रियाया अल्पत्वमभिप्रेतम् इति कृत्वा अडागमाभावः। अडागमे सति ऐक्षत इति स्यात्। तथा च ईषदीक्षणेनैव भगवान् सर्वान् लोकान् ससर्जेत्यर्थोऽत्र फलति।

वस्तुतस्तु ईदृशान् वैदिकप्रयोगान् साधयितुं 'बहुलं छन्दस्यमाङ्योगेऽपि'

1 धातूनामनेकार्थत्वात्।

2 धातुरजादिश्चेदाडागमः।

(६.४.७९) इति सूत्रयामास पाणिनिः। किन्तु सूत्रमिदम् अभीष्टं रूपं साधयति चेदपीदृशेषु प्रयोगेषु स्थितो विशेषार्थो न तेन व्यक्तः। तमेनं प्रकाशयदाचार्यसूत्रं श्रुतिवाक्यं कात्स्न्र्येनावगन्तुम् उपकरोति। इदमेवैतत्सूत्रारम्भप्रयोजनम्।

## लृटि वा

अस्मिन् पादे स्थितं सूत्रान्तरं लृटि वा इति। लृट्-लकारे हन्तेर्वधादेशो वा स्यादिति सूत्रार्थः। अनेन हनिष्यति वधिष्यति चेति रूपद्वयस्यापि साधुता साध्यते। पाणिनिनये वधिष्यतीति प्रयोगो न सिद्ध्यति। यतो वधरूपो धातुरिह न सम्मतः। हनो वधादेशो विहितः[1] चेदपि न तत्प्रसक्तिर्लृटि। किञ्च आनन्दतीर्थभगवत्पादैः 'शकुनिं त्वक्षकितवं सहदेवो वधिष्यति' (महाभारततात्पर्यनिर्णयः २१.३५०) इत्यत्र वधिष्यतीति प्रयुक्तम्। अतस्तत्साधुत्वमुपपादयितुं प्रकृतं सूत्रम्। प्रयोगमेनं युक्त्यन्तरेणापि समर्थयन्त्याचार्या यथा – वस्तुतस्तु प्राचीनधातुपाठानुसारेण वधधातुरेव रूपं निष्पादयति। व्याकरणं विदतामिदम् अतिरोहितमेव यदत्र धातुपाठे सन्ति मतभेदा इति। पाणिनिनाऽनिर्दिष्टानपि भूयसो धातून् पाणिनीया अभ्युपयन्तीति इहानुसन्धेयम्।

## चतुर्थः पादः – शिष्टसमाम्नायः

प्रागभिहितेषु विषयेष्वनन्तर्भवतां शिष्टैः समाम्नातानां नानाविधानां प्रयोगाणां साधुत्वं विवरीतुं प्रवृत्तोऽयं पादः। इह समस्ति सूत्राणामशीतिः। यथापूर्वम् अत्रत्या अपि कतिपये विशेषा इहोपन्यस्यन्ते।

## पर्वभाराभ्यां मत्वर्थे तः संज्ञायाम्

पर्वतः भारतश्चेति शब्दयोर्व्युत्पादनार्थं प्रकृतमिदं सूत्रम्। क्रमेण 'पर्वाण्यस्य सन्ति' 'भारोऽस्य अस्ति' चेत्यर्थयोः पर्व-भार-शब्दाभ्यां

---

1 यथा अवधीद् वध इत्यादिषु।

तप्रत्ययोऽनेन सूत्रेण विहितः। पाणिनीयनये इमौ शब्दौ व्युत्पादयितुं शक्यै चेदपि नैतयोरर्थयोः।[1] यथा भरतस्येदम् इति, भरतं भरतवंश्यान् अधिकृत्य कृतो ग्रन्थ इति च अर्थयोः भरतशब्दादणि भारतशब्दो व्युत्पादयितुं शक्यः पाणिनिनये। किञ्च 'महत्त्वाद् भारवत्त्वाच्च महाभारतमुच्यते' इति महाभारतमात्मानं परिचाययति। अतो भारवत्त्वरूपेऽर्थे भारतशब्दोऽस्माकम् इष्टः, यं पाणिनीयनयो न प्रदत्ते। तदेवम् अभिप्रेतेऽर्थे प्रकृतशब्दयोः साधनार्थमारब्धं प्रकृतसूत्रम्।

## छन्दसि विभाषा ह्रस्वदीर्घत्वे

छन्दसि क्वचिद् ह्रस्वो दीर्घतां याति क्वचिद् दीर्घो ह्रस्वतां चेति एतत्सूत्रार्थः। यथा 'अत्रा सखायः सख्यानि जानते' (ऋग्वेदः १०.७१.२) इत्यत्र अत्रशब्दान्त्योऽकारो दीर्घीभूतः सन् 'अत्रा' इति रूपायाकल्पत। सूत्रेऽस्मिन् छन्दःशब्दो वृत्तवाचकोऽपि। अतो गीतिष्वपि ह्रस्वदीर्घयोर्मिथो व्यत्ययो भवतीत्यर्थोऽपि सिध्यत्यस्य सूत्रस्य। यथा कृष्णाष्टके पालया कमलालया। इहोभयत्र यकारात् परयोराकारयोः स्थाने वस्तुतो विद्यमानो वर्णः अकारः।[2] स चात्र गीत्यां दीर्घीभूतो द्रष्टव्यः। सोऽयं ह्रस्वदीर्घव्यत्ययो न वृथा। तदुच्यते सूत्रान्तरेण – 'अर्थविशेषादेव' इति। महात्मनां व्याहारेषु स्वरमात्रादितोऽपि अर्थविशेषा अभिव्यक्ता भवन्ति। त इमेऽर्थविशेषाः सन्ततं सञ्चिन्त्याः सुधीभिरित्याचार्याणामाशयः। यथा 'अथा ते सख्ये अन्धसो (ऋग्वेदः १०.२५.१) इत्यादिषु मन्त्रेषु अथाशब्दस्य दीर्घान्तप्रयोगः

---

1. पर्वतशब्दः पाणिनीयनये द्वेधा व्युत्पादयितुं शक्यः। १. पर्वतीत्यर्थे पर्वधातोरतच्प्रत्ययः। २. पर्वाणि सन्त्यस्येत्यर्थे पर्वशब्दादतच्प्रत्ययः। इह द्वैतीयीकी व्युत्पत्तिः आचार्याभिप्रेते अर्थे एव विद्यते। आचार्योक्ते पाणिन्युक्ते च प्रत्ययमात्रं भिद्यते, न त्वभिप्रेतोऽर्थो रूपं च। तथापि प्रकृतसूत्रे पर्वतशब्दस्याप्यन्तर्भावो विस्मयावहः।
2. इह कमलालयपदान्तगस्य अकारस्य गुरुत्वं पादान्तभवत्वादेव सिद्ध्यति। तस्मान्नात्र दोषप्रसङ्गः। किन्तु 'पालय'शब्दस्य 'पालया' इति दीर्घान्तत्वम् अनेन सूत्रेण विना दुर्वचम्। ह्रस्वत्वे तु च्छन्दोभङ्गः, यं न मनागपि कुर्वन्ति महात्मानः।

अत्यन्तनैकट्यं बोधयितुम्। तथा च 'कुर्वाणा चीरमात्मनः' इत्यादौ तैत्तिरीयोपनिषन्मन्त्रे चिरमिति वक्तव्ये चीरमिति प्रयोग एकान्तदैर्घ्यम् अभिव्यङ्क्तुम्। सोऽयमस्याः कृतेः संक्षिप्तः परिचयः।

## चिन्तनम्

पाणिनीयनये ये प्रत्नप्रयोगा न निरूपितास्तेषां निष्पादनमस्याः कृतेर्विषय इति प्रतिज्ञावाक्यमाचार्याणाम्। पाणिनिना व्युत्पादितेष्वपि शब्देषु यदि कस्यचिद् अभिप्रेतोऽर्थविशेषो न परिस्फुरति तर्हि सोऽप्यत्र मीमांसितोऽस्माभिः शक्यो द्रष्टुम्। परन्तु क्वचित् पाणिनिनये अभिप्रेतार्थे एव च सिद्धाः शब्दा अनेन ग्रन्थकर्त्रा उपात्ता दृश्यन्ते। अनया दृष्ट्या पर्वतशब्दः प्रागेव विवृतो मया। अपरमिहोदाहरणं शक्यं वीक्षितुम्। शरशब्दान्मतुपं कृत्वा व्युत्पादयितुं शक्यः शरावतीशब्दः। परमेतयोः प्रकृतिप्रत्यययोर्योगे शरवतीति भवति। इह दैर्घ्यसिद्ध्यर्थं शरादीनाञ्च इति सूत्रं प्रोक्तवानस्ति पाणिनिः। धूमावतीशब्दोऽप्यनेन सूत्रेण निष्पन्नो भवति। तथाप्येतद्विधानां शब्दानां दैर्घ्यं सम्पादयितुम् आचार्यगोविन्देन शरनेत्रधूमपद्मानां दैर्घ्यं स्त्रीसंज्ञायाम् इति किञ्चित् सूत्रितमस्ति। सूत्रेऽस्मिन् शरधूमशब्दयोरुपादाने बीजं न शक्यं विवरीतुम्। किमप्यन्यदिहाभिप्रेतं स्यादाचार्याणाम्।

तदेवमन्यत्रापि क्वचिदाचार्याणामाशयो न स्फुटं व्यक्तो भवति। अत्रोपात्तान् बहूनंशांस्ते स्वेषूपन्यासेषु समुल्लिखन्ति स्म। अतस्तान् अनारतं श्रुतवद्भिः विद्यया तन्निकटवर्तिभिर्वा 'इदमित्थम्' इति तदभिप्रेतं शक्यमभिधातुम्। तथाभूतेषु कश्चिदस्य विस्तृतं व्याख्यानं लिखेच्चेदसौ कृतिः सर्वत्र प्रसृत्वरा सती अधिकान् जिज्ञासून् प्राप्नुयात्। अनेन तद्वचसाम् अन्यथाव्याख्यानप्रसङ्गोऽपि दूरान्निवारितः स्यात्।

अत्र लक्ष्यत्वेनोपात्ताः प्रयोगा अपि विभिन्नमूलाः। परन्तु तन्मूलं क्वापि नोल्लिखितमस्मिन् पुस्तके। इदमपि पठितॄणां क्लेशाय कल्पते। अत एषां स्रोतःसहितं प्रकाशनम् आवश्यकम्।

**उपसंहारः**

इति संक्षिप्तं परिचायिता आचार्यगोविन्दकृता प्रत्नप्रयोगमीमांसा। मीमांसेयं प्रत्नानाम् अपाणिनीयानां प्रयोगाणां व्युत्पादनार्थमेव, तेऽस्मद्व्यवहारे प्रयोगार्हाः किं न वेत्यत्र नास्माकं भरो महानित्यपि तैः स्पष्टीकृतम्उपसंहारपद्येषु। एतत्प्रणयनं पाणिनिना अनुक्तानामंशानां कथनार्थमेव, न तु तत्पर्यायत्वेनेति प्रथमं मनसि कार्यम्। भाषां व्याकरणं वा एकयैव दृष्ट्या विलोकितवतामियं कृतिर्नूतनां दृष्टिं प्रदिशतीत्यत्र न मनागपि संशयः। पूर्वैः पदशास्त्रज्ञैरस्पृष्टानां प्रयोगाणाम् उपपादनार्थं प्रवृत्ताप्यसौ मीमांसा अभिप्रेतार्थानुसारेण व्युत्पादनं स्वरमात्रादीनामप्यर्थविशेषः चैतदाद्यैरध्वभिः स्वां व्याप्तिं विस्तारयति। गैर्वाण्या व्याप्तिः देशकालाभ्याम् उभाभ्यामप्यायामाभ्याम् अपरिमितेति कृत्वेह प्रयोगमीमांसा न सुकरा। अत्रापीदं सुवेद्यम्। अस्यां मीमांसायां सकृदवलोकितायां वैदिकवाङ्मयं पुराणानि तन्त्रग्रन्थाः प्रातिशाख्यानि चैवं नानाविषयकं ग्रन्थकर्तुरध्ययनं तेषां कूलङ्कषं विवेचनं नास्माकमविदितं भवति। प्रस्तुतावाश्रितः सूत्रवृत्तिरूपो मार्गोऽपि कृतिमिमां रसनीयां तनुते।

आचार्यगोविन्दीयां भाषां प्रति किञ्चिन्न लिखेयं चेदसौ परिचयो न पूर्णतामञ्चेत्। स्पृहणीया किल वाणी गोविन्दीया। मुक्तकप्रायैः पदैः, असंश्लिष्टैर्वाक्यैः, स्थाने विन्यस्तैर्वाग्योगैश्च कथं भाषा रसनीया कर्तव्येति तस्माच्छिक्षेत लेखकलोकः। एतान् पठितवतां गैर्वाणीप्रणयिनां मनस्ययं भाव उत्पद्यत एव यद् – आचार्या इतोऽपि चेत् संस्कृतेन अलेखिष्यन्॥

॥ श्रीकृष्णार्पणमस्तु ॥

# श्रीमद्गोविन्दाचार्यकृतस्य काव्यमीमांसेति प्रबन्धस्य विमर्शः

**प्रो. एन्. लक्ष्मीनारायणभट्टः,**

श्रीमता तत्रभवताचार्येण नानाशास्त्रेषु नैकेषु विषयेषु प्रबन्धाः प्रणीताः सन्ति। ते च तत्तच्छास्त्रस्य सारेण सगर्भा इति हेतोरमीषामध्ययनेन शास्त्रं विदतां यथा दिशो दर्शनं भवति तथा मार्गस्य दर्शनमविदताम्। यथास्य द्वैतवेदान्तशास्त्रेऽप्रतिहतम् अकुण्ठितं तलस्पर्शि च ज्ञानं तथा शास्त्रान्तरेष्वपीत्याश्चर्यं जनयति नः। दृश्यन्ते च बहवः प्रबन्धाश्छन्दोमीमांसा, बन्धमीमांसेत्याद्याः साहित्यशास्त्रेऽपि। केचिद्गात्रेण महान्तः, केचिच्च लघव इतीयानेव विशेषः।

सर्वेष्वस्य प्रबन्धेषु हृद्या शैली, सारवती समासवती च वागध्येतॄणां मनांसि हरति। सूत्रायमाणेन लघुनैव वचनेन बहवोऽर्थाः प्रतिपाद्यन्ते। यथा यथा पठ्यते तथा तथा निरुक्तस्य महाभाष्यस्य तथान्येषां प्राचीनमूलग्रन्थानां शैली स्मृतिपथमायाति। तदीयेषु प्रबन्धेषु यः काव्यमीमांसेति प्रबन्धः तत्र मध्वविजय गतान् श्लोकानुदाहरणीकृत्य काव्यलक्षणम्, महाकाव्यलक्षणम्, नायकप्रभेद-तद्गुणाः, रसः, रीतिश्चेति पञ्च विषया प्राधान्येन निवेदिताः। यथाशास्त्रं च तान् निरूप्य पर्यन्ते सम्भवे सति स्वकीयमपि मतमाचार्येण निरूपितम्।

आक्षेप्तारो बहवः सन्ति किन्तु समाधातारो विरलाः। अयं तेष्वन्यतम इति मन्ये। लेखकेन सता यदवश्यं कर्तव्यं तदनेनाचार्येण कृतमित्यत्र नास्ति संशयः। प्रकृते च तत्प्रबन्धे मध्वविजयग्रन्थस्य काव्यत्वं कथम्? तेन सह महाकाव्यत्वं कथम्? कस्तत्र नायकः तन्निष्ठगुणाश्च के? का रीतिः? कश्च रस इत्येषां प्रतिपादने प्रवृत्त आचार्यः प्रसक्तानुप्रसक्त्या काव्यस्य कतीनाञ्चन प्रमेयानां निरूपणं व्यधत्त। प्रकृते च लेखे केवलं तदुक्तानां विषयाणां यथाप्रतिपादनं स्फुटता विधीयते, क्वचिच्च चापलेन स्वकीयोऽपि विसंवादः प्रदर्श्यते।

## काव्यस्य लक्षणम्

काव्यलक्षणमिति प्रथमो विषयः। अत्राचार्येण मम्मटस्य कुन्तकस्य आनन्दवर्धनस्य विश्वनाथस्य जगन्नाथस्य च लक्षणं प्राधान्येन विचार्य निराकृतम्। पर्यन्ते च स्वसम्मतमपि किञ्चिल्लक्षणं निर्दिष्टम्। तदिदं सर्वं तदुक्तदिशा विवरीतुं प्रयत्यते, तथाहि - काव्यलक्षणे विषये मम्मटेन तावदिदं लक्षणमभिहितम् - अदोषौ सगुणौ शब्दार्थौ काव्यं क्वचिदनलङ्कृती अपीति ॥ यद्यप्यत्राचार्येण न तदुक्तं लक्षणं यथावन्निर्दिष्टं तथाप्यर्थतः तत्सङ्गृहीतमिति न दोषः। लक्षणं चैतद्विश्वनाथादिभिः प्राचीनैर्नैकैः विमर्शकैरन्येनान्येन प्रकारेण निरस्तं विलोक्यते, आचार्येण तु ततोऽन्येनैव प्रकारेणेति विशेषः।

तदिदं नादरणीयमित्याचार्यः - अत्र शब्दार्थावित्यत्र शब्दशब्देन अर्थवद्वर्णसमूहस्यैव ग्रहणम्, न पुनरवर्णात्मकस्य ध्वन्याद्यपरपर्यायस्य नादस्य, अप्रसक्तत्वात् असङ्गतत्वाच्च। नहि कोऽपि मनीषी भेरी-निनादादिकमव्यक्तं शब्दं काव्यमित्यभिधित्सति। अभिदधाति च केवलमर्थवत एव शब्दस्य काव्यत्वम्। स्थिते चैवम्, किं कारणं पुनर्लक्षणे अर्थशब्दस्य ग्रहणम्? विशेष्यभागे शब्दशब्दमात्रस्य निवेशनादेवार्थस्यापि सङ्ग्रहात् अभीष्टसिद्धेः। यदि भेरीनादादिशब्दस्यापि केनचित् काव्यत्वेनाभिधानं स्यात् तर्हि तत्प्रतिविधानार्थं यत्नोऽवश्यं कर्तव्यः, न त्वनभिधाने। तस्मादर्थशब्दस्य ग्रहणं चिन्त्यम्। अत एव दण्डिना - इष्टार्थव्यवच्छिन्ना पदावली काव्यमिति शब्दमात्रस्य काव्यत्वं निर्णीयते। पदावली पदानां समूहः।

यत्पुनः शब्दार्थयुगलस्यादोषत्वं सगुणत्वं चेति विशेषणद्वयम् - तदपि नादरणीयम्, सर्वथा निर्दोषस्य गुणपरिपूर्णस्य च वस्तुन एकान्ततोऽसम्भवात्। ब्रह्मैव केवलं निर्दोषं गुणपरिपूर्णं च, तदतिरिक्ते सर्वस्मिन्नपि वस्तुनि दोषसाहित्यस्य गुणवैकल्यस्य च दर्शनात्। स्यान्नाम त्रिगुणात्मके जगति सत्त्वाधिक्येन क्वचिद्वस्तुनि दोषाल्पत्वं गुणबाहुल्यं च तथापि रजस्तमसोरपि

सत्त्वेन न तस्मिन् अंशतोंऽशतो दोषस्य बाहुल्यं गुणस्य चाल्पत्वम्। ब्रह्मनिर्मिते ह्यस्मिन् जगति सर्वस्यापि वस्तुनो दोषसाहित्यं गुणवैकल्यं च दुष्परिहरम्। एवं वस्तुमात्रस्य सदोषत्वात् गुणपूर्णताविरहाच्च लक्षणेऽत्र असम्भवाख्यो दोषः।

अथ सङ्कटादस्मात्स्वात्मनः परिजिहीर्षया अदोषावित्यत्र अल्पार्थे नञः प्रयोग इत्याख्यायते, सगुणावित्यत्र चाल्पगुणावित्यर्थे तात्पर्यमित्याशय्यते तर्हि किञ्चिद्दोषं न्यूनगुणं च शब्दार्थयुगलं काव्यमित्यायाति। ततो दोषाणां गुणानां चाल्पतार्थं कविना प्रयत्तव्यमित्यनर्थापातः। अनेन परिहार्यस्य विधानम्, सञ्चेयस्य च नियमनमित्यनिष्टं स्पष्टम्। नहि दोषाभावार्थे गुणाधिक्यार्थे चोपदेशे किञ्चिद्दोषस्य किञ्चिद्गुणस्य च विधानं युज्यते। न च वक्तुरपि तद्भवति विवक्षितम्।

किञ्चाल्पत्वं सापेक्षम्। नह्येतावत्सु दोषेषु गुणेषु च सत्सु अल्पत्वं सम्भवतीत्यत्र निर्णायकं प्रमाणं किञ्चिदस्ति। अथ कथञ्चित्तादृशे प्रमाणे दर्शितेऽपि तथा विधानं न प्रज्ञावतां शोभनम्। तस्मात् तद्विशेषणद्वयमपि न साम्प्रतम्।

एवं क्वचिदनलङ्कृती अपीति विशेषणमपि नादर्तव्यम्, अलङ्कारवत्त्वस्य स्वरूपनिर्णायकत्वाभावेन उपलक्षणत्वात्। नह्युपलक्षणं कादाचित्कत्वेन लक्ष्यस्य ज्ञापकं चेदपि न सार्वदिकत्वेन। सार्वदिकमेव लक्षणं लक्षणम्। काकवद्देवदत्तस्य गृहमित्युक्तौ तत्काले देवदत्तगृहस्य ज्ञानेऽपि न सर्वदेति काकवत्त्वस्य यथा परिचायकत्वमात्रं तद्वदिहापि प्रकृतविशेषणस्य। अत एव को नाम पुरुष इति प्रश्नस्य कटकी कुण्डली दण्ड्युष्णीषी च प्राणिविशेष इति लक्षणं केनापि नाख्यायते। अथ तल्लक्षणं युक्तमिति भाव्यते तर्हि कटकित्वादिमान् काष्ठमयः पुरुषोऽपि पुरुष इत्युच्येत। किं बहुना? वानरादिरपि तथा कृतः तथोच्येत। तस्मादिदमपि विशेषणं तथा।

नन्वत्र भोः! अदोषौ सगुणौ सालङ्कारावित्यनेन दोषाणां वारणे,

गुणानामादाने, अलङ्काराणां सन्निवेशने च केवलं तात्पर्यमित्युच्यते - अस्तु तर्हि, तुष्यतु भवान् इत्युपसंहारवचनम् आचार्यस्य।

इदं युक्तमिति भाति - प्राचीनेषु कैश्चित्तथाभिधानात्। अत एव रमणीयार्थकः शब्दः काव्यमिति जगन्नाथः। अत एव सगुणत्वादिविशेषणं न युक्तमिति विश्वनाथः। स एवमाशेते - यत्र गुणाः सन्ति तादृशो रस एव केवलं सगुणो भवति, न तच्छून्यौ शब्दार्थौ। नह्यन्यगतो धर्मोऽन्यत्र विशेषमाधातुं शक्नोति। अथ सगुणावित्यस्य व्यञ्जकतारूपपरम्परासम्बन्धेन गुणवन्तावित्यभिप्रायः तर्हि तथाविधस्य गुणवत्त्वस्य काव्ये प्रकर्षाधायकत्वात् न तस्य लक्षणोदरे प्रवेशः। ये स्वरूपनिर्णायका धर्माः तेषामेव लक्षणे प्रवेशनम्, नहि यस्य कस्यचित्। तस्मादाचार्येण यदस्य लक्षणस्य निराकरणं तत्प्राचीनाचार्याणामपि सम्मतमेवेति बोध्यम्। निराकरणप्रकारस्तु केवलं भिद्यते॥

इत्थं मम्मटमतं प्रत्याख्याय वक्रोक्तिकारस्य मतं प्रत्याचक्षाणो वदत्याचार्यः - यत्पुनः वक्रोक्तिः काव्यजीवितमिति कुन्तकः - तन्न ग्राह्यम्, शाखाग्रे चन्द्र इत्यत्र शाखाग्रस्य चन्द्रं प्रति यथा परिचायकत्वं तथा काव्यं प्रति वक्रोक्तेः। नहि परिचायकं किञ्चित् पदार्थस्य असाधारणधर्मरूपं लक्षणं भवति। वक्रोक्तिशून्यमपि किञ्चिद्वाक्यं स्वभावोक्त्या घटितं काव्यं भवति, यथा - कुरङ्गैरुत्तरङ्गाक्षैः स्तब्धकर्णैरुदीक्षितम् इत्यादिकम्। अत्र कुरङ्गगतं वीक्षणं स्तब्धकर्णत्वादिरूपस्वधर्मवत्त्वेन यथावद्वर्ण्यते। नात्र विचित्रं प्रतिपादनमस्ति येन वक्रोक्तिरित्युच्येत। विचित्रमभिधानमेव वक्रोक्तिः, वैचित्र्यं च प्रतीयमानार्थद्योतकत्वमिति ध्वनावेव तस्यान्तःपात इति नायं नवीनः कश्चित्प्रकार इत्यभिप्रैति॥

एवं तर्हि ध्वनिरेव काव्यस्यात्मेति आनन्दवर्धनस्य मतमेव ग्राह्यत्वेन आपतितमिति चेत् - न, व्यङ्ग्यरूपस्य ध्वनेः नाट्ये नादे चित्रादावपि सत्त्वेन लक्षणस्यातिव्यापनात्। नहि नाट्यादिकं काव्यम्, दृश्याख्ये तु

काव्ये कामं तद्वर्तते। नहि तद्वृत्तितामात्रेण न तस्य तत्त्वं सम्भवति। नाट्यं नाम आकूताभिव्यञ्जकं हस्तादिचेष्टितम्, नादोऽव्यक्तवर्णः, चित्रं च स्वरूपाभिव्यञ्जक ऋजुकुटिलादिरेखाविन्यासः। एतेन यस्य काव्यत्वं तद्गतस्येवान्यस्यापि काव्यत्वप्रसङ्ग इति स्फुटमेव सदोषत्वम् ॥

वस्तुतस्तु शब्दार्थयुगलरूपे काव्ये आत्मा क इति जिज्ञासायां प्रधान व्यङ्ग्यरूपो ध्वनिरित्युक्तं ध्वनिकारेण। स्यान्नामायं व्यङ्ग्यो नाट्यनादादावप्यस्तीति - तावता न तस्य काव्यत्वं कथ्यमानं युज्यते? नहि काव्ये ध्वनिरात्मेति वदतः पुंसो ध्वनियुक्तं सर्वमपि काव्यमित्यभिप्रेतम्। अभिप्रेतं च ध्वनिः काव्ये सारभूतोऽर्थ इति। एतेनातिव्याप्तिः कथम्? यत्र यत्र धूमः तत्र तत्र वह्निरित्युक्तौ यथा धूमस्य वह्निना साहचर्यं प्रतीयते न तथा वह्नेर्धूमेण साहचर्यम्। तदत्र ध्वनिकारस्य वचनं नासङ्गतिं स्पृशतीति मे भाति ॥

एवं ध्वनिकारस्य मतं कटाक्षीकृत्य शब्दस्यैव काव्यत्वं मन्वानस्य विश्वनाथस्य मतं विचारयति। 'वाक्यं रसात्मकं काव्यम्' इति यत्तदुक्तं लक्षणम् - तन्न, यत्र नास्ति रसः, यथा - 'हनुमानब्धिमतरद्दुष्करं किं महात्मनाम्' इत्यादौ, तत्रापि काव्यत्वस्य अवस्थानात्। किञ्च रसशब्देन शृङ्गारादिरसमात्रस्य ग्रहणं नोचितम्, प्रत्युत रसनीयस्य सर्वस्यापि रसभावादेरर्थस्येति।

वस्तुतः अत्रापि आचार्यस्य मतमंशमात्रेण सङ्गतमिति मे मतिः, स्वयं तेनैव हि रसशब्देनात्र एकदेशस्य शृङ्गारादिरसमात्रस्य न ग्रहणम्, किन्तु रसाद्यष्टकस्येत्यभिधाय तदनुसारेणैव निरूपणं कृतम् ॥

शब्दमात्रस्य काव्यत्वमभ्युपयतोऽपि जगन्नाथस्य रमणीयार्थ-प्रतिपादकः शब्द इति यल्लक्षणं तदपि न युक्तमित्याचार्यः। तथाहि - शब्दः सर्वोऽप्यर्थवानेवात्र गृह्यते इति पूर्वमुदीरणात् रमणीयः शब्दः काव्यमित्येतावतैव लक्षणेनालम्। रमणीयत्वं शब्देऽर्थे चेति रमणीयमर्थं प्रतिपादयन् रमणीयः शब्दः काव्यमिति सिध्यति। किञ्चार्थो रमणीय इति यदुच्यते तत्रार्थे

रमणीयत्वस्य कथं निर्णयः? प्रमाणाभावात्। नहीदं रमणीयम् इदं चारमणीयमित्यत्र प्रमाणमस्ति। कश्चिदर्थः कस्यचिद्रमणीयोऽपि अन्यस्य कस्यचिदरमणीयो भवति, भिन्नरुचित्वाल्लोकस्य। अत एव श्रीहर्षः -

**यथा यूनस्तद्वत्परमरमणीयाऽपि रमणी**
**कुमाराणामन्तःकरणहरणं नैव कुरुते ॥**

यथा च सोमदेवः - या यस्याभिमता मूर्ख! सुरूपा तस्य सा भवेत् ॥ तदेवमनिर्णीतार्थकेन विशेषणेन घटितं लक्षणम् अनिर्णायकमेव सम्भवति।

ननु सहृदयस्य यद्रमणीयं तदेव रमणीयमिति कथमनिर्णयः? - एवं हि सहृदयत्वस्य कथं निर्णय इति पुनः पर्यनुयोगापत्तिः। यो रमणीयस्यास्वादकः स पुमान् सहृदयः, यश्च तेनास्वाद्यते स रमणीयोऽर्थ इति व्याख्याने अन्योन्याश्रयः, यथा वैयाकरणानां धातुपाठविषये। ते हि भू सत्तायाम्, अस भुवीत्यादि पठन्ति। तत्र भूवादीनां शब्दानां क्रियावचनत्वादेव धातुत्वम्, धातुत्वादेव क्रियावचनत्वमिति अन्योन्याश्रयः। तद्वदिदमपि लक्षणं न साम्प्रतम्।

## काव्यस्य लक्षणं किं भवितुमर्हति?

एवं तर्हि काव्यस्य लक्षणं किमिति पृष्ट आचार्यो ब्रवीति - अशब्दं प्रत्याययन् शब्दः काव्यम् ॥

ध्वननशील शब्द इति तदर्थः। स्ववाचकशब्दाभावेऽपि तदर्थप्रतिपादकः शब्द इति अस्यार्थः। स्वार्थबोधनद्वारा स्वाबोध्यमर्थान्तरं यो द्योतयति स शब्द इत्याचार्यकृतं विवरणम्। शब्द इत्येकवचनं जात्यभिप्रायेण। प्रत्याययनं द्योतनम्। 'एकः कृती शकुन्तेषु योऽन्यं शक्रान्न याचते' इत्यत्र 'सज्जनादन्यस्मिन् याचनाभाववान् पुरुषोऽयं धन्यः' इत्यर्थस्य प्रतिपादनाय शब्दस्याप्रयोगेऽपि तेन वाक्येन तदर्थस्य प्रतीतिर्भवति। तस्मात्तद्वाक्यं काव्यमिति विशदोऽर्थः।

न चैवं घटादिरित्युक्तौ पटादेः प्रत्ययात् काव्यत्वापत्तिरिति वाच्यम् - घट आदिर्यस्येत्यादिशब्देन पटादेरप्यभिधानात्। ततश्चात्र न द्योतनं किन्त्वभि-धानमेवेति दोषाभावः। काकेभ्यो दधि रक्ष्यतामित्यादौ यद्यपि काकशब्देन प्रतिपादकशब्दाभावेऽपि मार्जारादेः प्रतीतिर्भवति तथापि चमत्कारित्वाभावान्न दोषः। ननु चमत्कारित्वस्य लक्षणे निवेशनं नास्ति? - सत्यम्, शब्दस्य ह्यभिधानं द्योतनं चेति यद्व्यापारद्वयं तत्र घटादिशब्दस्य घटाद्यर्थेऽभिधानं व्यापारः, अग्निः पश्यतीत्यादौ तु अग्निशब्दस्य अग्निसदृशो माणवक इत्यादावर्थे द्योतनम्। तच्च द्योतनं प्रायेण चमत्कारीति द्योतनशब्देनैव तदर्थस्य सिद्धिः। एतेन द्योतनं चमत्कारगर्भमिति तस्य सत्त्वे काव्यत्वम्, असत्त्वे त्वकाव्यत्वमिति विभागः सिध्यति। नहि चमत्कारादृते काव्यत्वं भवति।

लक्षणायां व्यञ्जनायां च अर्थान्तरस्यावगमनं समानं किन्त्वेकत्र मुख्यार्थस्य बाधोऽपेक्ष्यते, अन्यत्र तु नेति विशेषः। न च व्यञ्जनायामपि तात्पर्यस्यानुपपत्तेः सद्भावात् मुख्यार्थबाधो नियत इति वाच्यम्, 'भगवति वसुन्धरे! देहि मे विवरम्' इति भवभूत्यादौ वाक्ये तात्पर्यानुपपत्तेरभावेऽपि अश्लीलार्थस्य व्यञ्जनात्। अतो मुख्यार्थबाधमन्तरेणापि व्यञ्जना समुन्मिषतीति स्फुटम्। तस्मान्मदुक्तमेव लक्षणं साधीय इत्येवमुपसंहरति ॥

**महाकाव्यलक्षणम्**

नगरार्णवशैलर्त्वादिकारिकाजातेन महाकाव्यस्य प्राचीनैः यल्लक्षणमुक्तं तत्प्रायिकम्, बहुषु महाकाव्येषु अनुपदोक्तानां सर्वेषां वर्णनस्याभावात्। ततश्चेदं लक्षणं दिग्दर्शनाभिप्रायेण कृतं न वस्तुस्थित्यनुरोधेन। ततश्च सम्भवे सति सर्वेषां वर्णनम्, अन्यथा त्वपेक्षितमात्राणामिति आचार्यस्याशयः।

युक्तश्चायम्, काव्यमार्गस्य प्रभावात्। नहि काव्यमार्गे शास्त्रमार्ग इव अव्याप्त्यादिदोषशून्यत्वेन निष्कृष्टं लक्षणमुच्यते। कुतः? - मन्दमतीनामत्र अधिकृतत्वात्। ते हि जलमेव पातुं न शक्नुवन्ति किं पुनः पायसम्? तस्मादत्र सर्वोऽप्युपदेशः प्रायेण पदार्थानां स्वरूपस्य दिग्दर्शनाय न तु अव्याप्त्यादि-

दोषशून्यतया तत्स्वरूपबोधनाय। तत्तावच्छास्त्रे। तत्र हि बुद्धिमन्तो अधिकारिणः। ते पायसेन सह माषभक्ष्यमपि लीलया खादन्ति। तस्मादेतेषां परिष्कृत एवोपदेशः, प्रकृतानां तु अनायासवेद्यः परिष्कार्यः। यदा पुनः क्रमेण वर्धमानबुद्धयः सन्तः शास्त्रमार्गमुत्तरत्र समाश्रयन्ति तदा तेषां वस्तुस्थितेः ज्ञानं भविष्यति।

यदि पुनस्त्वरयास्मिन् मार्गे शास्त्रमार्ग इवोपदेशः तर्हि कविकुलमद्य प्रविष्टश्छात्रः श्वो न दृश्येत, भीतश्च ततः परं तद्दिशाभिमुखं शिरः कृत्वापि न शयीत। तस्मात् काव्यमार्गे लक्षणादिकं प्रायिकं भवति। वचनमपि तदनुसारेणैव। एवं च केषाञ्चिदंशानां वैकल्येऽपि कस्यचित्प्रबन्धस्य महाकाव्यत्वं नूनं सम्भवतीति निर्विवादम्॥

एवं तत्रभवताचार्येण मध्वविजयस्य महाकाव्यत्वं निर्विवादं सम्भवतीति सोदाहरणं स्फुटीकृत्य मधुपानरतोत्सवादीनामपि काव्येऽस्मिन् कथञ्चित् सङ्गमनं शक्यम्, प्रसक्तानुप्रसक्त्या प्राप्तेषु वैकुण्ठपुरनिवासिषु तेषां वर्णनादित्यभिप्रैति। एतेन नायिकाया अभावेऽपि काव्यं भवितुमर्हति, यदि नायको विरक्तः, यथा प्रकृते काव्ये। अथ नायको रक्तः तर्हि काव्यं सनायिकमिति विषयविभागं व्यवस्थापयति।

तदनु सौन्दर्यौदार्येति सार्धकारिकाद्वयेन नायके ये गुणाः ते सर्वेऽपि नायके यथोदाहरणं निरूपिताः। एवं मध्वविजयस्य काव्यत्वमिव महाकाव्यत्वमपि सुघटमेवेति मन्यते।

**रसः**

अस्मिन् मध्वविजये रसः को भवितुमर्हतीति विचारे प्रवृत्त आचार्यः प्रथमं तावत् रससङ्ख्याविषयकं मतभेदं विचारयति। यद्यप्यालङ्कारिकेषु केचिदष्टावेव रसा इति वदन्ति, अन्ये च शान्तेन सह नवेति। वयं तु भक्तिरपि कश्चिद्रस इत्याचक्ष्महे इति वदन् तद्रसे भक्तिः स्थायिभावः, वर्णः शृङ्गारवच्छ्यामः, देवता च विष्णुरिति स्वाशयं प्रकटीकरोति। भक्तिर्नाम

प्रीतिः, सा च स्त्रीपुरुषगता शृङ्गारः, अवरगतोच्चविषया भक्तिः, तद्विपरीता च वात्सल्यमिति त्रिविधेति विवृणोति।

न चैवं भक्ते रसत्वे रसा दश स्युः, अष्टेति नवेति वा संख्यानियमो भज्यते इति वाच्यम् - एतेन न कापि हानिः, एतावन्त एव रसा इति राजाज्ञाया अभावात्। नन्वेवं सति वात्सल्यस्यापि रसत्वं एकादशत्वं च स्यादित्याक्षेपे चित्ते चिरावस्थानस्याभावादेव न तस्य रसत्वमिति नासङ्गतिरिति वक्ति तत्रभवान्।

इदमत्र ज्ञेयम् - मुनिवचनस्य नियामकत्वे तदुक्तदिशा अष्टावेव रसाः, वचनप्रामाण्यात्। शान्तस्यापि स्वीकार्यत्वमिति वादे नवेत्यपि युक्तम्, शान्तः प्रकृतिः शृङ्गारादयो विकृतय इति रसेषु प्रकृतिविकृतिभावस्योररीकरणेन विकृतीनामिव रसत्वेन प्रकृतेरपि परिगणनात्। विकृतिः चित्तस्यान्यथा-वस्थानम्, प्रकृतिः तस्यैव स्वरूपेणावस्थानम्। रसास्तु दशेत्यपि भवितुम् अर्हति, मुनिवचनस्य प्रायोवादत्वेन तदुल्लङ्घनस्यादोषत्वेन निर्णेतव्यत्वात्, विश्वनाथादिभिः तथैव परिगणनाच्चेति ॥

तत्रभवानयमाचार्यो रसं प्रकारान्तरेणापि विभजते। विभागश्चायं नालङ्कारिकेषु ग्रन्थेषु प्रसिद्धः। तथापि,

**आत्मचेतसन्निकर्षमात्रजातस्त्वलौकिकः।**
**बहिः स्वन्निकर्षेभ्यः स्यादुद्भूतस्तु लौकिकः ॥**

इति श्लोकं प्रमाणयन् रसोऽयमलौकिको लौकिकश्चेति द्विविधः। आत्मचित्तयोः सन्निकर्षात् जातो रसोऽलौकिकः, नयनबाह्यवस्तुसन्निकर्षाज् जातस्तु लौकिक इत्याशेते। यद्यपि विभागोऽयं रसमात्रस्य आहोस्वित् भक्तिमात्रस्येति सन्देहः तथाप्युत्तरत्र 'भक्तिरप्येवमलौकिकी भवति' इत्यपि शब्दघटितस्य वाक्यस्य परिशीलनेन रसमात्रस्येति विदितं भवति।

भक्तिरियं श्रीकृष्णे अर्जुनस्येव सख्यरूपा, यशोदादीनां वात्सल्यरूपा, गोपिकादीनां शृङ्गारमयी, नारदादीनां तु शुद्धेति चतुर्विधावलोक्यते।

अत्रान्येषामपि मतं दर्शयत्याचार्यः, तथाहि - केचित्तु रस एक एव, स च शृङ्गारः। नान्यो रसः। शृङ्गारश्च धर्मार्थकाममोक्षरूपपुरुषार्थभेदेन चतुर्धा, यथा -

**रसो वै स इति श्रुत्या रस एकः प्रकीर्तितः।**
**अतो रसः स्याच्छृङ्गार एक एवेतरे तु न॥**
**धर्मार्थकाममोक्षाख्यभेदेन स चतुर्विधः। इत्यादि।**

धर्मशृङ्गारादौ च यथाक्रमं धीरोदात्तादयो नायकाः। भक्तिश्चेयं शृङ्गारस्यैव प्रभेद इति॥ एतन्मतानुरोधेन विचारे रतौ नायिका नियमेन भवति, भक्तौ तु न तथा, तस्यां सत्यामसत्यां च सम्भवादित्येतावानेव विशेषः। अनया दृष्ट्या विवेचने भक्तेः शृङ्गारेऽन्तर्भावोऽपि युज्यते इत्यभिप्रैति।

## रीतिः

रीतौ विषयेऽपि आचार्येण भाषितम्। रीतिरात्मा काव्यस्येति वामनोक्तमनुवदता तेन वैदर्भी, लाटी, गौडी, पाञ्चाली चेति प्रभेदचतुष्टयं निर्दिश्य, तत्रापरुषपदबन्धा नातिदीर्घसमासा च रीतिर्वैदर्भी भवति, तत्सन्निकृष्टा शान्ताक्षरबहुला अदीर्घसमासा च लाटी, समासबहुला चोज्ज्वलवर्णा च गौडी, गौडीवैदर्भ्योर्मध्यगा च पाञ्चाली च। टवर्गशून्या वर्गेष्वाद्यतृतीयाः तदन्त्यसंयुक्ता यवलाश्च वर्णाः कोमलाः, धनौ रणौ शसौ हश्च शान्ता इति विवृत्य चतुर्णामप्येतेषां प्रभेदानां मध्वविजयगतानि उदाहरणान्यादाय विशदीकृतम्।

पर्यन्ते तु 'एतावता रीतेः प्रभेदचतुष्टयमिति न मन्तव्यम्। यद्यपि चत्वारः प्रभेदा मतान्तरानुसारात् वचनम्, श्लक्ष्णा तीक्ष्णा चेति प्रभेदद्वयमात्रमिति समुचितम्, समाहाररूपत्वात् पाञ्चालीति प्रभेदोऽपि भवितुमर्हति, यस्या एव कार्णाटीति नामान्तरमित्याशेते।

युक्तं चेदम्, वर्णास्तावत् संयुक्ता असंयुक्ताश्च कोमला रूक्षाश्चेति यथा द्वेधा विभक्तुं शक्यन्ते तथा पूर्वाभ्यां सह मध्यमा इति त्रेधापि। यदि द्वेधा विभागः तर्हि पाञ्चालीति सङ्कररूपा, अथ त्रेधा तर्हि तत्तद्वर्णघटित एकैकः प्रकार इत्यभिप्रायात् ॥

एवं पाकोऽपि नालिकेरपाको द्राक्षापाकश्चेति द्विविध इति कथयन् आद्यस्य 'आदौ ह्रस्वत्वेन वत्सानुसृत्याम्' (१२.३२) इति श्लोकम्, अन्त्यस्य च 'तदिदं वपुरस्य दृश्यते दलितेन्दीवरसुन्दरद्युति' (७.२३) इति श्लोकं च उदाहरन् प्रबन्धमिममुपसंहरति ॥

एवमत्र काव्यत्वम्, तद्गतं महत्त्वम्, नायकः तन्निष्ठं च गुणजातम्, रसो रीतिश्चेति यद्यदपेक्षितं तत्सर्वमपि प्रबन्धेऽस्मिन् तत्रभवताचार्येण सोदाहरणं निरूप्य श्रीमध्वविजयस्य महाकाव्यत्वं समर्थितम्। रमणीयश्चायं प्रबन्ध इति दिक् ॥

****

# छन्दोऽलङ्कारबन्धमीमांसा

**विद्वान् श्रेयस् प्रसन्नाचार्यः**

सुविदितमेव सर्वेषां यत् संस्कृतसाहित्यक्षेत्रं प्रति बन्नञ्जे गोविन्दाचार्याणां योगदानम् अद्वितीयं तथा अविस्मरणीयं च विद्यते इति। बहवः संस्कृतार्वाचीनाः पण्डिताः संस्कृतसाहित्ये स्वकीयानि काव्यानि विरचय्य संस्कृतभारत्याः सेवां चक्रुः। परन्तु एतेषु आकाशे विद्यमानचन्द्रमा इव नितरां शोभमानः विराजते अस्माकं पण्डितराजः गोविन्दाचार्यः। अस्मिन् लेखने 'सम्बन्धदीपिका' इत्याख्ये मध्वविजयस्य तेषां व्याख्याने के के नूतनाः विषयाः प्रकाशिताः इति वयमालोचयामः।

## सम्बन्धदीपिका

नारायणपण्डिताचार्याः आनन्दतीर्थभगवत्पादानां जीवनमाधारीकृत्य 'मध्वविजयः' इत्याख्यं शास्त्रकाव्यं प्रबन्धयामासुः। एतस्मिन् हि शास्त्रकाव्ये १६ सर्गाः १००६ श्लोकाः च रराजन्ते इति अमुं विषयं सर्वेऽपि अनुमन्यन्ते। एतस्य हि काव्यस्य वहूनि व्याख्यानानि प्रकाशितानि, अप्रकाशितानि चोपलभ्यन्ते, परन्तु प्रायः बहुषु व्याख्यानेषु अस्पष्टाः विषयाः अस्पृष्टाः विषयाः च 'सम्बन्धदीपिका' व्याख्याने आचार्यैः प्रकाशिताः।

छन्दोमीमांसा- द्विविधानि हि छन्दांसि भवन्ति। १.वर्णच्छन्दांसि, २.मात्राच्छन्दांसि। अत्र पुनः वर्णच्छन्दसि त्रैविध्यं विद्यते। १. समच्छन्दांसि, २. विषमच्छन्दांसि, ३. अर्धसमच्छन्दांसि चेति। मध्वविजये आहत्य ३९ वर्णच्छन्दांसि, ५ मात्राच्छन्दांसि विद्यन्ते इत्ययं प्रभेदः प्रायः आचार्यैः एव प्रकाशितः।

वयं सर्वे जानीमः यत् वर्णगणबद्धं वर्णच्छन्दः भवति, मात्रागणबद्धं मात्राच्छन्दः इति। अक्षरत्रितयात्मकः वर्णगणः। कलाचतुष्टयात्मकः मात्रागणः (कला कालविशेषः)। वर्णगणाः अष्टधा विद्यन्ते। मगण, नगण,

भगण, यगण, जगण, रगण सगण तगणः इति। परन्तु प्रायः अन्यैः व्याख्यानकारैः अप्रकाशितः विषयः अयं ''कस्य गणस्य का देवता?'' इति स्वकीये व्याख्याने गोविन्दाचार्यः स्पष्टममुं विषयं प्रतिपादयति

**मस्य भूमि देवता स्यात् सम्पत्तिः फलमिष्यते।**
**यस्य पाथो देवता स्यात् फलं वृद्धिः प्रकीर्तिता॥**

**रस्य वह्निर्देवता स्यात् फलं मरणमीरितम्।**
**सस्य वायुर्देवता स्यात् देशान्तरगतिः फलम्॥**

**तस्य आकाशो देवता स्यात् शून्यं फलं प्रकीर्तितम्।**
**जस्य सूर्यो देवता स्यात् रोगप्राप्तिः फलं मता॥**

**भस्य चन्द्रो देवता स्यात् फलं कीर्तिः उदाहृता।**
**नस्य नाको देवता स्यात् फलं सुखमच्युतम्॥**

अयं विषयः नाचार्यकपोलकल्पितः अपि तु कृष्णावधूतैः अनुमानितः इति स्वयं सप्रमाणं स्पष्टीकृतं सम्बन्धदीपिकायाम्।

**छन्दोदेवताः**

वर्णच्छन्दसु कस्य छन्दसः का देवता ? तत्र प्रमाणं किम् ? स्त्रीदेवता वा पुरुषदेवः वा अग्निपुराणवचनस्य समाधिः कः ? इति सर्वोऽपि विचारः आचार्यैः कृतः। तथाहि ऋग्वेदे अग्नेः गायत्र्यभवत् सयुग् वा उष्णिहया सविता संबभूव अनुष्टुभा सोम उक्थैः महस्वान् बृहस्पतेः बृहती वाचमावत् विराण् मित्रावरुणयोः अभिश्रीरिन्द्रस्य त्रिष्टुबिह भागो अह्नः। **विश्वान् देवान् जगत्या विवेश तेन चाक्लृप्र ऋषयो मनुष्याः॥ (ऋक् १०,१३०,४-५)**

एवञ्च वेदानुसारेण अयं देवानुक्रमः ज्ञातव्यः। गायत्र्याः (गायत्रीछन्दसः) अग्निपत्नी स्वाहा देवता। उष्णिहः सूर्यपत्नी संज्ञा। अनुष्टुभः चन्द्रपत्नी रोहिणी। बृहत्या बृहस्पतिपत्नी तारा। पङ्क्तेः मित्रावरुणयोः पत्न्यौ रेवतीगङ्गे। त्रिष्टुभः इन्द्रपत्नी शची। जगत्याः सर्वाः देव्यः मानिन्यः अधुना प्रश्नः उदेति

पिङ्गलनागवर्येण इयं श्रुतिः अन्यथा व्याख्याता अस्ति किल ? तदनुसारेण अग्निः गायत्र्याः देवः, सोमः उष्णिहः देवः..... एवमेवान्येषामिति। गोविन्दाचार्याः अमुं समाधिं दत्तवन्तः 'श्रुत्यर्थानवगतिजननी भ्रान्तिरेवायं पिङ्गलनागस्य'। इति समीचीनश्च इदमुत्तरं ''यतो हि स्त्रियः हि छन्दो देवताः भवन्ति। अत एव छन्दसां नियत्या स्त्रीलिङ्गेनैव व्यपदेशः। यदि अग्न्यादयः देवताः अभविष्यन्, नूनं तदा पुल्लिङ्गे एव व्यपदेशः दृश्येत। इति ॥ अत्र पुनः प्रश्नः अग्निपुराणेऽपि-

....................**'छन्दसां देवताः क्रमात्।**
**अग्निः,सूर्यः,शशी,जीवः, वरुणः चेन्द्र एव च।** इति (३३०-१९)

कथितमस्ति, अतः पिङ्गलनागवचनमेव समीचीनं स्यात् किल इति। परन्तु आपाततः एवायमर्थः। अत एव ऋग्भाष्ये अपि मध्वाचार्यः पिङ्गलनागेन उदाहृतमर्थं न अङ्गीचकार, अपि तु पूर्वोक्तम् एवार्थमङ्गीचकार।

तथाहि ऋग्भाष्ये उक्ताः देवताः-

**गायत्री बृहती चैव ताः सर्वाः गरुडस्तथा।**
**ब्रह्माण्यनुष्टुबिन्द्राणी त्रिष्टुप् स्वाहेति चोच्यते ॥**
**गायत्री जगती चैव वारुणी रोहिणी तथा।**
**अनुष्टुप् बृहती चैव तारा पङ्क्तिः शची तथा ॥**
**उष्णिक् सौरी, जगत्यश्च सर्वदेवस्त्रियो मताः।**
**विराण्मित्रावरुणयोः भार्ये इति च कीर्तिते ॥**
**अतिच्छन्दांसि सर्वाणि सर्वदेवस्त्रियो मताः** ॥ इति ॥

एतद् विहाय श्रीः, सरस्वती भारती चेति देवताः। एवञ्च समग्रदेवतानुक्रमः अयम्-

१. गायत्री= श्रीसरस्वती भारती गरुडः स्वाहा चेति।

२. उष्णिक्= सूर्यपत्नी सञ्ज्ञा।

३. अनुष्टुप्= सरस्वती रोहिणी।

४. बृहती= श्री सरस्वती भारती गरुडः बृहस्पतीपत्नी तारा च।

५. पङ्क्तिः= इन्द्रपत्नी शची, रेवती गङ्गा च

६. त्रिष्टुभ्= शची इति

एवं विस्तृतरूपेण छन्दोदेवतानां विषये विचारं प्रायः अन्ये व्याख्यान-काराः नैवाकुर्वन्। अयं विचारः अनपेक्षितः इति केचन वदेयुः, परन्तु किं छन्दः कां देवतां स्वनियामकत्वेन चिनोति इति विचारः सर्वसङ्गत एव।

**छन्दोविचारः-**

मध्वविजये विद्यमान अनुष्टुप् छन्दसः विषये किञ्चित् प्रस्तूयते। अनुष्टुभि बहवः प्रभेदाः विद्यन्ते- पथ्यावक्त्रम्, युग्मविपुला इत्यादि। यान् भेदान् मध्वविजयव्याख्याने गोविन्दाचार्याः प्रकाशितवन्तः तानेव वयमत्र स्वीकृतवन्तः। आचार्याणां मतानुसारेण 'अनुष्टुप्' छन्दसि विद्यमानप्रभेदेषु पञ्चभेदाः मध्वविजये प्रकाशिताः, ते च -

१. पथ्यावक्त्रम्, २. युग्मविपुला, ३. प्रमाणिका, ४. विद्युन्माला, ५. माणवकं चेति।

**पथ्यावक्त्रम्-** यत्र आद्याक्षरात् परं नगण-सगणौ न स्याताम्। चतुर्थाक्षरात् परं यगणः भवति अयुग्मयोः। युग्मयोः जगणः, तत्र पथ्यावक्त्रं नाम छन्दः भवति। तत्रोदाहरणं-

।ऽऽ ।ऽ।
**प्रकारं। प्रकटीक तुं मारभ्यवि रराम नो**
**(य) (ज)**

।ऽऽ ।ऽ।
**महीयोम तिमाहा त्म्याद् वैवश्येन खनन्ख लः**
**(य) (ज)**

२. **युग्मविपुला**- युग्मविपुलाया चत्वारः प्रभेदाः अत्र दृश्यन्ते- प्रथमपादे तृतीये पादे वा भगणोपेता, रगणोपेता, नगणोपेता, मगणोपेता। तेषामुदाहरणानि यथा सम्बन्धदीपिकायां प्रतिपादितानि तथा प्रदर्श्यंते-

ऽ।। ।ऽ।

**नात्यत्वरा। नातिर। या। नस्खलन्ती। निरन्त। रा**

**(भ) (ज)**

ऽ।। ।ऽ।

**अनानाव। यवेत्ये। व दवीयोभिः। प्रतर्कि। ता (१५-४)**

**(भ) (ज)**

३.**प्रमाणिका**- 'प्रमाणिका जरलगा न यतिः पादमध्यगा'। इयं प्रमाणिका जगणेन रगणेन लघुगुरुभ्यां च पादवती भवति।

।ऽ। ऽ।ऽ । ऽ

**क्वचिच्छि। लाच्छटा। भ्र। मा**

।ऽ। ऽ।ऽ । ऽ

**दमुंस। सङ्गम। त्य। जन्**

४. **विद्युन्माला**- यत्र अष्टौ अपि अक्षराणि गुर्वक्षराणि एव भवन्ति, तत्र विद्युन्माला छन्दः भवति। 'विद्युन्माला ममगगा यतिः विधिमुखैः युगैः।'

ऽ ऽ ऽ ऽ ऽ ऽ ऽऽ

**स त्यो च्छे। दे स्वे च्छा। या तं**

ऽ ऽ ऽ ऽ ऽऽ ऽ ऽ

**व्या घ्रा का। रं दै त्य। व्या घ्रम् ॥(१०.२३)**

एवमन्यानि अपि बहूनि छन्दांसि लक्षणपूर्वकं निरुपितानि विद्यन्ते। प्रायः अन्ये व्याख्यानकाराः लक्षणमुक्त्वा विरमन्ति। परन्तु गोविन्दाचार्याः लक्षणं कथयित्वा तत्र विद्यमानावान्तरभेदान् उदाहृत्य तेषां (अवान्तरभेदानां) लक्षणानि विलिख्य लक्षणस्य लक्ष्ये विद्यमानत्वं तथा अविद्यमानत्वं च सम्यक् परीक्षयन्ति इति अहो अस्मद्भाग्यं यत्ते माध्वकुले अवतीर्णाः सम्बभुवुः।

## बन्धमीमांसा

प्रायः मध्वविजयस्य व्याख्यानकारेण केनापि श्लोकेषु विद्यमानबन्धविषये तादृशं चिन्तनं न कृतं यादृशं सम्बन्धदीपिकायां भाति। तत्र हि १. सर्वतोभद्रबन्धः २. चक्रबन्धः इत्यादीन् उल्लिख्य स्वयमेव व्याख्यानकारः स्वपद्यरचनाकौशलेन अन्यबन्धेषु अनेकान् श्लोकान् रचयित्वा बन्धमीमांसां पूरयति। तथाहि

१. सर्वतोभद्रबन्धः

**समानया यानमासा मायया ततया यमा।**
**नयासना नासयान यातनाललनातया ॥**

| स | मा | न | या | या | न | मा | स |
|---|---|---|---|---|---|---|---|
| मा | य | या | त | त | या | य | मा |
| न | या | स | ना | ना | स | या | न |
| या | त | ना | ल | ल | ना | त | या |
| या | त | ना | ल | ल | ना | त | या |
| न | या | स | ना | ना | स | या | न |
| मा | य | या | त | त | या | य | मा |
| स | मा | न | या | या | न | मा | स |

**चक्रबन्धः**

इमौ मध्वविजये एव प्रसिद्धौ श्लोकौ तत्र विद्यमानबन्धौ च। अन्यबन्धविषये यद्यपि सुस्पष्टाः श्लोकाः नोपलभ्यन्ते इति आचार्यः स्वयमेव श्लोकान् संस्त्य तद्विवरणं च कृतवान् विद्यते।

**खड्गबन्धः यथा**

> पातु हैयङ्गवीनस्य हर्त्री सकलपालनी।
> नीलनीरदनीकाशा कैशोरी कापि सा कृपा॥
>
> पाशबन्धलसत्कुक्षिनिक्षिप्ताखिलविष्टपा।
> पावनी ननु सा वीशाहीशादिभिरनुस्मृता ॥

**मुसलबन्धः-**

पाहि देव रमाभूमीजानिरात्मेष्टदः पिता।
तानयित्वा किल निजानीश्शो गतिमजार्

कुलालचक्रबन्धः

या मे गदाभृन्निजतारमाया
या मारता भक्तनरावना या ।
या नावरा सर्वगता विभाया
या भाविता पातु सदागमज्ञेया ॥

**अलङ्कारमीमांसा-**

सर्वप्रसिद्धमेवैतत् शास्त्रे अलङ्कारस्य द्वेधा गतिः कल्पिता इति। १. शब्दालङ्कारः २. अर्थालङ्कारः। यत्र शब्दचमत्कारः भाति तत्र शब्दालङ्कारः भवति। यत्र च अर्थचमत्कारः तत्रैव च अर्थालङ्कारः दृश्यते। मध्वविजये शब्दालङ्कारार्थालङ्कारयोः उभयोरपि प्रयोगबाहुल्यं दरीदृश्यते।

**शब्दालङ्कारः-**

शब्दालङ्कारे प्रसिद्धः अलङ्कारः अनुप्रासालङ्कारः, अयं च शब्दानामनुवर्तनेन सञ्जायते। एषः त्रेधाविभक्तः विद्यते। १. छेकानुप्रासः २. वृत्यनुप्रासः ३. लाटानुप्रासः इति व्यवधानं विना सजातीयवर्णद्वयस्य

द्वित्राणां वा वर्णानाम् व्यञ्जनानां वा आवर्तनं छेकानुप्रासः मध्वविजये छेकानुप्रासः बहुत्र दृश्यते इति आचार्याः-

१. विषं विषण्णो विषभृद्गणोऽतः १.३१

२. नानावनेषु चरतश्चरतस्तृणानि २.४५

३. शरणतो रणतो निरगान्नृभिः ३.०२

४. अयि कृपालय पालय बालकं ३.१५

५. भुजे भुजेनाशु भुजङ्गशायिना ४.३७

६. उवाच वाच परिहासहासवान् ५.१७

७. मान मानमयतीह कथं नो ६.१२

८. कमला कमला सनानिलैः ७.२५

यमकम्- यमकमपि अनुप्रासभेद एव। ''असकृदेकानुपूर्वीकवर्णसमूहघटितं यमकम् इत्याचक्षते।'' इदं यमकं पादादिगं पादमध्यगं, पादान्त्यगं, त्रिपादगं, द्विपादगम्, अन्त्यपादगमित्यादिभेदेन बहुविधम् ॥

**बहुसत्वगणं सविकं समहा**
**''विषमोक्षमहाहिमवन्तमयम्।**
**विषमोक्षमहाहिमवन्तमयम्''**
**नगमैक्षत फुल्लदृगस्तभयः** ॥ (६.५५)

**''यमशेषभवप्रभवः स्मरता**
**मसुखाब्धिरपैति न चित्रमिदम्।**
**मरुतीदृशि भान्ति हि यत्स्तवने**
**यमशेषभवप्रभवः स्म रताः''** ॥ (१०.०७)

अत्र आद्यं द्वितीयतृतीयपादयोः यमकं, द्वितीयं प्रथमचतुर्थपादयोः यमकम्। **यथा- प्रथमतृतीययोः यमकम्**

**वैकुण्ठे ते श्रीविशेषा जनाना**
मत्याश्चर्यं चित्तवाचामभूमिः।
वैकुण्ठते श्रीविशेषाजनाना
मुक्तश्लाघ्ये युक्तमेतादृशत्वम् ॥ (११.७५ )

यथा द्वितीयचतुर्थयोः

**सन्मात्सर्यं बद्धमूचेऽशुभानां**
**वाचालोलं कोऽपि गां धारकस्य।**
**मध्ये तेषां नीचनीत्या समानो**
**वाचालोऽलं कोऽपि गान्धारकस्य** ॥ (१२.०३)

सर्वपादवृत्तियमकं पादमध्यगतं

**जननं समयेसमये जगतः**
**प्रथिते समये समयेदमिते।**
**सनिरासमयेऽसमये स्थितियुक्**
**स्ववभासमयेऽसमयेष्टधिया** ॥ (१०.४५)

## अर्थालङ्कारः

अर्थालङ्कारे प्रायः सर्वेषां मनसि प्रथममेव आयाति उपमालङ्कारः। परन्तु काव्ये उपमालङ्कारार्थं ये शब्दाः सादृश्यवाचकत्वेन दण्डिना सूचिताः प्रायः सर्वान् अपि तान् शब्दानुपयुज्य नारायणपण्डिताचार्यः श्लोकान् अरचयत् इति कथयन्ति कलिकालसर्वज्ञाः गोविन्दाचार्याः।

दण्डी-

**इव वद् वा यथाशब्दाः समान निभ सन्निभाः।**
**तुल्य सङ्काश नीकाश प्रकाश प्रतिरूपकाः॥**

**सदृक् सदृश संवादि सजातीयानुवादिनः**
**प्रतिबिम्ब प्रतिच्छन्द सरूप सम सम्मिताः** ॥

**गरुडतुण्डमिव प्रतिपन्नवान् ३.४०**

**द्विजमण्डलस्थशशिमण्डलवत् ११.१५**

**मध्ये तेषां नीचनीत्या समानो १२.०३**

**स्फुटशोणोपलपङ्क्तिसन्निभः ७.४४**

**ब्रह्म ब्रह्मसमो ददौ १५.९७**

साधर्म्यात् अभेदारोपः रूपकम्। तदपि मध्वविजये बहुत्र विद्यते इति आचार्याः

१. रसोज्झिताचञ्चलवृत्तयोऽलं शोभां न भेजुः सुरवैरिमेघाः

२. स्वशिष्यहस्तेन मठान्तरेषुधेः सुपक्षदक्षं सुखतीर्थमार्गणम्।

तदित्थं बह्वर्थगर्भमिदं व्याख्यानं निर्माय दत्तवते आचार्याय सभक्तिश्रद्धं प्रणामं निवेद्य विरम्यते।

*****

# 'कादम्बरी' एका समीक्षा

**डा. सुशीलेन्द्राचार्यः गोग्गि**

बन्नञ्जे गोविन्दाचार्यः न केवलं माध्ववेदान्ते कृतभूरिपरिश्रमः, स्वयं कविः, विमर्शकश्च वर्तते। संस्कृतसाहित्यप्रपञ्चे एका भणितिः प्रथिताऽस्ति - **'गद्यं कवीनां निकषं वदन्ति'** इति। तथैव - **कादम्बरीरसज्ञानाम् आहारोऽपि न रोचते।** तेन इदं ज्ञायते - संस्कृतसाहित्ये गद्यरचना, तदर्थावगमश्च नैव सुलभः, तद्विषयम् अनुलक्ष्य आचार्यः बाणभट्टस्य कादम्बरीं विमृशति। तत्र पीठिकाभागे संस्कृतसाहित्यस्य गद्यरचनायाः विषये लिखति-

कस्यचनाऽपि देशस्य साहित्यं तदीयराष्ट्रीयगरिम्णः भवति दोधूयमानं देदीप्यमानं च ध्वजम् । तद्भवति समाजस्य दर्पणः । समाजस्य सर्वासामपि भावनानां किञ्च परिवर्तनशीलानां विचारधाराणां तत्र प्रतिबिम्बितत्वात् । तस्मात् कश्चित् भारतीयसमाज-भावना-रीति-कलापं ज्ञातुं कामयते तदा संस्कृतसाहित्यम् अनुशीलयेत्। यतो हि-संस्कृतसाहित्ये यत्र उत्कृष्टोत्कृष्टतराणि महाकाव्यानि रूपकाणि गीतकाव्यानि च शोभन्ते तत्रानवद्या रमणीयगद्यरचनाश्च भूयस्यः परिस्फुरन्ति ॥

संस्कृतसाहित्ये दण्डी, बाणः,सुबन्धुः त्रयः प्राचीनाः गद्यकवयः गण्यन्ते। याः याः विशिष्टताः सुन्दरताश्च शोभन्ते पूर्वतनानां गद्यकवीनां कृतिषु ताः सर्वाः ललिततरां उत्कृष्टतां प्राप्ताः बाणकवेः कृतिषु । अतः गद्यकविषु बाण एव श्रेष्ठः । संस्कृतसाहित्ये आलङ्कारिकेन दण्डिना गद्यम् एवं विभज्यते । काव्यादर्शे :-

**तत्कथाख्यायिकेत्येका जातिः संज्ञाद्वयात्मिका ।**

तथा च एका कथा अपरा आख्यायिका इति । तदनुरोधेन आख्यायि-कात्मकं हर्षचरितं कथात्मिकां च कादम्बरीं च आरचयत बाणभट्टः।

बाणस्य कादम्बरी एकः कथाग्रन्थः । स्वयमेव कविना- 'धिया निबद्धा इयमतिद्वयी कथा' इति कादम्बर्याः कथाग्रन्थत्वम् उक्तम् । कादम्बर्यामुक्तकथा गुणोदयनामकेन कृतायाः बृहत्कथायाः संगृहीता। बृहत्कथातः सुमनस-नामराज्ञः साधारणीं कथां स्वीकृत्य, बाणभट्टः काव्यकलानैपुण्येन कादम्बरीं रचितवान् ।' इति ॥

**कादम्बर्यां रसः-**

'न हि रसादृते कश्चित् पदार्थः प्रवर्तते" "वाक्यं रसात्मकं काव्यं इत्यादि वाक्यपर्यालोचनया भारतीयविद्वांसः काव्येषु रसस्योन्नतस्थानं दत्तवन्तः इति ज्ञायते। पद्यकाव्येषु रसस्य अवगमः सुलभः। परन्तु नैषः मार्गः गद्यकाव्येषु इति आलोच्य आचार्यः कादम्बर्यां रसः कः ? इति विवृणोति-

कादम्बर्यां पुण्डरीक महाश्वेतयोः चन्द्रापीड-कादम्बर्योः, प्रणयकथापूर्वक विप्रलम्भशृङ्गारः, शुकनास-चन्द्रापीडयोः सम्भाषणपूर्वकराजनीतिः, अपुत्रायाः विलासवत्याः विलापपूर्वकधर्मोपदेशः इत्यादयः तत्र तत्र वर्णिताः ॥

तत्र प्रधानः नायकः कादम्बरी एका जन्मजन्मान्तरकथानुलम्बिनी। चन्द्रापीडः, नायिका च कादम्बरी। अवान्तरकथायाः पुण्डरीकमहाश्वेते। इयं बाणस्य अपूर्णाकृतिः । शूद्रकराज्ञः शुकस्य च सम्भाषणादारब्धा कृतिः, शुकनासकादम्बर्योः प्रथमानुरागः वियोगान्तः समाप्यते। तदुत्तरत्र तत्पुत्रेण भूषणभट्टेन पित्रादेशात् पूर्णीकृता। पुण्डरीकमहाश्वेतयोः चन्द्रापीड-कादम्बर्योः समागमपर्यन्तम् उपवर्णितं दृश्यते ॥

कादम्बर्यां रसः कः इति जिज्ञासायां उत्तरार्धे पुलिन्दभट्टः'

**कादम्बरीरसभरेण समस्त एव**
**मत्तो न किञ्चिदपि चेतयते जनोऽन्यम्** । इत्यादि ।

कविकुलतिलकः बाणभट्टः प्रसङ्गानुकूलेन विविधरसानां अभिव्यञ्जकः

आसीत् इति विज्ञायते । तथा च पुण्डरीक-चन्द्रापीडयोः मरणानन्तरमपि पुनर्जीवने आशा आसीत्, कादम्बरी-महाश्वेतयोः । अतः विप्रलम्भश्रृङ्गाररसः प्रधानम्, उत्तरार्धे च करुणा-विप्रलम्भः इत्युक्तम् । इति ॥

## रचना शैली

कादम्बर्याः रचना पाञ्चालीरीतिं अनुसरति । तत्र तत्र गौडीरीतिमपि अनुसरति ।

**नवोऽर्थो जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो रसः ।**
**विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुर्लभम् ॥**

इति दुर्लभत्वेन यदुक्तं तदत्र कादम्बय सुलभम् इति महागौरवजनकम् इति अस्य कवेः साहित्ये ऽन्यत्र दुरापः इति ज्ञायते ॥

अयं बाणः यत्र दीर्घतरान् समासान् च प्रयुङ्क्ते विकटानि वाक्यानि सृजति । श्लेषादि अलङ्कारेण चित्रितं तानि स्थलानि सन्त्येव एवं विधानि । यष्टि तेषां वर्णनं तथा विधया न कृतं स्यात् तर्हि तेषां स्वारस्यं तद्गतं च वैशिष्ट्यं प्रतिभाति ॥

अपि च न केवलं दीर्घसमासां वाक्यावलिं रचयित्वा वाचकानां पुरतः वर्णनबाहुल्यम् उपस्थापयति तत्रैव लघुवाक्यानि प्रयुज्यते हृदि क्लेषं निवारयति अज्ञ दृष्टान्तः -

**"अथ तस्य हरजटाकलापस्य चन्द्रलेखेव, कौस्तुभप्रभेव कैटभारति-वक्षःस्थलस्य, चन्दनवनराजिरिव मलयस्य फणामणिशिखेव शेषस्य भूषणमभूत् त्रिभुवनविस्मयजननी सकलान्यःपुरप्रधानभूतमहिषी विलासवती नाम" । अपि च**

**काव्यशोभाकरान् धर्मान् अलङ्कारान् प्रचक्षते ।** इति वाक्यानुसारेण श्लेषादि शब्दालङ्कारेण, उपमादि अर्थालङ्कारेण कादम्बरीं निर्वर्ण्य, तस्याः शोभाम् अवर्धयत कविना ।

सुलभतया प्रवेशः वर्णितः अपि च कादम्बर्यां चित्रिता सामाजिकस्थितिः सा कविसमानकालेनैव । तस्मिन् काले वर्णव्यवस्था आसीत्, परन्तु वर्णव्यवस्थायां सामरस्यम् आसीत्। अतः चान्डालकन्यायाः अपि राज्यसभायां चतुर्वर्णस्थाः अपि जनाः स्वं स्वं कर्म कुर्वन्तः आसन्। अतः ब्राह्मणः शुकनास मन्त्रित्वेन नियोजितः, राजा तारापीडः तद्वचः सर्वं परिपालयति । अपि गुणज्येष्ठशर गुरूणां च गौरवकरणे विशिष्टताऽऽसीत्। चन्द्रापीडः अमात्यस्य ब्राह्मणस शुकनासस्य उपदेशम् अनुसरति ।

## कादम्बर्यां सामाजिकस्थितिः

समर्थशिक्षणे समीचीनाः रीतिः आसीत् । शिक्षणसमये शिक्षामपि दातु गुरवः । विभिन्नानां नृत्य-द्यूत-चित्रकलानामपि प्रचलनम् आसीत् ॥

बाणभट्टः देशाटनं बहु अकामयत। देशसञ्चारेण अनेकेषामपि राज्ञाम् उन्नतिं वीक्ष्य, तस्य ज्ञानं बहुधा विकासं प्राप्तं तत्सर्वमपि सः बाणः शुकना-समुखेन कादम्बर्यां बन्धयामास। तद्यथा-इहजगति किम्स्विदस्ति यथेयमनार्या। लब्धापि खलु परिपाल्यते। दृढगुणपाशसन्धान- निस्पन्दी-कृतापि नश्यति । न परिजयं रक्षति। नाभिजनं ईक्षते । न कुलक्रमम् अनुवर्तते। न शीलां पश्यति । न श्रुतम् आकर्षयति । न धर्मानुरुध्यते । न त्यागमाद्रियते। न विशेषज्ञतां विचारयति । गन्धर्वनगरलेखेव पश्यत एव नश्यति ।

## उपसंहारः

सरस्वत्याः वरपुत्रः शब्दप्रयोगस्य अप्रतिमशिल्पी भावस्य सूक्ष्मदर्शकः बाण इव स्वकादम्बरीसमीक्षकेन संस्कृत-साहित्यस्य नूतनः मार्गः अन्वेषितः। इति मदीयं लेखं समापयामि ॥

*****